ष्ठिनः ॥ ३ ॥ एकं कल्पसहस्रन्तु ब्रह्मणोऽब्दः प्रकीर्त्तितः । एतदष्टसहस्रन्तु ब्रह्मणस्तद्युगं स्मृतम् ॥ ४ ॥ एकं युगसहस्रन्तु सवनं तत् प्रजापतेः । सवनानां सहस्रन्तु द्विगुणं त्रिवृतं तथा ॥ ५ ॥ ब्रह्मणः स्थितिकालस्य चैतत् सर्वं प्रकीर्तितम् । तस्य संख्यां प्रवक्ष्यामि पुरस्ताद्वै यथाक्रमम् ॥ ६ ॥ अष्टाविंशतिर्ये कल्पा नामतः परिकीर्तिताः । तेषां पुरस्ताद्वक्ष्यामि कल्पसंज्ञां यथाक्रमम् ॥ ७ ॥ रथन्तरस्य साम्नस्तु उपरिष्टान्निबोधत । कल्पान्ते नामधेयानि मन्त्रोत्पत्तिश्च यस्य या ॥ ८ ॥ एकोनविंशकः कल्पो विज्ञेयः श्वेतलोहितः । यस्मिंस्तत् परमध्यानं ध्यायतो ब्रह्मणस्तथा ॥ ९ ॥ श्वेतोष्णीषः श्वेतमाल्यः श्वेताम्बरधरः शिखी । उत्पन्नस्तु महातेजाः कुमारः पावकोपमः ॥ १० ॥ भीमं मुखं महारौद्रं सुघोरं श्वेतलोहितम् । दीप्तं दीप्तेन वपुषा महास्यं श्वेतवर्चसम् ॥ ११ ॥ तं दृष्ट्वा पुरुषः श्रीमान् ब्रह्मा वै विश्वतोमुखः । कुमारं लोकधातारं विश्वरूपं महेश्वरम् ॥ १२ ॥ पुराणपुरुषं देवं विश्वात्मा योगिनां चिरम् । ववन्दे देवदेवेशं ब्रह्मा लोकपितामहः ॥ १३ ॥ हृदि कृत्वा महादेवं परमात्मानमीश्वरम् । सद्योजातं ततो ब्रह्म ब्रह्मा वै समचिन्तयत् । ज्ञात्वा मुमोच देवेशो हृष्टो हासं जगत्पतिः ॥ १४ ॥ ततोऽस्य पार्श्वतः श्वेता ऋषयो ब्रह्मवर्चसः । प्रादुर्भूता महात्मानः श्वेतमाल्यानुलेपनाः ॥ १५ ॥ सुनन्दो नन्दकश्चैव विश्वनन्दोऽथ नन्दनः । शिष्यास्ते वै महात्मानो यैस्तु ब्रह्म ततो वृतम् ॥ १६ ॥ तस्याग्रे श्वेतवर्णाभः श्वेतनामा महामुनिः । विजज्ञेऽथ महातेजा यस्माज्जज्ञे नरस्त्वसौ ॥ १७ ॥ तत्र ते ऋषयः सर्वे सद्योजातं महेश्वरम् । तस्माद्विश्वेश्वरं देवं ये प्रपश्यन्ति वै द्विजाः । प्राणायामपरा युक्ता ब्रह्मणि व्यवसायिनः ॥ १८ ॥ ते सर्वे पापनिर्म्मुक्ता विमला ब्रह्मवर्चसः । ब्रह्मलोकमतिक्रम्य ब्रह्मलोकं व्रजन्ति च ॥ १९ ॥ वायुरुवाच ॥ ततस्त्रिंशत्तमः कल्पो रक्तो नाम प्रकीर्त्तितः । रक्तो यत्र महातेजा रक्तवर्णमधारयत् ॥ २० ॥ ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः । प्रादुर्भूतो महातेजाः कुमारो रक्तविग्रहः । रक्तमाल्याम्बरधरो रक्तनेत्रः प्रतापवान् ॥ २१ ॥ स तं दृष्ट्वा महादेवं कुमारं रक्तवाससम् । ध्यानयोगं परङ्गत्वा बुबुधे विश्वमीश्वरम् ॥ २२ ॥ स तं प्रणम्य भगवान् ब्रह्मा परमयान्वितः । वामदेवं ततो ब्रह्मा ब्रह्मात्मकं व्यचिन्तयत् ॥ २३ ॥ एवं ध्यातो महादेवो ब्रह्मणा परमेष्ठिना । मनसा प्रीतियुक्तेन पितामहमथाब्रवीत् ॥ २४ ॥ ध्यायता पुत्रकामेन यस्मात्तेहं पितामहः । दृष्टः परमया भक्त्या ध्यानयोगेन सत्तम ॥ २५ ॥ तस्माद्ध्यानं परं प्राप्य कल्पे कल्पे महातपाः । वेत्स्यसे मां महासत्त्व लोकधातारमीश्वरम् । एवमुक्त्वा ततः शर्वः अट्टहासं मुमोच ह ॥ २६ ॥ ततस्तस्य महात्मानश्चत्वारश्च कुमारकाः । सम्बभूवुर्म हात्मानो विरेजुः शुद्धबुद्धयः ॥ २७ ॥ विरजश्च विवाहश्च विशोको विश्वभावनः । ब्रह्मण्या ब्रह्मणस्तुल्या वीरा अध्यवसायिनः ॥ २८ ॥

रक्ताम्बरधराः सर्वे रक्तमाल्यानुलेपनाः । रक्तभस्मानुलिप्ताङ्गा रक्तास्या रक्तलोचनाः ॥ २९ ॥ ततो वर्षसहस्रान्ते ब्रह्मण्या व्यवसायिनः । गृणन्तश्च
महात्मानो ब्रह्म तद्वामदैवकम् ॥ ३० ॥ अनुग्रहार्थं लोकानां शिष्याणां हितकाम्यया । धर्मोपदेशमखिलं कृत्वा ते ब्राह्मणाः स्वयम् । पुनरेव महा
देवं प्रविष्टा रुद्रमव्ययम् ॥ ३१ ॥ येऽपि चान्ये द्विजश्रेष्ठा युञ्जाना वाममीश्वरम् । प्रपद्यन्ति महादेवं तद्भक्तास्तत्परायणाः ॥ ३२ ॥ ते सर्वे पापनिर्मुक्ता
विमला ब्रह्मवर्चसः । रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ३३ ॥ इति श्रीमहापुराणे वायुप्रोक्ते कल्पसंख्यानिरूपणं नाम द्वाविंशोऽध्यायः॥२२॥
वायुरुवाच ॥ एकत्रिंशत्तमः कल्पः पीतवासा इति स्मृतः । ब्रह्मा यत्र महातेजाः पीतवर्णत्वमागतः ॥ १ ॥ ध्यायतः पुत्रकामस्य ब्रह्मणः परमे
ष्ठिनः । प्रादुर्भूतो महातेजाः कुमारः पीतवस्त्रवान् ॥ २ ॥ पीतगन्धानुलिप्ताङ्गः पीतमाल्यधरो युवा । पीतयज्ञोपवीतश्च पीतोष्णीषो महाभुजः ॥ ३ ॥
तं दृष्ट्वा ध्यानसंयुक्तं ब्रह्मा लोकेश्वरं प्रभुम् । मनसा लोकधातारं ववन्दे परमेश्वरम् ॥ ४ ॥ ततो ध्यानगतस्तत्र ब्रह्मा माहेश्वरीं पराम् । अपश्यद्गां
विरूपां च महेश्वरमुखच्युताम् ॥ ५ ॥ चतुष्पदां चतुर्वक्त्रां चतुर्हस्तां चतुःस्तनीम् । चतुर्नेत्रां चतुःशृङ्गीं चतुर्दंष्ट्रां चतुर्मुखीम् । द्वात्रिंशल्लोकसंयुक्ता
मीश्वरीं सर्वतोमुखीम् ॥ ६ ॥ स तां दृष्ट्वा महातेजाः महादेवीं महेश्वरीम् । पुनराह महादेवः सर्वदेवनमस्कृतः ॥ ७ ॥ मतिः स्मृतिर्बुद्धिरिति गायमानः
पुनः पुनः । एह्येहीति महादेवी सोत्तिष्ठत् प्राञ्जलिर्भृशम् ॥ ८ ॥ विश्वमावृत्य योगेन जगत्सर्वं वशीकुरु । अथ वा महादेवेन रुद्राणी त्वं भविष्य
सि । ब्राह्मणानां हितार्थाय परमार्थं भविष्यसि ॥ ९ ॥ अथैनां पुत्रकामस्य ध्यायतः परमेष्ठिनः । प्रददौ देवदेवेशश्चतुष्पादां महेश्वरीम् । ततस्तां
ध्यानयोगेन विदित्वा परमेश्वरीम् ॥ १० ॥ ब्रह्मा लोकनमस्कार्यः प्रपद्य तां महेश्वरीम् । गायत्रीन्तु ततो रौद्रीं ध्यात्वा ब्रह्मा सुयन्त्रितः ॥ ११ ॥
इत्येतां वैदिकीं विद्यां रौद्रीं गायत्रीमर्पिताम् । जपित्वा तु महादेवीं रुद्रलोकनमस्कृताम् । प्रपन्नस्तु महादेवं ध्यानयुक्तेन चेतसा ॥ १२ ॥ ततस्त
स्य महादेवो दिव्यं योगं पुनः स्मृतः । ऐश्वर्यं ज्ञानसम्पत्तिं वैराग्यं च ददौ पुनः ॥ १३ ॥ अथाट्टहासं मुमुचे भीषणं दीप्तमीश्वरः । ततोऽस्य सर्वतो
दीप्ताः प्रादुर्भूताः कुमारकाः ॥ १४ ॥ पीतमाल्याम्बरधराः पीतगन्धविलेपनाः । पीतोष्णीषशिरस्काश्च पीतास्याः पीतमूर्द्धजाः ॥ १५॥ ततो वर्षसह
स्रान्ते उषित्वा विमलौजसः । योगात्मानस्ततः स्नाता ब्राह्मणानां हितैषिणः ॥ १६ ॥ धर्मयोगबलोपेता ऋषीणां दीर्घसत्रिणाम् । उपदिश्य तु ते
योगं प्रविष्टा रुद्रमीश्वरम् ॥ १७ ॥ एवमेतेन विधिना प्रपन्ना ये महेश्वरम् । अन्येऽपि नियतात्मानो ध्यानयुक्ता जितेन्द्रियाः ॥१८॥ ते सर्वे पापमुत्सृज्य
विरजा ब्रह्मवर्चसः । प्रविशन्ति महादेवं रुद्रन्ते त्वपुनर्भवाः ॥ १९ ॥ वायुरुवाच ॥ ततस्तस्मिन् गते कल्पे पीतवर्णे स्वयम्भुवः । पुनरन्यः प्रवृत्तस्तु

कल्पो हि नामतः ॥ २० ॥ एकार्णवे तदा वृत्ते दिव्ये वर्षसहस्रके । स्रष्टुकामः प्रजा ब्रह्मा चिन्तयामास दुःखितः ॥ २१ ॥ तस्य चिन्तयमानस्य
कामस्य वै प्रभोः । कृष्णः समभवद्वर्णो ध्यायतः परमेष्ठिनः ॥ २२ ॥ अथापश्यन्महातेजाः प्रादुर्भूतं कुमारकम् । कृष्णवर्णं महावीर्यं दीप्यमानं
जसा ॥ २३ ॥ कृष्णाम्बरवरोष्णीषं कृष्णयज्ञोपवीतिनम् । कृष्णेन मौलिना युक्तं कृष्णस्रगनुलेपनम् ॥ २४ ॥ स तं दृष्ट्वा महात्मानममरं घोर
रणम् । ववन्दे देवदेवेशं विश्वेशं कृष्णपिङ्गलम् ॥ २५ ॥ प्राणायामपरः श्रीमान् हृदि कृत्वा महेश्वरम् । मनसा ध्यानसंयुक्तं प्रपन्नस्तु यतीश्वरम् । अघो
ततो ब्रह्मा ब्रह्म एवानुचिन्तयन् ॥ २६ ॥ एवं वै ध्यायतस्तस्य ब्रह्मणः परमेष्ठिनः । मुमोच भगवान् रुद्रः अट्टहासं महास्वनम् ॥ २७ ॥ अथास्य
तः कृष्णाः कृष्णस्रगनुलेपनाः । चत्वारस्तु महात्मानः सम्बभूवुः कुमारकाः ॥ २८ ॥ कृष्णाः कृष्णाम्बरोष्णीषाः कृष्णास्याः कृष्णवाससः ।
ट्टहासः सुमहान् हुङ्कारश्चैव पुष्कलः । नमस्कारश्च सुमहान् पुनः पुनरुदीरितः ॥ २९ ॥ ततो वर्षसहस्रान्ते योगात्तत् पारमेश्वरम् । उपासित्वा
भागाः शिष्येभ्यः प्रददुस्ततः ॥ ३० ॥ योगेन योगसम्पन्नाः प्रविश्य मनसा शिवम् । अमलं निर्गुणं स्थानं प्रविष्टा विश्वमीश्वरम् ॥ ३१ ॥
तेन योगेन ये चाप्यन्ये द्विजातयः । स्मरिष्यन्ति विधानज्ञा गन्तारो रुद्रमव्ययम् ॥ ३२ ॥ ततस्तस्मिन् गते कल्पे कृष्णरूपे भयानके ।
ः प्रवर्त्तितः कल्पो विश्वरूपस्तु नामतः ॥ ३३ ॥ विनिवृत्ते तु संहारे पुनः सृष्टे चराचरे । ब्रह्मणः पुत्रकामस्य ध्यायतः परमेष्ठिनः । प्रादुर्भूता
नादा विश्वरूपा सरस्वती ॥ ३४ ॥ विश्वमाल्याम्बरधरं विश्वयज्ञोपवीतिनम् । विश्वोष्णीषं विश्वगन्धं विश्वस्थानं महाभुजम् ॥ ३५ ॥ अथ तं
ा ध्यात्वा युक्तात्मा वै पितामहः । ववन्दे देवमीशानं सर्वेशं सर्वगं प्रभुम् ॥ ३६ ॥ ओमीशानं नमस्तेऽस्तु महादेव नमोऽस्तु ते । एवं ध्यानगतं
प्रणमन्तं पितामहम् । उवाच भगवानीशः प्रीतोऽहं ते किमिच्छसि ॥ ३७ ॥ ततस्तु प्रणतो भूत्वा वाग्भिः स्तुत्वा महेश्वरम् । उवाच भग
ब्रह्मा प्रीतः प्रीतेन चेतसा ॥ ३८ ॥ यदिदं विश्वरूपन्ते विश्वगं विश्वमीश्वरम् । एतद्वेदितुमिच्छामि कश्चायं परमेश्वरः ॥ ३९ ॥ कैषा भगवती
चतुष्पादा चतुर्मुखी । चतुःशृङ्गी चतुर्वक्त्रा चतुर्दन्ता चतुःस्तनी ॥ ४० ॥ चतुर्हस्ता चतुर्नेत्रा विश्वरूपा कथं स्मृता । किन्नामधेया कोऽ
त्मा किंवीर्या वापि कर्मतः ॥ ४१ ॥ महेश्वर उवाच ॥ रहस्यं सर्वमन्त्राणां पावनं पुष्टिवर्द्धनम् । शृणुष्वैतत्परं गुह्यमादिसर्गे यथा
् ॥ ४२ ॥ अयं यो वर्त्तते कल्पो विश्वरूपस्त्वसौ स्मृतः । यस्मिन् भवादयो देवाः षड्विंशन्मनवः स्मृताः ॥ ४३ ॥ ब्रह्मस्थानमिदं चापि
प्राप्तं त्वया विभो । तदाप्रभृति कल्पश्च त्रयस्त्रिंशत्तमो ह्ययम् ॥ ४४ ॥ शतं शतसहस्राणामतीता ये स्वयम्भुवः । पुरस्तात्तव देवेश तान्

शृणुष्व महामुने ॥ ४५ ॥ आनन्दस्तु स विज्ञेय आनन्दस्ते महालयः । गालव्यगोत्रतपसा मम पुत्रस्त्वमागतः ॥ ४६ ॥ त्वयि योगश्च साङ्ख्यश्च तपो विद्याविधिः क्रिया । ऋतं सत्यञ्च यद्ब्रह्म अहिंसा सन्ततिक्रमाः ॥ ४७ ॥ ध्यानं ध्यानवपुः शान्तिर्विद्याऽविद्यामतिर्धृतिः । कान्तिः शान्तिः स्मृतिर्मेधा लज्जा शुद्धिः सरस्वती । तुष्टिः पुष्टिः क्रिया चैव लज्जा क्षान्तिः प्रतिष्ठिता ॥ ४८ ॥ षड्विंशत्तद्गुणा ह्येषा द्वात्रिंशाक्षरसंज्ञिता । प्रकृतिं विद्धि तां ब्रह्मंस्त्वत्प्रसूतिं महेश्वरीम् ॥ ४९ ॥ सैषा भगवती देवी तत्प्रसूतिः स्वयम्भुवः । चतुर्मुखी जगद्योनिः प्रकृतिर्गौः प्रकीर्त्तिता । प्रधानं प्रकृतिं चैव यदाहुस्तत्त्वचिन्तकाः ॥ ५० ॥ अजामेतां लोहितां शुक्लकृष्णां विश्वं संप्रसृजमानां सुरूपाम् । अजोऽहं वै बुद्धिमान्विश्वरूपां गायत्रीं गां विश्वरूपां हि बुद्ध्वा ॥ ५१ ॥ एवमुक्त्वा महादेवः अट्टहासमथाकरोत् । वलितास्फोटितरवं कहाकहनदन्तथा ॥ ५२ ॥ ततोऽस्य पार्श्वतो दिव्याः सर्वरूपाः कुमारकाः । जटी मुण्डी शिखण्डी च अर्द्धमुण्डश्च जज्ञिरे ॥ ५३ ॥ ततस्ते तु यथोक्तेन योगेन सुमहौजसः । दिव्यं वर्षसहस्रन्तु उपासित्वा महेश्वरम् ॥ ५४ ॥ धर्मोपदेशं नियतं कृत्वा योगमयं दृढम् । शिष्टानां नियतात्मानः प्रविष्टा रुद्रमीश्वरम् ॥ ५५ ॥ वायुरुवाच ॥ ततो विस्मयमापन्नो ब्रह्मा लोकपितामहः । प्रपन्नस्तु महादेवं भक्तियुक्तेन चेतसा । उवाच वचनं सर्वं श्वेतत्वन्ते कथं विभो ॥ ५६ ॥ भगवानुवाच ॥ श्वेतकल्पो यदा ह्यासीदहं श्वेतस्ततोऽभवम् । श्वेतोष्णीषः श्वेतमाल्यः श्वेताम्बरधरः शिवः ॥ ५७ ॥ श्वेतास्थिमांसरोमा च श्वेतत्वक् श्वेतलोहितः । तेन नाम्ना च विख्यातः श्वेतकल्पस्तदा ह्यसौ ॥ ५८ ॥ मत्प्रसादाच्च देवेशः श्वेताङ्गः श्वेतलोहितः । श्वेतवर्णा तदा ह्यासीद्गायत्री ब्रह्मसंज्ञिता ॥ ५९ ॥ यस्मादहं च देवेश त्वया गुह्ये पदे स्थितः । विज्ञातः स्वेन तपसा सद्यो जातः सनातनः । सद्यो जातेति ब्रह्मैतद्गुह्यं चैव प्रकीर्तितम् ॥ ६० ॥ तस्माद् गुह्यत्वमापन्नं ये वेत्स्यन्ति द्विजातयः । तत्समीपङ्गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ६१ ॥ यदाऽहं च पुनस्त्वासं लोहितो नाम नामतः । मत्कृतेन वर्णेन कल्पो वै लोहितः स्मृतः ॥ ६२ ॥ तदा लोहितमांसास्थिलोहितक्षीरसन्निभा । लोहिताक्षस्तनवती गायत्री गौः प्रकीर्तिता ॥ ६३ ॥ ततोऽस्य लोहितत्वेन वर्णस्य च विपर्य्यये । वामत्वाच्चैव योगस्य वामदेवत्वमागतः ॥ ६४ ॥ तथापि हि महासत्त्व त्वयाऽहं नियतात्मना । विज्ञातः श्वेतवर्णेन तस्माद्वर्णोत्तमः स्मृतः । ततोऽहं वामदेवेति ख्यातिं यातो महीतले ॥ ६५ ॥ ये चापि वामदेवत्वं ज्ञास्यन्तीह द्विजातयः । विज्ञाय चेमां रुद्राणीं गायत्रीं मातरं विभो ॥ ६६ ॥ सर्वपापविनिर्मुक्ता विरजा ब्रह्मवर्चसः । रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ६७ ॥ यदा तु पुनरेवायं कृष्णवर्णो भयानकः । मत्कृतेन च वर्णेन मत्कल्पः कृष्ण उच्यते ॥ ६८ ॥ तत्राऽहं कालसंकाशः कालो लोकप्रकाशनः । विज्ञातोऽहं त्वया

ब्रह्मन् घोरो घोरपराक्रमः ॥ ६९ ॥ तस्माद्घोरत्वमापन्नं ये मां वेत्स्यन्ति भूतले । तेषामघोरः शान्तश्च भविष्याम्यहमव्ययः ॥ ७० ॥ तस्माद्विश्वत्वमा
पन्नं ये मां पश्यन्ति भूतले । तेषां शिवश्च सौम्यश्च भविष्यामि सदैव तु ॥ ७१ ॥ तस्माच्च विश्वरूपो वै कल्पोऽयं समुदाहृतः । विश्वरूपा तथा चेयं
सावित्री समुदाहृता ॥ ७२ ॥ सर्वरूपास्तथा चेमे संवृत्ता मम पुत्रकाः । चत्वारस्ते समाख्याताः पादा वै लोकसंमताः ॥ ७३ ॥ तस्माच्च सर्व
वर्णत्वं प्रजात्वं मे भविष्यति । सर्वभक्ष्या च मेध्या च वर्णतश्च भविष्यति ॥ ७४ ॥ मोक्षो धर्मस्तथार्थश्च कामश्चेति चतुष्टयम् । तस्माद्वेता च वेद्यं
च चतुर्द्धा वै भविष्यति ॥ ७५ ॥ भूतग्रामाश्च चत्वारः आश्रमाश्चतुरस्तथा । धर्मस्य पादाश्चत्वारश्चत्वारो मम पुत्रकाः ॥ ७६ ॥ तस्माच्चतुर्युगाव
स्थं जगद्वै सचराचरम् । चतुर्द्धाऽवस्थितं चैव चतुष्पादं भविष्यति ॥ ७७ ॥ भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा । जनस्तपश्च शांतश्च
रुद्रलोकस्ततः परम् ॥ ७८ ॥ स्वर्लोको हि तृतीयस्तु चतुर्थस्तु महः स्मृतः । तत्र लोकः परं स्थानं परन्तद्योगिनां स्मृतम् ॥ ७९ ॥ निर्ममा निरहं
काराः कामक्रोधविवर्जिताः । द्रक्ष्यन्ते तद्विदो युक्ता ध्यानतत्परयुञ्जकाः ॥ ८० ॥ यस्माच्चतुष्पदा ह्येषा त्वया दृष्टा सरस्वती । तस्माच्च पशवः सर्वे
भविष्यन्ति चतुष्पदाः । तस्माच्चैषां भविष्यन्ति चत्वारो वै पयोधराः ॥ ८१ ॥ सोमश्च मन्त्रसंयुक्तो यस्मान्मम मुखाच्च्युतः । जीवः प्राणभृतां ब्रह्मन्
सर्वः पीत्वा स्तनैर्घृतम् ॥ ८२ ॥ तस्मात् सोममयं चैतदमृतं चैव संज्ञितम् । चतुष्पादा भविष्यन्ति श्वेतत्वं चास्य तेन तत् ॥८३॥ यस्माच्चैवं क्रियाभूत्वा
द्विपादा वै महेश्वरी । दृष्टा पुनस्त्वया चैषा सावित्री लोकभाविनी । तस्माद्वै द्विपदाः सर्वे द्विस्तनाश्च नराः स्मृताः ॥८४॥ यस्माच्चैवमजा भूत्वा सर्ववर्णा
महेश्वरी । दृष्टा त्वया महासत्त्वा सर्वभूतधरा परा । तस्मात्तु विश्वरूपत्वमजानां वै भविष्यति ॥ ८५ ॥ अजश्चैव महातेजा विश्वरूपो भविष्यति ।
अमोघरेताः सर्वत्र मुखे चास्य हुताशनः । तस्मात् सर्वगतो मेध्यः पशुरूपी हुताशनः ॥ ८६ ॥ तपसा भावितात्मानो ये वै द्रक्ष्यन्ति वै द्विजाः ।
ईशित्वे च शिवत्वे च सर्वगं सर्वतः स्थिरम् ॥ ८७ ॥ रजस्तमोविनिर्मुक्तास्त्यक्त्वा मानुष्यकम्भुवि । मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ८८ ॥
इत्येवमुक्तो भगवान् ब्रह्मा रुद्रेण वै द्विजाः । प्रणम्य प्रयतो भूत्वा पुनराह पितामहः ॥८९॥ ब्रह्मोवाच ॥ भगवन् देवदेवेश विश्वरूपी महेश्वरः।इमास्तव
महादेव तनवो लोकवन्दिताः ॥ ९० ॥ विश्वरूप महासत्त्व कस्मिन् काले महाभुज । कस्यां वा युगसम्भूत्यां द्रक्ष्यन्ति त्वां द्विजातयः ॥ ९१ ॥ केन
वा तत्त्वयोगेन ध्यानयोगेन केन वा । तनवस्ते महादेव शक्या द्रष्टुं द्विजातिभिः ॥ ९२ ॥ भगवानुवाच ॥ तपसा नैव योगेन दानधर्मफलेन वा ।
न तीर्थफलयोगेन क्रतुभिर्वा सदाक्षिणैः ॥९३॥ न वेदाध्यापनैर्वापि न वित्तेन निवेदनैः । शक्योऽहं मानुषैर्द्रष्टुमृते ध्यानात्परं न हि ॥९४॥ साध्यो नारायण

व विष्णुस्त्रिभुवनेश्वरः। भविष्यतीह नाम्ना तु वाराहो नाम विश्रुतः॥९५॥चतुर्बाहुश्चतुष्पादश्चतुर्नेत्रश्चतुर्मुखः।तदा संवत्सरो भूत्वा यज्ञरूपी भविष्यति।
ङ्गश्च त्रिशीर्षश्च त्रिस्थाने त्रिशरीरवान् ॥ ९६ ॥ कृतं त्रेता द्वापरं च कलिश्चैव चतुर्युगम् । एतस्य पादाश्चत्वारः अङ्गानि क्रतवस्तथा ॥ ९७ ॥
जाश्च वेदाश्चत्वारो ऋतुः सन्धिमुखानि च । द्वे मुखे द्वे च अयने नेत्राश्च चतुरस्तथा ॥ ९८ ॥ शिरांसि त्रीणि पर्वाणि फाल्गुन्याषाढकृत्तिकाः ।
व्यान्तरिक्षभौमानि त्रीणि स्थानानि यानि तु । सम्भवः प्रलयश्चैव आश्रमौ द्वौ प्रकीर्त्तितौ ॥ ९९ ॥ स यदा कालरूपाभो वराहत्वे व्यवस्थितः ।
विष्यति यदा साध्यो विष्णुर्नारायणः प्रभुः ॥ १०० ॥ तदा त्वमपि देवेश चतुर्वक्त्रो भविष्यसि । ब्रह्मलोकनमस्कार्यो विष्णुर्नारायणः प्रभुः
१०१ ॥ एकार्णवे प्लुवे चैव शयानं पुरुषं हरिम् । यदा द्रक्ष्यसि देवेशं ध्यानयुक्तं महामुनिम् ॥ १०२ ॥ तदावां मम योगेन मोहितौ नष्टचेतसौ ।
न्योन्यस्पर्द्धिनौ रात्रावविज्ञाय परस्परम् ॥ १०३ ॥ एकैकस्योदरस्थांस्तु दृष्ट्वा लोकांश्चराचरान् । विस्मयं परमं गत्वा ध्यानादबुद्धा तु मद्वुभौ
१०४ ॥ ततस्त्वं पद्मसंभूतः पद्मनाभः सनातनः । पद्माङ्कितस्तदा कल्पे ख्यातिं यास्यसि पुष्कलाम् ॥ १०५ ॥ ततस्तस्मिंस्तदा कल्पे वाराहे
मे प्रभोः । पुनर्विष्णुर्महातेजाः कालो लोकप्रकालनः । मनुर्वैवस्वतो नाम तव पुत्रो भविष्यति ॥ १०६ ॥ तदा चतुर्युगावस्थे कल्पे तस्मिन्
ान्तके । भविष्यामि शिखायुक्तः श्वेतो नाम महामुनिः ॥ १०७ ॥ हिमवच्छिखरे रम्ये छागले पर्वतोत्तमे । चतुःशिष्याः शिवे युक्ता भविष्यन्ति
ा मम ॥ १०८ ॥ श्वेतश्चैव शिखश्चैव श्वेताश्वः श्वेतलोहितः । चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः ॥ १०९ ॥ ततस्ते ब्रह्मभूयिष्ठा दृष्ट्वा
गतिं पराम् । तत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ ११० ॥ पुनस्तु मम देवेशो द्वितीयद्वापरे प्रभुः । प्रजापतिर्यदा व्यासः सत्यो नाम भवि
ति ॥ १११ ॥ तदा लोकहितार्थाय सुतारो नाम नामतः । भविष्यामि कलौ तस्मिन् लोकानुग्रहकारणात् ॥ ११२ ॥ तत्रापि मम ते पुत्रा भविष्या
म नामतः । दुन्दुभिः शतरूपश्च ऋचीकः क्रतुमांस्तथा ॥ ११३ ॥ प्राप्य योगं तथा ज्ञानं ब्रह्म चैव सनातनम् । रुद्रलोकं गमिष्यन्ति पुनरावृत्ति
र्लभम् ॥ ११४ ॥ तृतीये द्वापरे चैव यदा व्यासस्तु भार्गवः । तदा ह्यहं भविष्यामि दमनस्तु युगान्तिके ॥ ११५ ॥ तत्रापि च भविष्यन्ति चत्वारो
न पुत्रकाः । विशोकश्च विकेशश्च विशापः शापनाशनः ॥११६॥ तेऽपि तेनैव मार्गेण योगोक्तेन महौजसः । रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम्
११७॥ चतुर्थे द्वापरे चैव यदा व्यासोऽङ्गिराः स्मृतः । तदाऽप्यहं भविष्यामि सुहोत्रो नाम नामतः ॥ ११८ ॥ तत्रापि मम सत्पुत्राश्चत्वारश्च तपोधनाः ।
विष्यन्ति द्विजश्रेष्ठा योगात्मानो दृढव्रताः ॥११९॥ सुमुखो दुर्मुखश्चैव दुर्दमो दुरतिक्रमः । प्राप्य योगगतिं सूक्ष्मां विमला दग्धकिल्बिषाः । तेऽपि

तेनैव मार्गेण गमिष्यन्ति न संशयः ॥ १२० ॥ पञ्चमे द्वापरे चैव व्यासस्तु सविता यदा । तदा चापि भविष्यामि कङ्को नाम महातपाः । अनुग्रहार्थं
लोकानां योगात्मा नैककर्मकृत् ॥ १२१ ॥ चत्वारस्तु महाभागा विरजाः शुद्धयोनयः । पुत्रा मम भविष्यन्ति योगात्मानो दृढव्रताः ॥ १२२ ॥
सनः सनन्दनश्चैव प्रभुर्यश्च सनातनः । ऋतुः सनत्कुमारश्च निर्ममा निरहंकृताः । मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ १२३ ॥ परिवृत्ते पुनः
षष्ठे मृत्युर्व्यासो यदा विभुः । तदाप्यहं भविष्यामि लोकाक्षिर्नाम नामतः ॥ १२४ ॥ शिष्याश्च मम ते दिव्या योगात्मानो दृढव्रताः । भविष्यन्ति
महाभागाश्चत्वारो लोकसम्मताः ॥ १२५ ॥ सुधामा विरजश्चैव शङ्खपाद्रव एव च । योगात्मानो महात्मानस्ते सर्वे दग्धकिल्बिषाः । तेऽपि तेनैव
मार्गेण गमिष्यन्ति न संशयः ॥ १२६ ॥ सप्तमे परिवर्त्ते तु यदा व्यासः शतक्रतुः । विभुर्नाम महातेजाः पूर्वमासीच्छतक्रतुः ॥ १२७ ॥ तदाऽप्यहं
भविष्यामि कलौ तस्मिन् युगान्तिके । जैगीषव्येति विख्यातः सर्वेषां योगिनां वरः ॥ १२८ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति युगे तदा । सा
रस्वतः सुमेधाश्च वसुवाहः सुवाहनः ॥ १२९ ॥ तेऽपि तेनैव मार्गेण ध्यानयुक्तिं समाश्रिताः । भविष्यन्ति महात्मानो रुद्रलोकपरायणाः ॥ १३० ॥
वसिष्ठश्चाष्टमे व्यासः परिवर्त्ते भविष्यति । कपिलश्चासुरिश्चैव तथा पञ्चशिखो मुनिः । वाग्वलिश्च महायोगी सर्वे एव महौजसः ॥ १३१ ॥ प्राप्य
माहेश्वरं योगं ध्यानिनो दग्धकल्मषाः । मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ १३२ ॥ परिवर्त्ते नवमे व्यासः सारस्वतो यदा । तदा चाहं भ
विष्यामि ऋषभो नाम नामतः । तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ॥ १३३ ॥ पराशरश्च गार्ग्यश्च भार्गवो ह्याङ्गिरास्तथा । भविष्यन्ति महा
त्मानो ब्राह्मणा वेदपारगाः ॥ १३४ ॥ सर्वे तपोबलोत्कृष्टाः शापानुग्रहकोविदाः । तेपि तेनैव मार्गेण योगोक्तेन तपस्विनः । ध्यानमार्गं समासाद्य गमि
ष्यन्ति तथैव ते ॥१३५॥ दशमे द्वापरे व्यासस्त्रिधामानाम नामतः । यदा भविष्यति विप्रास्तदाऽहं भविता पुनः ॥१३६॥ हिमवच्छिखरे रम्ये भृगुतुङ्गे
नगोत्तमे । नाम्ना भृगोस्तु शिखरन्तस्मात्तच्छिखरम्भृगुः॥१३७॥तत्रैव मम ते पुत्रा भविष्यन्ति दृढव्रताः । बलबन्धुर्निरामित्रः केतुशृङ्गस्तपोधनः॥१३८॥
योगात्मानो महात्मानो ध्यानयोगसमन्विताः । रुद्रलोकं गमिष्यन्ति तपसा दग्धकल्मषाः ॥ १३९ ॥ एकादशे द्वापरे तु त्रिवृद्व्यासो भविष्यति ।
तदाऽप्यहं भविष्यामि गङ्गाद्वारे कलेर्धुरि ॥१४०॥ उग्रा नाम महानादास्तत्रैव मम पुत्रकाः । भविष्यन्ति महौजस्काः सुवृत्ता लोकविश्रुताः ॥ १४१ ॥
लम्बोदरश्च लम्बश्च लम्बाक्षो लम्बकेशकः । प्राप्य माहेश्वरं योगं रुद्रलोकाय संस्थिताः । तेऽपि तेनैव मार्गेण गमिष्यन्ति परां गतिम् ॥ १४२ ॥
द्वादशे परिवर्त्ते तु शततेजा महामुनिः । भविष्यति महासत्त्वो व्यासः कविवरोत्तमः ॥ १४३ ॥ ततोऽप्यहं भविष्यामि अत्रिर्नाम युगान्तिके ।

हैमकं वनमासाद्य योगमास्थाय भूतले ॥ १४४ ॥ अत्रापि मम ते पुत्रा भस्मस्नानानुलेपनाः । भविष्यन्ति महायोगा रुद्रलोकपरायणाः ॥ १४५ ॥ सर्वज्ञः समबुद्धिश्च साध्यः सर्वस्तथैव च । रुद्रलोकं गमिष्यन्ति ध्यानयोगपरायणाः ॥ १४६ ॥ त्रयोदशे पुनः प्राप्ते परिवर्त्ते क्रमेण तु । धर्मो नरायणो नाम व्यासस्तु भविता यदा ॥ १४७ ॥ तदाप्यहं भविष्यामि वालिर्नाम महामुनिः । वालखिल्याश्रमे पुण्ये पर्वते गन्धमादने ॥ १४८ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः । सुधामा काश्यपश्चैव वासिष्ठो विरजास्तथा ॥ १४९ ॥ महायोगबलोपेता विमला ऊर्द्धरेतसः । तेनैव योगमार्गेण गमिष्यन्ति न संशयः ॥ १५० ॥ सुरक्षणो यदा व्यासः पर्याये तु चतुर्दशे । तत्रापि पुनरेवाहं भविष्यामि युगान्तिके ॥ १५१ ॥ वंशे त्वङ्गिरसः श्रेष्ठो गौतमो नाम योगवित् । तस्माद्भविष्यते पुण्यं गौतमं नाम तद्वनम् ॥ १५२ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति कलौ तथा । अत्रिरुग्रतपाश्चैव श्रावणोऽथ स्रविष्टकः ॥ १५३ ॥ योगात्मानो महात्मानो ध्यानयोगपरायणाः । तेऽपि तेनैव मार्गेण रुद्रलोकनिवासिनः ॥ १५४ ॥ ततः प्राप्ते पञ्चदशे परिवर्त्ते क्रमागते । आरुणिस्तु यदा व्यासो द्वापरे भविता प्रभुः ॥ १५५ ॥ तदाप्यहं भविष्यामि नाम्ना वेदशिरा द्विजाः । तत्र वेदशिरा नाम अस्त्रं तत्पारमेश्वरम् ॥ १५६ ॥ भविष्यति महावीर्यं वेदशीर्षा च पर्वतः । हिमवत्पृष्ठमाश्रित्य सरस्वत्या नगोत्तमे ॥ १५७ ॥ तदापि मम ते पुत्रा भविष्यन्ति तपोधनाः । कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ॥ १५८ ॥ योगात्मानो महात्मानो ब्रह्मिष्ठाश्चोर्द्धरेतसः । तेऽपि तेनैव मार्गेण रुद्रलोकं गतास्तु ते ॥ १५९ ॥ ततः षोडशमे चापि परिवर्त्ते क्रमागते । व्यासस्तु सञ्जयो नाम भविष्यति तदा प्रभुः ॥ १६० ॥ तदाप्यहं भविष्यामि गोकर्णो नाम नामतः । तस्माद्भविष्यते पुण्यं गोकर्णं नाम तद्वनम् ॥ १६१ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः । कश्यपो ह्युशनाश्चैव च्यवनोऽथ बृहस्पतिः । तेऽपि तेनैव मार्गेण गमिष्यन्ति परं पदम् ॥ १६२ ॥ ततः सप्तदशे चैव परिवर्त्ते क्रमागते । तदा भविष्यति व्यासो नाम्ना देवकृतञ्जयः ॥ १६३ ॥ तदाप्यहं भविष्यामि गुहावासीति नामतः । हिमवच्छिखरे चैव महातुङ्गे महालये । सिद्धिक्षेत्रं महापुण्यं भविष्यति महालयम् ॥ १६४ ॥ तत्रापि मम ते पुत्रा ब्रह्मण्या योगवेदिनः । भविष्यन्ति महात्मानः सर्वज्ञा निरहङ्कृताः ॥ १६५ ॥ उतथ्यो वामदेवश्च महाकालो महालयः । तेषां शतसहस्रन्तु शिष्याणां ध्यानसाधनम् ॥ १६६ ॥ भविष्यन्ति तदा कल्पे सर्वे ते ध्यानयुञ्जकाः । ते तु सन्निहिता योगे हृदि कृत्वा महेश्वरम् । महालये पदं क्षिप्त्वा प्रविष्टाः शिवमव्ययम् ॥ १६७ ॥ ये चान्येऽपि महात्मानः काले तस्मिन् युगान्तिके । ध्यानयुक्तेन मनसा विमलाः शुद्धबुद्धयः ॥ १६८ ॥ गत्वा महालयं पुण्यं दृष्ट्वा माहेश्वरं पदम् । तूर्णं तारयते जन्तून् दशपूर्वान् दशापरान् ॥ १६९ ॥ आत्मानमेकविंशञ्च तारयित्वा महार्णवम् ।

मम प्रसादाद्यास्यन्ति रुद्रलोकं गतज्वराः ॥ १७० ॥ ततोऽष्टादशमे चैव परिवर्त्ते यदा भवेत् । तदा ऋतञ्जयो नाम व्यासस्तु भविता मुनिः । तदाऽ
प्यहं भविष्यामि शिखण्डी नाम नामतः ॥ १७१ ॥ सिद्धक्षेत्रे महापुण्ये देवदानवपूजिते । हिमवच्छिखरे पुण्ये शिखण्डी यत्र पर्वतः । शिखण्डिनो
वनञ्चापि ऋषिसिद्धनिषेवितम् ॥ १७२ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः । वाचःश्रवा ऋतीकश्च शावासश्च दृढव्रतः ॥ १७३ ॥ योगात्मानो
महाशक्ताः सर्वे ते वेदपारगाः । प्राप्य माहेश्वरं योगं रुद्रलोकं व्रजन्ति ते ॥ १७४ ॥ ततस्त्वेकोनविंशे तु परिवर्त्ते क्रमागते । व्यासस्तु भविता
नाम्ना भरद्वाजो महामुनिः ॥ १७५ ॥ तत्राप्यहं भविष्यामि जटामालीति नामतः । हिमवच्छिखरे रम्ये जटायुर्यत्र पर्वतः ॥ १७६ ॥ तत्रापि मम ते पुत्रा
भविष्यन्ति महौजसः । हिरण्यनामा कौशिल्यः काक्षीवः कुथुमिस्तथा ॥ १७७ ॥ ईश्वरा योगधर्माणः सर्वे त ह्यूर्द्धरेतसः । प्राप्य माहेश्वरं योगं गमि
ष्यन्ति न संशयः ॥ १७८ ॥ ततो विंशतिमे सर्गे परिवर्त्ते क्रमेण तु । वाचःश्रवाः स्मृतो व्यासो भविष्यति महामतिः ॥ १७९ ॥ तदाप्यहं भविष्यामि
ह्यट्टहासीति नामतः । अट्टहासप्रियाश्चापि भविष्यन्ति तदा नराः ॥ १८० ॥ तत्रैव हिमवत्पृष्ठे सिद्धचारणसेविते । तत्रापि मम ते पुत्रा भविष्यन्ति
महौजसः । युक्तात्मानो महासत्त्वा ध्यानिनो नियतव्रताः ॥ १८१ ॥ सुमन्तुर्ववरिर्विद्वान् सुबन्धुः कुशिकन्धरः । प्राप्य माहेश्वरं योगं रुद्रलोकाय ते
गताः ॥ १८२ ॥ एकविंशे पुनः प्राप्ते परिवर्त्ते क्रमेण तु । वाचस्पतिः स्मृतो व्यासो यदा स ऋषिसत्तमः ॥ १८३ ॥ तदाऽप्यहं भविष्यामि दारुको
नाम नामतः । तस्माद्भविष्यते पुण्यं देवदारुवनं महत् ॥ १८४ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः । प्लक्षो दाक्षायणिश्चैव केतुमाली बक
स्तथा ॥ १८५ ॥ योगात्मानो महात्मानो नियता ह्यूर्द्धरेतसः । परमं योगमास्थाय रुद्रं प्राप्तास्तथानघाः ॥ १८६ ॥ द्वाविंशे परिवर्त्ते तु व्यासः
शुक्लायनो यदा । तदाऽप्यहं भविष्यामि वाराणस्यां महामुनिः ॥ १८७ ॥ नाम्ना वै लाङ्गली भीमो यत्र देवाः सवासवाः । द्रक्ष्यन्ति मां कलौ तस्मि
न्नवतीर्णं हलायुधम् ॥ १८८ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्मिकाः । तुल्यार्चिर्मधुपिङ्गाक्षः श्वेतकेतुस्तथैव च ॥ १८९ ॥ तेऽपि माहेश्वरं
योगं प्राप्य ध्यानपरायणाः । विरजा ब्रह्मभूयिष्ठा रुद्रलोकाय संस्थिताः ॥ १९० ॥ परिवर्त्ते त्रयोविंशे तृणबिन्दुर्यदा मुनिः । व्यासो भविष्यति ब्रह्म
तदाऽहं भविता पुनः । श्वेतो नाम महाकायो मुनिपुत्रः सुधार्मिकः ॥ १९१ ॥ तत्र कालञ्जरिष्यामि तदा गिरिवरोत्तमे । तेन कालञ्जरो नाम भवि
ष्यति स पर्वतः ॥ १९२ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः । उषिजो बृहदुक्थश्च देवलः कविरेव च । प्राप्य माहेश्वरं योगं रुद्रलोकं गता
हि ते ॥ १९३ ॥ परिवर्त्ते चतुर्विंशे ऋक्षो व्यासो भविष्यति । तत्राऽहं भविता ब्रह्मन् कलौ तस्मिन् युगान्तिके । शूली नाम महायोगी नैमिषे योगि

न्दिते ॥ १९४ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः । शालिहोत्रोऽग्निवेश्यश्च युवनाश्वः शरद्वसुः । तेऽपि योगबलोपेता रुद्रं यास्यन्ति
ताः ॥ १९५ ॥ पञ्चविंशे पुनः प्राप्ते परिवर्त्ते यथाक्रमम् । वसिष्ठस्तु यदा व्यासः शक्तिर्नाम भविष्यति ॥ १९६ ॥ तदाऽप्यहं भविष्यामि दण्डी
डी शरः प्रभुः । कोटिवर्षं समासाद्य नगरं देवपूजितम् ॥ १९७ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति क्रमागताः । योगात्मानो महात्मानः सर्वे
ह्यूर्द्धरेतसः ॥ १९८ ॥ छगलः कुम्भकर्णाश्यः कुम्भश्चैव प्रबाहुकः । प्राप्य माहेश्वरं योगं गमिष्यन्ति तथैव ते ॥ १९९ ॥ षड्विंशे
वर्त्ते तु यदा व्यासः पराशरः । तदाऽप्यहं भविष्यामि सहिष्णुर्नाम नामतः । पुण्यं रुद्रवनं प्राप्य कलौ तस्मिन् युगान्तिके ॥ २०० ॥
पि मम ते पुत्रा भविष्यन्ति सुधार्मिकाः । उलूको वैद्युतश्चैव सर्वको ह्याश्वलायनः । प्राप्य माहेश्वरं योगं गन्तारस्ते तथैव हि ॥ २०१ ॥
विंशतिमे प्राप्ते परिवर्त्ते क्रमागते । जातूकर्ण्यो यदा व्यासो भविष्यति तपोधनः ॥ २०२ ॥ तदाऽप्यहं भविष्यामि सोमशर्म्मा द्विजोत्तमः ।
सतीर्थमासाद्य योगात्मा लोकविश्रुतः ॥ २०३ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः । अक्षपादः कणादश्च उलूको वत्स एव
॥ २०४ ॥ योगात्मानो महात्मानो विमलाः शुद्धबुद्धयः । प्राप्य माहेश्वरं योगं रुद्रलोकं ततो गताः ॥ २०५ ॥ अष्टाविंशे पुनः प्राप्ते
र्त्ते क्रमागते । पराशरसुतः श्रीमान् विष्णुर्लोकपितामहः ॥ २०६ ॥ यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः । तदा षष्ठेन चांशेन कृष्णः
सत्तमः । वसुदेवाद्यदुश्रेष्ठो वासुदेवो भविष्यति ॥ २०७ ॥ तदा चाहं भविष्यामि योगात्मा योगमायया । लोकविस्मयनार्थाय ब्रह्मचारिशरी
॥ २०८ ॥ श्मशाने मृतमुत्सृष्टं दृष्ट्वा लोकमनाथकम् । ब्राह्मणानां हितार्थाय प्रविष्टो योगमायया ॥ २०९ ॥ दिव्यां मेरुगुहां पुण्यां त्वया
च विष्णुना । भविष्यामि तदा ब्रह्मन् नकुली नाम नामतः ॥ २१० ॥ कायारोहणमित्येवं सिद्धक्षेत्रञ्च वै तदा । भविष्यति तु विख्यातं
द्भूमिर्द्धरिष्यति ॥ २११ ॥ तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः । कुशिकश्चैव गार्ग्यश्च मित्रको रुष्ट एव च ॥ २१२ ॥ योगयुक्ता
त्मानो ब्राह्मणा वेदपारगाः । प्राप्य माहेश्वरं योगं विमला ह्यूर्द्धरेतसः । रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ॥ २१३ ॥ इत्येतद्वै मया
मवतारेषु लक्षणम् । मन्वादिकृष्णपर्यन्तमष्टाविंशयुगक्रमात् । तत्र स्मृतिसमूहानां विभागो धर्मलक्षणम् ॥ २१४ ॥ इति श्रीमहापुराणे वायु
माहेश्वरावतारयोगो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ वायुरुवाच ॥ चत्वारि भारते वर्षे युगानि मुनयो विदुः । कृतं त्रेता द्वापरं च तिष्यं
चतुर्युगम् ॥ १ ॥ एतत्सहस्रपर्यन्तमहर्यद्ब्रह्मणः स्मृतम् । यामाद्यास्तु गणाः सप्त रोमवन्तश्चतुर्दश ॥ २ ॥ सशरीराः श्रूयन्ते स्म जनलोकं सहा

नुगाः । एवं देवेष्वतीतेषु महर्ल्लोकाज्जनं तपः ॥ ३ ॥ मन्वन्तरेष्वतीतेषु देवाः सर्वे महौजसः । ततस्तेषु गतेषूर्द्ध सायुज्यं कल्पवासिनाम् ॥४॥ समेत्य देवैस्ते देवाः प्राप्ते सङ्कालने तदा । महर्लोकं परित्यज्य गणास्ते वै चतुर्दश ॥ ५ ॥ भूतादिष्ववशिष्टेषु स्थावरान्तेषु वै तदा । शून्येषु तेषु लोकेषु महान्तेषु भुवादिषु । देवेष्वथ गतेषूर्द्ध कल्पवासिषु वै जनम् ॥६॥ तत्संहत्या ततो ब्रह्मा देवर्षिगणदानवान् । संस्थापयति वै सर्व्वान् दाहवृष्ट्या गम क्षये ॥ ७ ॥ योऽतीतः सप्तमः कल्पो मया वः परिकीर्तितः । समुद्रैः सप्तभिर्गाढमेकीभूतैर्महार्णवैः । आसीदेकार्णवं घोरमविभागं तमोमयम् ॥ ८ ॥ मायया्कार्णवे तस्मिन् शङ्खचक्रगदाधरः । जीमूताभोऽम्बुजाक्षश्च किरीटी श्रीपतिर्हरिः ॥ ९ ॥ नारायणमुखोद्गीर्णः सोऽष्टमः पुरुषोत्तमः । अष्टबाहुर्महोरस्को लोकानां योनिरुच्यते । किमप्यचिन्त्यं युक्तात्मा योगमास्थाय योगवित् ॥ १० ॥ फणासहस्रकलितं तमप्रतिमवर्चसम् । महाभोगपतेर्भोगमन्वास्तीर्य महोच्छ्रयम् । तास्मिन्महति पर्यङ्के शेते वै कनकप्रभे ॥ ११ ॥ एवं तत्र शयानेन विष्णुना प्रभविष्णुना । आत्मारामेण क्रीडार्थं सृष्टं नाभ्यां तु पङ्कजम् ॥ १२ ॥ शतयोजनविस्तीर्णं तरुणादित्यवर्चसम् । वज्रदण्डं महोत्सेधं लीलया प्रभविष्णुना ॥ १३ ॥ तस्यैवं क्रीडमानस्य समीपं देवमीढुषः । हेमब्रह्माण्डजो ब्रह्मा रुक्मवर्णो ह्यतीन्द्रियः । चतुर्मुखो विशालाक्षः समागम्य यदृच्छया ॥ १४ ॥ श्रिया युक्तेन नव्येन सुप्रभेण सुगन्धिना । तं क्रीडमानं पद्मेन दृष्ट्वा ब्रह्मा तु भेजिवान् ॥ १५ ॥ स विस्मयमथागम्य श्लक्ष्णया संपूर्णया गिरा । प्रोवाच को भवान् शेते आश्रितो मध्यमम्भसाम् ॥ १६ ॥ अथ तस्याच्युतः श्रुत्वा ब्रह्मणस्तु शुभं वचः । उदतिष्ठत पर्य्यङ्काद्विस्मयोत्फुल्ललोचनः ॥ १७ ॥ प्रत्युवाचोत्तरं चैव क्रियते यच्च किञ्चन । द्यौरन्तरिक्षं भूतश्च परं पदमहं प्रभुः ॥ १८ ॥ तमेवमुक्त्वा भगवान् विष्णुः पुनरथाब्रवीत् । कस्त्वं खलु समायातः समीपं भगवान् कुतः । कुतश्च भूयो गन्तव्यं कुत्र वा ते प्रतिश्रयः ॥ १९ ॥ को भवान् विश्वमूर्तिस्त्वं कर्त्तव्यं किञ्च ते मया । एवं ब्रुवाणं वैकुण्ठं प्रत्युवाच पितामहः ॥ २० ॥ यथा भवांस्तथा चाहमादिकर्त्ता प्रजापतिः । नारायणसमाख्यातः सर्व्वं वै मयि तिष्ठति ॥ २१ ॥ सविस्मयं परं श्रुत्वा ब्रह्मणा लोककर्तृणा । सोऽनुज्ञातो भगवता वैकुण्ठो विश्वसम्भवः ॥ २२ ॥ कौतूहलान्महायोगी प्रविष्टो ब्रह्मणो मुखम् । इमानष्टादशद्वीपान् ससमुद्रान् सपर्व्वतान् । प्रविश्य स महातेजाश्चातुर्वर्ण्यसमाकुलान् । ब्रह्मादिस्तम्बपर्य्यन्तान् सप्तलोकान् सनातनान् ॥ २३ ॥ ब्रह्मणस्तूदरे दृष्ट्वा सर्व्वान् विष्णुर्महायशाः । अहोऽस्य तपसो वीर्य्यं पुनः पुनरभाषत ॥२४॥ पर्य्यटन् विविधान् लोकान् विष्णुर्नानाविधाश्रमान् । ततो वर्षसहस्रान्ते नान्तं हि ददृशे तदा ॥ २५ ॥ तदाऽस्य वक्त्रान्निष्क्रम्य पन्नगेन्द्रारिकेतनः । अजातशत्रुर्भगवान् पितामहमथाब्रवीत् ॥ २६ ॥ भगवन् आदि मध्यञ्च

अन्तं कालदिशोर्न च । नाहमन्तं प्रपश्यामि ह्युदरस्य तवानघ ॥ २७ ॥ एवमुक्त्वाब्रवीद्भूयः पितामहमिदं हरिः । भवानप्येवमेवाद्य ह्युदरं मम शाश्व
तम् । प्रविश्य लोकान् पश्यैताननौपम्यान् द्विजोत्तम ॥ २८ ॥ मनःप्रह्लादनीं वाणीं श्रुत्वा तस्याभिनन्द्य च । श्रीपतेरुदरं भूयः प्रविवेश पितामहः
॥ २९ ॥ तानेव लोकान् गर्भस्थः पश्यन् सोऽचिन्त्यविक्रमः । पर्यटित्वादिदेवस्य ददर्शान्तं न वै हरेः ॥ ३० ॥ ज्ञात्वागमन्तस्य पितामहस्य द्वाराणि
सर्वाणि पिधाय विष्णुः । विभुर्मनः कर्त्तुमियेष चाशु सुखं प्रसुप्तोऽस्मि महाजलौघे ॥ ३१ ॥ ततो द्वाराणि सर्वाणि पिहितान्युपलक्ष्यते । सूक्ष्मं कृत्वा
त्मनो रूपं नाभ्यां द्वारमविन्दत ॥ ३२ ॥ पद्मसूत्रानुमार्गेण ह्यनुगम्य पितामहः । उज्जहारात्मनो रूपं पुष्कराच्चतुराननः । विरराजारविन्दस्थः
पद्मगर्भसमद्युतिः ॥ ३३ ॥ एतस्मिन्नन्तरे ताभ्यामेकैकस्य तु कात्स्न्यंतः । प्रवर्त्तमाने संहर्षे मध्ये तस्यार्णवस्य तु ॥ ३४ ॥ सूत उवाच ॥
ततो ह्यपरिमेयात्मा भूतानां प्रभुरीश्वरः । शूलपाणिर्महादेवो हेमचीराम्बरच्छदः । आगच्छद् यत्र सोऽनन्तो नागभोगपतिर्हरिः ॥ ३५ ॥
शीघ्रं विक्रमतस्तस्य पद्भ्यामत्यन्तपीडिताः । उद्भूतास्तूर्णमाकाशे पृथुलास्तोयबिन्दवः । अत्युष्णाश्चातिशीताश्च वायुस्तत्र ववौ भृशम्
॥ ३६ ॥ तद्दृष्ट्वा महदाश्चर्यं ब्रह्मा विष्णुमभाषत । अब्बिन्दवो हि स्थूलोष्णाः कम्पते चाम्बुजं भृशम् । एतं मे संशयं ब्रूहि किञ्चान्यत्
त्वञ्चिकीर्षसि ॥ ३७ ॥ एतदेवंविधं वाक्यं पितामहमुखोद्भवम् । श्रुत्वाप्रतिमकर्माह भगवानसुरान्तकृत् ॥ ३८ ॥ किन्नु खल्वत्र मे नाभ्यां
भूतमन्यत्कृतालयम् । वदन्ति प्रियमत्यर्थं विप्रियेपि च ते मया ॥ ३९ ॥ इत्येवं मनसा ध्यात्वा प्रत्युवाचेदमुत्तरम् । किन्नत्र भगवांस्तस्मिन्
पुष्करे जातसम्भ्रमः ॥ ४० ॥ किं मया यत् कृतं देव यन्मां प्रियमनुत्तमम् । भाषसे पुरुषश्रेष्ठ किमर्थं ब्रूहि तत्त्वतः ॥ ४१ ॥ एवं ब्रुवाणं देवेशं
लोकयात्रान्तु तत्त्वगाम् । प्रत्युवाचाम्बुजाभास्को ब्रह्मा वेदनिधिः प्रभुः ॥ ४२ ॥ योऽसौ तवोदरं पूर्वं प्रविष्टोऽहं त्वदिच्छया । यथा ममोदरे
लोकाः सर्वे दृष्टास्त्वया प्रभो । तथैव दृष्टाः कात्स्न्येन मया लोकास्तवोदरे ॥ ४३ ॥ ततो वर्षसहस्रान्ते ह्युपावृत्तस्य मेऽनघ । नूनं मत्सरभावेन
मां वशीकर्त्तुमिच्छता । आशु द्वाराणि सर्वाणि घटितानि त्वया पुनः ॥ ४४ ॥ ततो मया महाभाग सञ्चिन्त्य स्वेन चेतसा । लब्धो नाभ्यां प्रवे
शस्तु पद्मसूत्राद्विनिर्गमः ॥ ४५ ॥ माभूत्ते मनसोऽल्पोऽपि व्याघातोऽयं कथञ्चन । इत्येषानुगतिर्विष्णोः कार्याणामौपसर्गिकी ॥ ४६ ॥ यन्म
यानन्तरं कार्यं मयाध्यवसितं त्वयि । त्वाञ्चावाधितुकामेन क्रीडापूर्वं यदृच्छया । आशु द्वाराणि सर्वाणि घटितानि मया पुनः ॥ ४७ ॥ न तेऽन्य
थावमन्तव्यो मान्यः पूज्यश्च मे भवान् । सर्वं मर्षय कल्याण यन्मयाऽपकृतन्तव । तस्मान्मयोच्यमानस्त्वं पद्मादवतर प्रभो ॥ ४८ ॥ नाहं भवन्तं

शक्नोमि सोढुन्तेजोमयं गुरुम् । स चोवाच वरं ब्रूहि पद्मादवतराम्यम् ॥ ४९ ॥ विष्णुरुवाच ॥ पुत्रो भव ममारिघ्न मुदं प्राप्स्यासि शोभनम् । सत्य
धनो महायोगी त्वमीड्यः प्रणवात्मकः ॥ ५० ॥ अद्यप्रभृति सर्वेश श्वेतोष्णीषविभूषणः । पद्मयोनिरितीत्येवं ख्यातो नाम्ना भविष्यसि । पुत्रो मे
त्वं भव ब्रह्मन् सर्वलोकाधिप प्रभो ॥ ५१ ॥ ततः स भगवान् ब्रह्मा वरं गृह्य किरीटिनः । एवं भवतु चेत्युक्त्वा प्रीतात्मा गतमत्सरः
॥ ५२ ॥ प्रत्यासन्नमथायातं बालार्काभं महाननम् । भूतमत्यद्भुतं दृष्ट्वा नारायणमथाब्रवीत् ॥ ५३ ॥ अप्रमेयो महावक्त्रो दंष्ट्री व्यस्तशिरो
रुहः । दशबाहुस्त्रिशूलाङ्को नयनैर्विश्वतोमुखः ॥ ५४ ॥ लोकप्रभुः स्वयं साक्षाद्विकृतो मुञ्जमेखली । मेढ्रेणोर्ध्वेन महता नदमानोऽतिभैरवम्
॥ ५५ ॥ कः खल्वेष पुमान् विष्णो तेजोराशिर्महाद्युतिः । व्याप्य सर्वा दिशो द्याञ्च इत एवाभिवर्त्तते ॥ ५६ ॥ तेनैवमुक्तो भगवान् विष्णुर्ब्रह्माणम
ब्रवीत् । पद्भ्यान्तलनिपातेन यस्य विक्रमतोऽर्णवे । वेगेन महताकाशे व्यथिताश्च जलाशयाः ॥ ५७ ॥ छटाभिर्विष्णुतोऽत्यर्थं सिच्यते पद्म
सम्भवः । घ्राणजेन च वातेन कम्पमानं त्वया सह । दोधूयते महापद्मं स्वच्छन्दं मम नाभिजम् ॥ ५८ ॥ स एष भगवानीशो ह्यनादिश्चान्तकृ
द्विभुः । भवानहञ्च स्तोत्रेण ह्युपतिष्ठाव गोध्वजम् ॥ ५९ ॥ ततः क्रुद्धोऽम्बुजाभाक्षं ब्रह्मा प्रोवाच केशवम् । न भवान् न्यूनमात्मानं लोकानां
योनिमुत्तमम् ॥ ६० ॥ ब्रह्माणं लोककर्त्तारं माञ्च वेत्ति सनातनम् । कोऽयं भोः शङ्करो नाम ह्यावयोर्व्यतिरिच्यते ॥ ६१ ॥ तस्य तत् क्रोधजं
वाक्यं श्रुत्वा विष्णुरभाषत । मा मैवं वद कल्याण परिवादं महात्मनः ॥ ६२ ॥ मायायोगेश्वरो धर्मो दुराधर्षो वरप्रदः । हेतुरस्यात्र जगतः पुराणः
पुरुषोऽव्ययः ॥ ६३ ॥ जीवः खल्वेष जीवानां ज्योतिरेकं प्रकाशते । बालक्रीडनकैर्देवः क्रीडते शङ्करः स्वयम् ॥ ६४ ॥ प्रधानमव्ययं ज्योतिरव्यक्तं
प्रकृतिस्तमः । अस्य चैतानि नामानि नित्यं प्रसवधर्मिणः । यः कः स इति दुःखार्त्तैर्मृग्यते यतिभिः शिवः ॥६५॥ एष बीजी भवान् बीजमहं योनिः
सनातनः । एवमुक्तोऽथ विश्वात्मा ब्रह्मा विष्णुमभाषत ॥ ६६ ॥ भवान्योनिरहं बीजं कथं बीजी महेश्वरः । एतन्मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि
॥ ६७ ॥ ज्ञात्वा चैवं समुत्पत्तिं ब्रह्मणा लोकतन्त्रिणा । इदं परमसादृश्यं प्रश्नमभ्यवदद्धरिः ॥ ६८ ॥ अस्मान्महत्तरं गुह्यं भूतमन्यन्न विद्यते ।
महतः परमं धाम शिवमध्यात्मिनां पदम् ॥ ६९ ॥ द्वैधीभावेन चात्मानं प्रविभज्य व्यवस्थितः । निष्कलः सूक्ष्ममव्यक्तः सकलश्च महेश्वरः ॥ ७० ॥
अस्य मायाविधिज्ञस्य अगम्यगहनस्य च । पुरा लिङ्गं भवद्बीजं प्रथमं त्वादिसर्गिकम् ॥ ७१ ॥ मयि योनौ समायुक्तं तद्बीजं कालपर्ययात् ।
हिरण्मयमपारन्तद्योन्यामण्डमजायत ॥ ७२ ॥ शतानि दशवर्षाणामण्डञ्चाप्सु प्रतिष्ठितम् । अन्ते वर्षसहस्रस्य वायुना तद्द्विधा कृतम् ॥ ७३ ॥

मेकं द्यौर्जज्ञे कपालमपरं क्षितिः । उल्वन्तस्य महोत्सेधं योऽसौ कनकपर्वतः ॥ ७४ ॥ ततस्तस्मात् प्रबुद्धात्मा देवो देववरः प्रभुः ।
गर्भो भगवानहं जज्ञे चतुर्भुजः ॥ ७५ ॥ ततो वर्षसहस्रान्ते वायुना तद्द्विधाकृतम् । अतारार्केन्दुनक्षत्रं शून्यं लोकमवेक्ष्य च । कोऽयमत्रे
याते कुमारास्तेऽभवंस्तदा ॥ ७६ ॥ प्रियदर्शनास्सुतनवो येऽतीताः पूर्वजास्तव । भूयो वर्षसहस्रान्ते तत एवात्मजास्तव । भुवनानलस
पद्मपत्रायतेक्षणाः ॥ ७७ ॥ श्रीमान् सनत्कुमारस्तु ऋभुश्चैवोर्द्धरेतसौ । सनातनश्च सनकस्तथैव च सनन्दनः । उत्पन्नाः समकालं ते बुद्ध्याऽ
दर्शनाः ॥ ७८ ॥ उत्पन्नाः प्रतिघात्मानो जगदुश्च तदैव हि । नारप्स्यन्ते च कर्माणि तापत्रयविवर्जिताः ॥ ७९ ॥ अस्य सौम्यं बहुक्लेशं
कसमन्वितम् । जीवितं मरणं चैव संभवञ्च पुनः पुनः ॥ ८० ॥ स्वप्नभूतं पुनः स्वर्गं दुःखानि नरकांस्तथा । विदित्वा चागमं सर्वमवश्यं
यताम् ॥ ८१ ॥ ऋभुं सनत्कुमारञ्च दृष्ट्वा तव वशे स्थितौ । त्रयस्तु त्रीन् गुणान् हित्वा आत्मजाः सनकादयः । वैवर्त्तेन तु
निवृत्तास्ते महौजसः ॥ ८२ ॥ ततस्तेष्वप्रवृत्तेषु सनकादिषु वै त्रिषु । भविष्यसि विमूढस्तु मायया शङ्करस्य तु ॥८३ ॥ एवं कल्पे तु वैकल्पे
श्यति तेऽनघ । कल्पशेषाणि भूतानि सूक्ष्माणि पार्थिवानि च ॥ ८४ ॥ सा चैषा ह्यैश्वरी माया जगतः समुदाहृता । स एष पर्वतो मेरुर्दे
उदाहृतः ॥ ८५ ॥ तवैवेदं हि माहात्म्यं दृष्ट्वा चात्मानमात्मना । ज्ञात्वा चेश्वरसद्भावं ज्ञात्वा मामम्बुजेक्षणम् ॥ ८६ ॥ महादेवं महायोगं
वरदं प्रभुम् । प्रणवात्मानमासाद्य नमस्कृत्या जगद्गुरुम् । त्वाञ्च माञ्चैव संक्रुद्धो निःश्वासान्निर्दहेदयम् ॥८७॥ एवं ज्ञात्वा महायोगं अभ्युत्ति
बलः । अहं त्वामग्रतः कृत्वा स्तोष्येऽहमनलप्रभम् ॥ ८८ ॥ सूत उवाच ॥ ब्रह्माणमग्रतः कृत्वा ततः स गरुडध्वजः । अतीतैश्च भवि
र्त्तमानैस्तथैव च । नामभिश्छान्दसैश्चैव इदं स्तोत्रमुदीरयत् ॥ ८९ ॥ नमस्तुभ्यं भगवते सुव्रतेऽनन्ततेजसे । नमः क्षेत्राधिपतये बीजिने
नमः ॥ ९० ॥ अमेढ्रायोर्द्ध्वमेढ्राय नमो वैकुण्ठरेतसे । नमो ज्येष्ठाय श्रेष्ठाय अपूर्वप्रथमाय च ॥ ९१ ॥ नमो हव्याय पूज्याय सद्यो
वै नमः । गह्वराय धनेशाय हैमचीराम्बराय च ॥ ९२ ॥ नमस्ते ह्यस्मदादीनां भूतानां प्रभवाय च । वेदकर्म्मावदानानां
प्रभवे नमः ॥ ९३ ॥ नमो योगस्य प्रभवे सांख्यस्य प्रभवे नमः । नमो ध्रुवनिशीथानामृषीणां पतये नमः ॥ ९४ ॥ विद्यु
घानां गर्ज्जितप्रभवे नमः । उदधीनाञ्च प्रभवे द्वीपानां प्रभवे नमः ॥ ९५ ॥ अद्रीणां प्रभवे चैव वर्षाणां प्रभवे नमः । नमो नदानां प्रभवे
प्रभवे नमः ॥ ९६ ॥ नमश्चौषधिप्रभवे वृक्षाणां प्रभवे नमः । धर्म्माध्यक्षाय धर्म्माय स्थितीनां प्रभवे नमः ॥ ९७ ॥ नमो रसानां

वि रत्नानां प्रभवे नमः । नमः क्षणानां प्रभवे कलानां प्रभवे नमः ॥ ९८ ॥ निमेषप्रभवे चैव काष्ठानां प्रभवे नमः । अहोरात्रार्द्धमासानां मासानां
वे नमः ॥ ९९ ॥ नम ऋतूनां प्रभवे संख्यायाः प्रभवे नमः । प्रभवे च परार्द्धस्य परस्य प्रभवे नमः ॥ १०० ॥ नमः पुराणप्रभवे युगस्य प्रभवे
ः । चतुर्विधस्य सर्गस्य प्रभवेऽनन्तचक्षुषे ॥ १०१ ॥ कल्पोदये निबद्धानां वार्त्तानां प्रभवे नमः । नमो विश्वस्य प्रभवे ब्रह्मादिप्रभवे नमः
१०२ ॥ विद्यानां प्रभवे चैव विद्यानां पतये नमः । नमो व्रतानां पतये मन्त्राणां पतये नमः ॥१०३॥ पितॄणां पतये चैव पशूनां पतये नमः । वाग्वृ
य नमस्तुभ्यं पुराणवृषभाय च ॥ १०४ ॥ सुचारुचारुकेशाय ऊर्द्ध्वचक्षुःशिराय च । नमः पशूनां पतये गोवृषेन्द्रध्वजाय च ॥ १०५ ॥ प्रजाप
नां पतये सिद्धानां पतये नमः । गरुडोरगसर्पाणां पक्षिणां पतये नमः ॥ १०६ ॥ गोकर्णाय च गोप्त्राय शङ्कुकर्णाय वै नमः । वाराहायाप्रमेयाय
ोधिपतये नमः ॥ १०७ ॥ नमो ह्यप्सरसांपतये गणानां (पतये) ह्रीमये नमः।अम्भसां पतये चैव तेजसां पतये नमः ॥१०८॥ नमोऽस्तु लक्ष्मीपतये
मते ह्रीमते नमः । बलाबलसमूहाय ह्यक्षोभ्यक्षोभणाय च ॥ १०९ ॥ दीर्घशृङ्गैकशृङ्गाय वृषभाय ककुद्मिने । नमः स्थैर्याय वपुषे तेजसे सुप्रभाय
॥ ११० ॥ भूताय च भविष्याय वर्त्तमानाय वै नमः । सुवर्च्चसेऽथ वीराय शूराय ह्यतिगाय च ॥ १११ ॥ वरदाय वरेण्याय नमः सर्वगताय च ।
ो भूताय भव्याय भवाय महते तथा ॥ ११२ ॥ जनाय च नमस्तुभ्यं तपसे वरदाय च । नमो वन्द्याय मोक्षाय जनाय नरकाय च ॥ ११३ ॥
ाय भजमानाय इष्टाय याजकाय च । अभ्युदीर्णाय दीप्ताय तत्त्वाय निर्गुणाय च ॥ ११४ ॥ नमः पाशाय हस्ताय नमः
भरणाय च । हुताय ह्यपहुताय प्रहुतप्राशिताय च ॥ ११५ ॥ नमोऽस्त्विष्टाय मूर्त्ताय ह्यग्निष्टोमर्त्विजाय च । नम ऋताय
पाय भूताधिपतये नमः ॥ ११६ ॥ सदस्याय नमश्चैव दक्षिणावभृथाय च । अहिंसायाथ लोकानां पशुमन्त्रौषधाय च ॥ ११७ ॥
स्तुष्टिप्रदानाय त्र्यम्बकाय सुगन्धिने । नमोऽस्त्विन्द्रियपतये परिहाराय स्रग्विणे ॥ ११८ ॥ विश्वाय विश्वरूपाय विश्वतोऽक्षिमुखाय च । सर्वतः
णेपादाय रुद्रायाप्रमिताय च ॥ ११९ ॥ नमो हव्याय कव्याय हव्यकव्याय वै नमः । नमः सिद्धाय मेध्याय चेष्टाय त्वव्ययाय च ॥ १२० ॥
ोराय सुघोराय ह्यक्षोभ्यक्षोभणाय च । सुमेधसे सुप्रजाय दीप्ताय भास्कराय च ॥ १२१ ॥ नमो नमः सुपर्णाय तपनीयनिभाय च । विरूपाक्षाय
क्षाय पिङ्गलाय महौजसे ॥ १२२ ॥ दृष्टिघ्नाय नमश्चैव नमः सौम्येक्षणाय च । नमो धूम्राय श्वेताय कृष्णाय लोहिताय च ॥ १२३ ॥ पिशि
य पिशङ्गाय पीताय च निषङ्गिणे । नमस्ते सविशेषाय निर्विशेषाय वै नमः ॥ १२४ ॥ नमो वै पद्मवर्णाय मृत्युघ्नाय च मृत्यवे । नमः श्यामाय

गौराय कद्रवे रोहिताय च ॥ १२५ ॥ नमः कान्ताय सन्ध्याभ्रवर्णाय बहुरूपिणे। नमः कपालहस्ताय दिग्वस्त्राय कपर्दिने ॥ १२६ ॥ अप्रमे
याय शर्वाय ह्यवध्याय वराय च। पुरस्तात् पृष्ठतश्चैव बिभ्राणाय कृशानवे ॥ १२७ ॥ दुर्गाय महते चैव रोधाय कपिलाय च। अर्कप्रभशरी
राय बलिने रंहसाय च ॥ १२८ ॥ पिनाकिने प्रसिद्धाय स्फीताय प्रसृताय च। सुमेधसेऽक्षमालाय दिग्वासाय शिखण्डिने ॥ १२९ ॥
चित्राय चित्रवर्णाय विचित्राय धराय च। चेकितानाय तुष्टाय नमस्त्वनिहिताय च ॥ १३० ॥ नमः क्षान्ताय शान्ताय वज्रसंहननाय च। रक्षो
घ्नाय मखघ्नाय शितिकण्ठोर्ध्वरेतसे ॥ १३१ ॥ अरिहाय कृतान्ताय तिग्मायुधधराय च। समोदाय प्रमोदाय इरिणायैव ते नमः ॥ १३२ ॥
प्रणवप्रणवेशाय भक्तानां शर्मदाय च। मृगव्याधाय दक्षाय दक्षयज्ञहराय च ॥ १३३ ॥ सर्वभूताय भूताय सर्वेशातिशयाय च। पुरभेत्रे
च शान्ताय सुगन्धाय वरेशवे ॥ १३४ ॥ पुष्पवन्तस्वरूपाय भगनेत्रान्तकाय च। कणादाय वरिष्ठाय कामाङ्गदहनाय च ॥ १३५ ॥
तेः करालचक्राय नागेन्द्रदमनाय च। दैत्यानामन्तकायाथो दिव्याक्रन्दकराय च ॥ १३६ ॥ श्मशानरतिनित्याय नमस्त्र्यम्बकधारिणे।
नमस्ते प्राणपालाय धवमालाधराय च ॥ १३७ ॥ प्रहीणशोकैर्विविधैर्भूतैः परिष्कृताय च। नरनारीशरीराय देव्याः प्रियकराय च ॥ १३८ ॥
जटिने दण्डिने तुभ्यं व्यालयज्ञोपवीतिने। नमोऽस्तु नृत्यशीलाय वाद्यनृत्यप्रियाय च ॥ १३९ ॥ मन्यवे गीतशीलाय सुगीतिगायते नमः।
कटङ्कराय भीमाय चोग्ररूपधराय च ॥ १४० ॥ विभीषणाय भीमाय भगप्रमथनाय च। सिद्धसङ्घातगीताय महाभागाय वै नमः ॥ १४१ ॥
नमो मुक्ताट्टहासाय क्ष्वेडितास्फोटिताय च। नदते कूर्दते चैव नमः प्रमुदिताय च ॥ १४२ ॥ नमोऽद्भुताय स्वपते धावते प्रस्थिताय च। ध्यायते
जृम्भते चैव तुदते द्रवते नमः ॥ १४३ ॥ चलते क्रीडते चैव लम्बोदरशरीरिणे। नमः कृताय कम्पाय मुण्डाय विकराय च ॥ १४४ ॥
नम उन्मत्तवेषाय किङ्किणीकाय वै नमः। नमो विकृतवेषाय क्रूरोग्रामर्षणाय च ॥ १४५ ॥ अप्रमेयाय दीप्ताय दीप्तये निर्गुणाय च। नमः
प्रियाय वादाय मुद्रामणिधराय च ॥ १४६ ॥ नमस्तोकाय तनवे गुणैरप्रतिमाय च। नमो गणाय गुह्याय अगम्यागमनाय च ॥ १४७ ॥ लोक
धात्री त्वियं भूमिः पादौ सज्जनसेवितौ। सर्वेषां सिद्धयोगानामधिष्ठानं तवोदरम् ॥१४८॥ मध्येऽन्तरिक्षं विस्तीर्णं तारागणविभूषितम्। तारापथ इवा
भाति श्रीमान् हारस्तवोरसि ॥ १४९ ॥ दिशो दश भुजास्ते वै केयूराङ्गदभूषिताः। विस्तीर्णपरिणाहश्च नीलाम्बुदचयोपमः ॥ १५० ॥ कण्ठस्ते
शोभते श्रीमान् हेमसूत्रविभूषितः। दंष्ट्राकरालदुर्धर्षमनौपम्यं मुखं तव ॥१५१॥ पद्ममालाकृतोष्णीषं शीर्षं ते शोभते कथम्। दीप्तिः सूर्ये वपुश्चन्द्रे

भूर्ह्यनिलो बले ॥ १५२ ॥ तैक्ष्ण्यमग्नौ प्रभा चन्द्रे खे शब्दः शैत्यमप्सु च । अक्षरोत्तमनिष्पन्दान् गुणानेतान्विदुर्बुधाः ॥ १५३ ॥ जपो
महायोगी महादेवो महेश्वरः । पुरेशयो गुहावासी खेचरो रजनीचरः ॥ १५४ ॥ तपोनिधिर्गुहगुरुर्नन्दनो नन्दिवर्द्धनः । हयशीर्षो धराधाता
॥ भूतिवाहनः ॥ १५५ ॥ बोद्धव्यो बोधनो नेता धूर्वहो दुष्प्रकम्पकः । बृहद्रथो भीमकर्मा बृहत्कीर्तिर्धनञ्जयः ॥ १५६ ॥ घण्टाप्रियो ध्वजी
पताकाध्वजिनीपतिः । कवची पट्टिशी शङ्खी पाशहस्तः परश्वभृत् ॥ १५७ ॥ अगमस्त्वनघः शूरो देवराजारिमर्दनः । त्वां प्रसाद्य
स्माभिर्द्विषन्तो निहता युधि ॥ १५८ ॥ अग्निस्त्वं चार्णवान् सर्वान् पिबन्नैव न तृप्यसे । क्रोधागारः प्रसन्नात्मा कामहा कामदः प्रियः॥ १५९ ॥
गो ब्रह्मचारी च गोघ्नस्त्वं शिष्टपूजितः । वेदानामव्ययः कोशस्त्वया यज्ञः प्रकल्पितः ॥ १६० ॥ हव्यञ्च वेदं वहति वेदोक्तं हव्यवाहनः ।
त्वयि महादेव वयं प्रीता भवामहे ॥ १६१ ॥ भवानीशो नादिमान् धामराशिर्ब्रह्मा लोकानान्त्वं कर्त्ता त्वादिसर्गः । साङ्ख्याः प्रकृतिभ्यः परमं
वेदित्वा क्षीणध्यानास्ते न मृत्युं विशन्ति ॥ १६२ ॥ योगेन त्वान्ध्यानिनो नित्ययुक्ताः ज्ञात्वा भोगान् सन्त्यजन्ते पुनस्तान् । येऽन्ये मर्त्त्यास्त्वां
विशुद्धास्ते कर्मभिर्दिव्यभोगान् भजन्ते ॥ १६३ ॥ अप्रमेयस्य तत्त्वस्य यथा विद्मः स्वशक्तितः । कीर्तितं तव माहात्म्यमपारं
त्मनः । शिवो नो भव सर्वत्र योऽसि सोऽसि नमोऽस्तु ते ॥ १६४ ॥ इति श्रीमहापुराणे वायुप्रोक्ते शार्वस्तवं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥
उवाच ॥ संपिबन्निव तौ दृष्ट्वा मधुपिङ्गायतेक्षणः । प्रहृष्टवदनोऽत्यर्थमभवच्च स्वकीर्त्तनात् ॥ १ ॥ उमापतिर्विरूपाक्षो दक्षयज्ञविनाशनः ।
ी खण्डपरशुर्भूतप्रान्तस्त्रिलोचनः ॥ २ ॥ ततः स भगवान् देवः श्रुत्वा वाक्यामृतं तयोः । जानन्नपि महाभागः प्रीतपूर्वमथाब्रवीत् ॥ ३ ॥
वन्तौ महात्मानौ परस्परहितैषिणौ । समेतावम्बुजाभाक्षौ तस्मिन् घोरे जलप्लवे ॥ ४ ॥ तावूचतुर्महात्मानौ सन्निरीक्ष्य परस्परम् । भगवन्
तथ्येन विज्ञातेन त्वया विभो । कुत्र वा सुखमानन्त्यमिच्छाचारमृते त्वया ॥ ५ ॥ उवाच भगवान् देवो मधुरश्लक्ष्णया गिरा । भो भो हरि
त्वां त्वां च कृष्ण वदाम्यहम् ॥ ६ ॥ प्रीतोऽहमनया भक्त्या शाश्वताक्षरयुक्तया । भवन्तौ माननीयौ वै मम ह्यर्हतरावुभौ । युवाभ्यां किं
द्य वराणां वरमुत्तमम् ॥ ७ ॥ तेनैवमुक्ते वचने ब्रह्माणं विष्णुरब्रवीत् । ब्रूहि ब्रूहि महाभाग वरो यस्ते विवक्षितः ॥८॥ प्रजाकामोऽस्म्यहं विष्णो
च्छामि धूर्वहम् । ततः स भगवान् ब्रह्मा वरेप्सुः पुत्रलिप्सया ॥ ९ ॥ अथ विष्णुरुवाचेदं प्रजाकामं प्रजापतिम् । वीरमप्रतिमं पुत्रं यत्त्वमि
र्थयस्व ॥ १० ॥ पुत्रत्वेनाभियुञ्जस्व त्वं देवदेवं महेश्वरम् । स तस्य वाक्यं संपूज्य केशवस्य पितामहः ॥ ११ ॥ ईशानं वरदं रुद्रमभिवाद्य

कृताञ्जलिः । उवाच पुत्रकामस्तु वाक्यानि सह विष्णुना ॥ १२ ॥ यदि मे भगवान् प्रीतः पुत्रकामस्य नित्यशः । पुत्रो मे भव विश्वात्मन् स्वतुल्यो वापि धूर्जटिः । नान्यं वरमहं वव्रे प्रीते त्वयि महेश्वर ॥ १३ ॥ तस्य तां प्रार्थनां श्रुत्वा भगवान् भगनेत्रहा । निष्कल्मषममायश्च बाढमित्यब्रवीद्वचः ॥ १४ ॥ यदा कार्यसमारम्भे कस्मिंश्चित्तव सुव्रत । अनिष्पत्तौ च कार्यस्य क्रोधस्त्वां समुपेष्यति । आत्मैकादश ये रुद्रा विहिताः प्राणहेतवः ॥ १५ ॥ सोऽहमेकादशात्मा वै शूलहस्तः सहानुगः । ऋषिर्मित्रो महात्मा वै ललाटाद्भविता तदा ॥ १६ ॥ प्रसादमतुलं कृत्वा ब्रह्मणस्तादृशं पुरा । विष्णुं पुनरुवाचेदं ददामि च वरन्तव ॥ १७ ॥ स होवाच महाभागो विष्णुर्भवमिदं वचः । सर्व्वमेतत् कृतं देव परितुष्टोऽसि मे यदि । त्वयि मे सुप्रतिष्ठाऽस्तु भक्तिरम्बुदवाहन ॥ १८ ॥ एवमुक्तस्ततो देवस्तमभाषत केशवम् । विष्णो शृणु यथा देव प्रीतोऽहन्तव शाश्वत ॥ १९ ॥ प्रकाशश्चाप्रकाशश्च जङ्गमं स्थावरञ्च यत् । विश्वरूपमिदं सर्व्वं रुद्रनारायणात्मकम् ॥ २० ॥ अहमग्निर्भवान् सोमो भवान् रात्रिरहं दिनम् । भवानृतमहं सत्यं भवान् क्रतुरहं फलम् ॥ २१ ॥ भवान् ज्ञानमहं ज्ञेयं यज्जपित्वा सदा जनाः । मां विशन्ति त्वयि प्रीते जनाः सुकृतकारिणः । आवाभ्यां सहिता चैव गतिर्नान्या युगक्षये ॥ २२ ॥ आत्मानं प्रकृतिं विद्धि मां विद्धि पुरुषं शिवम् । भवानर्द्धशरीरं मे त्वहन्तव यथैव च ॥ २३ ॥ वामपार्श्वमहम्मह्यं श्यामं श्रीवत्सलक्षणम् । त्वञ्च वामेतरं पार्श्वं त्वहं वै नीललोहितः ॥ २४ ॥ त्वञ्च मे हृदयं विष्णो तव चाहं हृदि स्थितः । भवान् सर्व्वस्य कार्यस्य कर्त्ताहमधिदैवतम् ॥२५॥ तदेहि स्वस्ति ते वत्स गमिष्याम्यम्बुदप्रभ । एवमुक्त्वा गतो विष्णोर्देवोऽन्तर्द्धानमीश्वरः ॥ २६ ॥ ततः सोऽन्तर्हिते देवे संप्रहृष्टस्तदा पुनः । अशेत शयने भूप प्रविश्यान्तर्जले हरिः ॥ २७ ॥ तं पद्मं पद्मगर्भाभं पद्माक्षः पद्मसम्भवः । सम्प्रहृष्टमना ब्रह्मा भेजे ब्राह्मं तदासनम् ॥ २८ ॥ अथ दीर्घेण कालेन तत्राप्यप्रतिमावुभौ । महाबलौ महासत्त्वौ भ्रातरौ मधुकैटभौ ॥ २९ ॥ ऊचतुश्चैव वचनं भक्ष्यो वै नौ भविष्यसि । एवमुक्त्वा तु तौ तस्मिन्नन्तर्द्धानं गतावुभौ ॥ ३० ॥ दारुणन्तु तयोर्भावं ज्ञात्वा पुष्करसम्भवः । माहात्म्यं चात्मनो बुद्धा विज्ञातुमुपचक्रमे ॥ ३१ ॥ कर्णिकाघटनं भूयो नाभ्यजानाद्यदा गतिम् । ततः स पद्मनालेन अवतीर्य्य रसातलम् । कृष्णाजिनोत्तरासङ्गन्ददर्शोऽन्तर्जले हरिम् ॥ ३२ ॥ स च तं बोधयामास विबुद्धं चेदमब्रवीत् । भूतेभ्यो मे भयं देव त्रायस्वोत्तिष्ठ शङ्करु ॥ ३३ ॥ ततः स भगवान् विष्णुः सप्रहासमरिन्दमः । न भेतव्यं न भेतव्यमित्युवाच मुनिः स्वयम् ॥३४॥ तस्मात्पूर्वं त्वया चोक्तं भूतेभ्यो मे महद्भयम् । तस्माद्भूतादिवाक्यैस्तौ दैत्यौ त्वं नाशयिष्यसि ॥ ३५ ॥ भूर्भुवःस्वस्ततो देवं विविशुस्तमयोनिजम् । ततः प्रदक्षिणं कृत्वा तमेवासीनमागतम् ॥ ३६ ॥ गते

तस्मिंस्ततोऽनन्त उद्गीर्य भ्रातरौ मुखात् । विष्णुं जिष्णुञ्च प्रोवाच ब्रह्माणमभिरक्षताम् । मधुकैटभयोर्ज्ञात्वा तयोरागमनं पुनः ॥ २७ ॥ चक्राते
सादृश्यं विष्णोर्जिष्णोश्च सत्तमौ । कृतसादृश्यरूपौ तौ तावेवाभिमुखौ स्थितौ॥२८॥ततस्तौ प्रोचतुर्दैत्यौ ब्रह्माणं दारुणं वचः ॥ अस्माकं युध्यमा
मध्ये वै प्राश्निको भव ॥ २९ ॥ ततस्तौ जलमाविश्य संस्तम्भ्यापः स्वमायया । चक्रतुस्तुमुलं युद्धं यस्य येनेप्सितं तदा ॥ ४० ॥ तेषान्तु
मानानां दिव्यं वर्षशतङ्गतम् । न च युद्धमदोत्सेको ह्यन्योन्यं संन्यवर्त्तत ॥ ४१ ॥ लक्षणद्वयसंस्थानाद्रूपवन्तौ स्थितेङ्गितौ । सादृश्याद्व्या
ना ब्रह्मा ध्यानमुपागमत् ॥ ४२ ॥ स तयोरन्तरं बुद्ध्वा ब्रह्मा दिव्येन चक्षुषा । पद्मकेसरजं सूक्ष्मं ववन्ध कवचन्तयोः । आमेखलञ्च गात्रञ्च ततो
मुदाहरत् ॥ ४३ ॥ जपतस्त्वभवत्कन्या विश्वरूपसमुत्थिता । पद्मेन्दुवदनप्रख्या पद्महस्ता शुभा सती । तां दृष्ट्वा व्यथितौ दैत्यौ भयाद्व
र्जितौ ॥ ४४ ॥ ततः प्रोवाच तां कन्यां ब्रह्मा मधुरया गिरा । काऽत्र त्वमवगन्तव्या ब्रूहि सत्यमनिन्दिते ॥ ४५ ॥ साम्ना संपूज्य सा कन्या
प्राञ्जलिस्तदा । मोहिनीं विद्धि मां मायां विष्णोः सन्देशकारिणीम् ॥ ४६ ॥ त्वया सङ्कीर्त्त्यमानाऽहं ब्रह्मन् प्राप्ता त्वरायुता । अस्याः प्रीतमना
गौणं नाम चकार ह ॥ ४७ ॥ मया च व्याहृता यस्मात्त्वञ्चैव समुपस्थिता । महाव्याहृतिरित्येव नाम ते विचरिष्यति ॥ ४८ ॥ उत्थिता च
भित्त्वा सावित्री तेन चोच्यते । एकानंशात्तु यस्मात्त्वमनेकांशा भविष्यसि॥ ४९॥ गौणानि तावदेतानि कर्मजान्यपराणि च । नामानि ते भविष्य
त्प्रसादात् शुभानने ॥ ५० ॥ ततस्तौ पीडयमानौ तु वरमेनमयाचताम् । अनावृतं नौ मरणं पुत्रत्वञ्च भवेत्तव ॥ ५१ ॥ तथेत्युक्त्वा ततस्तूर्ण
यमसादनम् । अनयत् कैटभं विष्णुर्जिष्णुश्चाप्यनयन्मधुम् ॥ ५२ ॥ एवन्तौ निहतौ दैत्यौ विष्णुना जिष्णुना सह । प्रीतेन ब्रह्मणा चाथ लो
हितकाम्यया ॥ ५३ ॥ पुत्रत्वमीशेन यथा ह्यात्मा दत्तो निबोधत । विष्णुना जिष्णुना सार्द्धं मधुकैटभयोस्तथा । सम्पराये व्यतिक्रान्ते ब्रह्मा
मभाषत ॥ ५४ ॥ अद्य वर्षशतं पूर्णं समयः प्रत्युपस्थितः । संक्षेपसंप्लवङ्घोरं स्वस्थानं यामि चाप्यहम् ॥ ५५ ॥ स तस्य वचसा देवः संहार
तदा । महीं निस्थावरां कृत्वा प्रकृतिस्थांश्च जङ्गमान् ॥ ५६ ॥ यदि गोविन्द भद्रन्ते क्षिप्तस्ते यादसां पतिः । ब्रूहि यत् करणीयं स्यान्मया ते
वर्द्धन ॥ ५७ ॥ बाढं शृणु त्वं हेमाभ पद्मयोने वचो मम । प्रसादो यस्त्वया लब्ध ईश्वरात् पुत्रलिप्सया ॥ ५८ ॥ तन्तथा सफलं कृत्वा
भूदनृणो भवान् । चतुर्विधानि भूतानि सृज त्वं विसृजस्व वा ॥ ५९ ॥ अवाप्य संज्ञाङ्गोविन्दात् पद्मयोनिः पितामहः । प्रजाः स्रष्टुमनास्ते
पश्चं तनो महत् ॥ ६० ॥ तस्यैवन्तप्यमानस्य न किञ्चित्समवर्त्तत । ततो दीर्घेण कालेन दुःखात् क्रोधो व्यवर्द्धत ॥ ६१ ॥ सक्रोधाविष्टने

मपतन्नश्रुबिन्दवः। ततस्तेभ्योऽश्रुबिन्दुभ्यो वातपित्तकफात्मकाः ॥ ६२ ॥ महाभागा महासत्त्वाः स्वस्तिकैरभ्यलङ्कृताः। प्रकीर्णकेशाः सर्पा
प्रादुर्भूता महाविषाः ॥ ६३ ॥ सर्पास्तथाग्रजान् दृष्ट्वा ब्रह्मात्मानमनिन्दत। अहो धिक् तपसा मह्यं फलमीदृशकं यदि । लोकवैनाशिकी ज
आदावेव प्रजा मम ॥ ६४ ॥ तस्य तीव्राभवन्मूर्च्छा क्रोधामर्षसमुद्भवा। मूर्च्छाभितापेन तदा जहौ प्राणान् प्रजापतिः ॥ ६५ ॥ तस्याप्रतिम
र्यस्य देहात् कारुण्यपूर्वकम्। आत्मैकादश ते रुद्राः प्रोद्भूता रुदतस्तथा। रोदनात् खलु रुद्रास्ते रुद्रत्वं तेन तेषु तत् ॥ ६६ ॥ ये रुद्राः ख
ते प्राणा ये प्राणास्ते तदात्मकाः। प्राणाः प्राणभृतां ज्ञेयाः सर्वभूतेष्ववस्थिताः ॥ ६७ ॥ अत्युग्रस्य महत्त्वस्य साधुना चरितस्य च। तस
प्राणान् ददौ भूयस्त्रिशूली नीललोहितः। ललाटात् पद्मयोनेस्तु प्रभुरेकादशात्मकः ॥ ६८ ॥ ब्रह्मणः सोऽददात् प्राणानात्मजः स तदा प्रभुः
प्रहृष्टवदनो रुद्रः किंचित् प्रत्यागतासवम्। अभ्यभाषत्तदा देवो ब्रह्माणं परमं वचः ॥ ६९ ॥ उपयाचस्व मां ब्रह्मन् स्मर्त्तुमर्हसि चात्मनः
मां च वेत्थात्मजं रुद्रं प्रसादं कुरु मे प्रभो ॥ ७० ॥ श्रुत्वा त्विदं वचस्तस्य प्रभूतश्च मनोगतम्। पितामहः प्रसन्नात्मा नेत्रे फुल्लाम्बुजप्रभैः ॥ ७१
ततः प्रत्यागतप्राणः स्निग्धगम्भीरया गिरा। उवाच भगवान् ब्रह्मा शुद्धजाम्बूनदप्रभः ॥ ७२ ॥ भो भो वद महाभाग आनन्दयसि मे मनः। को भवा
विश्वभूतिस्त्वं स्थित एकादशात्मकः ॥ ७३ ॥ एवमुक्तो भगवता ब्रह्मणाऽनन्ततेजसा। ततः प्रत्यवदद्रुद्रो ह्यभिवाद्यात्मजैः सह ॥ ७४ ॥ यत्ते व
महं ब्रह्मन् याचितो विष्णुना सह। पुत्रो मे भव देवेति त्वत्तुल्यो वापि धूर्वहः ॥ ७५ ॥ लोकेषु विश्रुतैः कार्यं सर्वैर्विश्वात्मसम्भवैः। विषादन्त्य
देवेश लोकांस्त्वं स्रष्टुमर्हसि ॥ ७६ ॥ एवं स भगवानुक्तो ब्रह्मा प्रीतमनाभवत्। रुद्रं प्रत्यवदद्भूयो लोकान्ते नीललोहितम् ॥ ७७ ॥ साहाय्यं म
कार्यार्थं प्रजाः सृज मया सह। बीजी त्वं सर्वभूतानां तत्प्रपन्नस्तथा भव। बाढमित्येव तां वाणीं प्रतिजग्राह शङ्करः ॥ ७८ ॥ ततः स भगवान् ब्रह
कृष्णाजिनविभूषितः। मनोऽग्रे सोऽसृजद्देवो भूतानां धारणां ततः। जिह्वां सरस्वतीं चैव ततस्तां विश्वरूपिणीम् ॥७९॥ भृगुमङ्गिरसं दक्षं पुलस्त्यं पुल
क्रतुम्। वसिष्ठश्च महातेजाः ससृजे सप्त मानसान् ॥ ८० ॥ पुत्रानात्मसमानन्यान् सोऽसृजद्विश्वसम्भवान्। तेषां भूयोऽनुमार्गेण गावो वक्राद्द्विजा
॥ ८१ ॥ ओङ्कारप्रमुखान् वेदानभिमान्याश्च देवताः। एवमेतान् यथाप्रोक्तान् ब्रह्मा लोकपितामहः ॥ ८२ ॥ दक्षाद्यान् मानसान् पुत्रान् प्रोवाच भ
वान् प्रभुः। प्रजाः सृजत भद्रं वो रुद्रेण सह धीमता ॥ ८३ ॥ अनुगम्य महात्मानं प्रजानां पतयस्तदा। वयमिच्छामहे देव प्रजाः स्रष्टुं त्वया सह
ब्रह्मणस्त्वेष सन्देशस्तव चैव महेश्वर ॥ ८४ ॥ तैरेवमुक्तो भगवान् रुद्रः प्रोवाच तान् प्रभुः। ब्रह्मणश्चात्मजा मह्यं प्राणान् गृह्य न वै सुराः ॥ ८५

त्याग्रजाग्रजानेतान् ब्राह्मणानात्मजान्मम । ब्रह्मादिस्तम्बपर्यन्तान् सप्तलोकान्ममात्मकान् । भवन्तः स्रष्टुमर्हन्ति वचनान्मम स्वस्ति वः ॥ ८६ ॥
नैवमुक्ताः प्रत्यूचुः रुद्रमाद्यन्त्रिशूलिनम् । यथाज्ञापयसे देव तथा तद्वै भविष्यति ॥ ८७ ॥ अनुमान्य महादेवं प्रजानां पतयस्तदा । ऊचुर्दक्षं महा
मानं भवान् श्रेष्ठः प्रजापतिः । त्वां पुरस्कृत्य भद्रन्ते प्रजाः स्रक्ष्यामहे वयम् ॥ ८८ ॥ एवमस्त्विति वै दक्षः प्रत्यपद्यत भाषितम् । तैः सह स्रष्टुमारेभे
जाकामः प्रजापतिः । सर्गस्थिते ततः स्थाणौ ब्रह्मा सर्गमथासृजत् ॥ ८९ ॥ अथास्य सप्तमेऽतीते कल्पे वै सम्बभूवतुः । ऋभुः सनत्कुमारश्च तपो
ोकनिवासिनौ । ततो महर्षीनन्यान् स मानसानसृजत् प्रभुः ॥ ९० ॥ इति श्रीमहापुराणे वायुप्रोक्ते मधुकैटभोत्पत्तिविनाशवर्णनं नाम पञ्चविंशोऽ
ायः ॥ २५ ॥छ॥ सूत उवाच ॥ अहो विस्मयनीयानि रहस्यानि महामते । त्वयोक्तानि यथातत्त्वं लोकानुग्रहकारणात् ॥१॥ तत्र वै संशयो महामवता
ा) रेषु शूलिनः । किं कारणं महादेवः कलिं प्राप्य सुदारुणम् । हित्वा युगानि पूर्वाणि अवतारं करोति वै ॥२॥ अस्मिन्मन्वन्तरे चैव प्राप्ते वैवस्वते प्रभो ।
वतारं कथञ्चक्रे एतादिच्छामि वेदितुम् ॥ ३ ॥ न तेऽस्त्यविदितं किञ्चिदिह लोके परत्र च । भक्तानामुपदेशार्थं विनयात् पृच्छतो मम । कथय
। महाप्राज्ञ यदि श्राव्यं महामतम् ॥ ४ ॥ लोमश उवाच ॥ एवं पृष्टोऽथ भगवान् वायुर्लोकहिते रतः । इदमाह महातेजा वायुर्लोकनमस्कृतः
५ ॥ एतद्गुह्यतमं लोके यन्मान्त्वं परिपृच्छसि । तत्सर्वं शृणु गाधेय उच्यमानं यथाक्रमम् ॥ ६ ॥ पुरा ह्येकार्णवे वृत्ते दिव्ये वर्षसहस्रके ।
ष्टुकामः प्रजा ब्रह्मा चिन्तयामास दुःखितः ॥ ७ ॥ तस्य चिन्तयमानस्य प्रादुर्भूतः कुमारकः । दिव्यगन्धः सुधापेक्षी दिव्यां श्रुतिमुदीरयन् ॥ ८ ॥
शब्दस्पर्शरूपान्तामगन्धां रसवर्जिताम् । श्रुतिं ह्युदीरयन् देवो यामविन्दच्चतुर्मुखः ॥ ९ ॥ ततस्तु ध्यानसंयुक्तस्तप आस्थाय भैरवम् । चिन्त
मास मनसा त्रितयं कोऽन्वयन्त्विति ॥ १० ॥ तस्य चिन्तयमानस्य प्रादुर्भूतं तदक्षरम् । अशब्दस्पर्शरूपञ्च रसगन्धविवर्जितम् ॥ ११ ॥ अथोत्तमं
लोकेषु स्वमूर्त्तिश्चापि पश्यति । ध्यायन्वै स तदा देवमथैनं पश्यते पुनः ॥ १२ ॥ तं श्वेतमथ रक्तञ्च पीतं कृष्णं तदा पुनः । वर्णस्थं तत्र पश्ये
न स्त्री न च नपुंसकम् ॥ १३ ॥ तत्सर्वं सुचिरं ज्ञात्वा चिन्तयन् हि तदक्षरम् । तस्य चिन्तयमानस्य कण्ठादुत्तिष्ठतेऽक्षरः ॥ १४ ॥ एकमात्रो
ाघोषः श्वेतवर्णः सुनिर्मलः । स ओङ्कारो भवेद्वेदः अक्षरं वै महेश्वरः ॥ १५ ॥ ततश्चिन्तयमानस्य त्वक्षरं वै स्वयम्भुवः । प्रादुर्भूतन्तु रक्तन्तु स
: प्रथमः स्मृतः ॥ १६ ॥ ऋग्वेदं प्रथमं तस्य त्वग्निमीळे पुरोहितम् । एतां दृष्ट्वा ऋचं ब्रह्मा चिन्तयामास वै पुनः । तदक्षरं महातेजाः किमेतदिति
कृत् ॥ १७ ॥ तस्य चिन्तयमानस्य तस्मिन्नथ महेश्वरः । द्विमात्रमक्षरं जज्ञे ईशित्वेन द्विमात्रिकम् ॥ १८ ॥ ततः पुनर्द्विमात्रं तु चिन्तयामास

क्षरम् । प्रादुर्भूतं च रक्तं तच्छेदने गृह्य सा यजुः ॥ १९ ॥ इषे त्वोर्जेत्वा वायवस्थ देवो वः सविता पुनः । ऋग्वेद एकमात्रस्तु द्विमात्रन्तु यजुः
ृतम् ॥ २० ॥ ततो वेदं द्विमात्रं तु दृष्ट्वा चैव तदक्षरम् । द्विमात्रं चिन्तयन् ब्रह्मा त्वक्षरं पुनरीश्वरः ॥ २१ ॥ तस्य चिन्तयमानस्य चोङ्कारः सम्ब
व ह । ततस्तदक्षरं ब्रह्मा ओङ्कारं समचिन्तयत् ॥ २२ ॥ अथापश्यत्ततः पीतामृचं चैव समुत्थिताम् । अग्न आयाहि वीतये गृणानो हव्यदातये
२३ ॥ ततस्तु स महातेजा दृष्ट्वा वेदानुपस्थितान् । चिन्तयित्वा च भगवांस्त्रिसन्ध्यं यत्त्रिरक्षरम् । त्रिवर्णं यत् त्रिपवणमोङ्कारं ब्रह्मसंज्ञितम् ॥ २४ ॥
श्चैव त्रिसंयोगात् त्रिवर्णं तु तदक्षरम् । लक्ष्यालक्ष्यप्रदृश्यं च सहितं त्रिदिवं त्रिकम् ॥२५॥ त्रिमात्रं त्रिपदं चैव त्रियोगं चैव शाश्वतम् । तस्मात्तदक्षरं
ा चिन्तयामास वै प्रभुः ॥ २६ ॥ तस्मात्तदक्षरं सोऽथ ब्रह्मरूपं स्वयम्भुवः । चतुर्दशमुखं देवं पश्यते दीप्ततेजसम् । तमोङ्कारं स कृत्वादौ
ज्ञेयः स स्वयम्भुवः ॥ २७ ॥ चतुर्मुखमुखात्तस्मादजायन्त चतुर्दश । नानावर्णाः स्वरा दिव्यमाद्यं तच्च तदक्षरम् । तस्मात् त्रिषष्टिवर्णा वै
कारप्रभवाः स्मृताः ॥ २८ ॥ ततः साधारणार्थाय वर्णानान्तु स्वयम्भुवः । अकाररूप आदौ तु स्थितः स प्रथमः स्वरः ॥ २९ ॥ ततस्तेभ्यः
ेभ्यस्तु चतुर्दश महामुखाः । मनवः सम्प्रसूयन्ते दिव्या मन्वन्तरे स्वराः ॥ ३० ॥ चतुर्दशमुखो यश्च अकारो ब्रह्मसंज्ञितः । ब्रह्मकल्पः समा
ातः सर्ववर्णः प्रजापतिः ॥ ३१ ॥ मुखात्तु प्रथमात्तस्य मनुः स्वायम्भुवः स्मृतः । अकारस्तु स विज्ञेयः श्वेतवर्णः स्वयम्भुवः ॥ ३२ ॥ द्वितीयात्तु
ात्तस्य आकारो वै मुखः स्मृतः । नाम्ना स्वारोचिषो नाम वर्णः पाण्डुर उच्यते ॥ ३३ ॥ तृतीयात्तु मुखात्तस्य इकारो यजुषां वरः । यजुर्मयः स
दित्यो यजुर्वेदो यतः स्मृतः ॥ ३४ ॥ ईकारः स मनुर्ज्ञेयो रक्तवर्णः प्रतापवान् । ततः क्षत्रं प्रवर्त्तन्त तस्माद्रक्तस्तु क्षत्रियः ॥ ३५ ॥ चतुर्थात्तु
ात्तस्य उकारः स्वर उच्यते । वर्णतस्तु स्मृतस्ताम्रः स मनुस्तामसः स्मृतः ॥ ३६ ॥ पञ्चमात्तु मुखात्तस्य ऊकारो नाम जायते । पीतको वर्ण
ैव मनुश्चापि चारिष्णवः ॥ ३७ ॥ ततः षष्ठान्मुखात्तस्य ओङ्कारः कापिलः स्मृतः । वरिष्ठश्च ततः षष्ठो विजयः स महातपाः ॥ ३८ ॥ सप्तमात्तु
ात्तस्य ततो वैवस्वतो मनुः । ऋकारश्च स्वरस्तत्र वर्णतः कृष्ण उच्यते ॥ ३९ ॥ अष्टमात्तु मुखात्तस्य ॠकारः श्यामवर्णतः । श्यामाक्षरसवर्णश्च
ः सावर्णिरुच्यते ॥४०॥ मुखात्तु नवमात्तस्य ऌकारो नवमः स्मृतः । धूम्रो वै वर्णतश्चापि धूम्रश्च मनुरुच्यते ॥४१ ॥ दशमात्तु मुखात्तस्य ॡकारः
ुरुच्यते । समश्चैव सवर्णश्च बभौ सावर्णिको मनुः ॥ ४२ ॥ मुखादेकादशात्तस्य एकारो मनुरुच्यते । पिशङ्गो वर्णतश्चैव पिशङ्गो वर्ण उच्यते
४३ ॥ द्वादशात्तु मुखात्तस्य ऐकारो नाम उच्यते । पिशङ्गो भस्मवर्णाभिः पिशङ्गो मनुरुच्यते ॥ ४४ ॥ त्रयोदशान्मुखात्तस्य ओकारो वर्ण उच्यते ।

समायुक्त ओकारो वर्ण उत्तमः ॥ ४५ ॥ चतुर्दशमुखात्तस्य औकारो वर्ण उच्यते । कर्बुरो वर्णतश्चैव मनुः सावर्णिरुच्यते ॥ ४६ ॥ इत्येते मनव
रा वर्णाश्च कल्पतः । विज्ञेया हि यथातत्त्वं स्वरतो वर्णतस्तथा ॥ ४७ ॥ परस्परसवर्णाश्च स्वरा यस्माद् वृता हि वै । तस्मात्तेषां सवर्णत्वाद्
प्रकीर्तितः ॥ ४८ ॥ सवर्णाः सदृशाश्चैव यस्माज्जातास्तु कल्पजाः । तस्मात् प्रजानां लोकेऽस्मिन् सवर्णाः सर्वसन्धयः ॥ ४९ ॥ भविष्यन्ति
ऽं वर्णाश्च न्यायतोऽर्थतः । अभ्यासात्सन्धयश्चैव तस्माज्ज्ञेयाः स्वरा इति ॥५०॥ इति श्रीमहापुराणे वायुप्रोक्ते स्वरोत्पत्तिर्नाम षड्विंशोऽ
॥२६॥ छ ॥ ऋषयः ऊचुः ॥ अस्मिन् कल्पे त्वया चोक्तः प्रादुर्भावो महात्मनः । महादेवस्य रुद्रस्य साधकैर्मुनिभिः सह ॥१॥ सूत उवाच ॥
ादिसर्गस्य मया प्रोक्ता समासतः । विस्तरेणास्य वक्ष्यामि नामानि तनुभिः सह ॥ २ ॥ पत्नीषु जनयामास महादेवः सुतान् बहून् ।
ष्मे व्यतीते तु यस्मिन् कल्पे तु तच्छृणु ॥ ३ ॥ कल्पादौ चात्मनस्तुल्यं सुतं प्रध्यायतः प्रभोः । प्रादुरासीत्ततोऽङ्केऽस्य कुमारो नीललोहितः ।
सुस्वरं घोरं निर्दहन्निव तेजसा ॥ ४ ॥ दृष्ट्वा रुदन्तं सहसा कुमारं नीललोहितम् । किं रोदिषि कुमारेति ब्रह्मा तं प्रत्यभाषत ॥ ५ ॥
देहि मे नाम प्रथमं वै पितामह । रुद्रस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ॥ ६ ॥ किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् । नाम
तीयं मे इत्युवाच स्वयम्भुवम् ॥ ७ ॥ भवस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः । किं रोदिषीति तं ब्रह्मा प्रत्युवाचाथ शङ्करम् ॥ ८ ॥
देहि मे नाम इत्युक्तः प्रत्युवाच तम् । शिवस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ॥ ९ ॥ किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।
हि मे नाम इत्युवाच स्वयम्भुवम् ॥ १० ॥ पशूनां त्वं पतिर्देव इत्युक्तः सोऽरुदत्पुनः । किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ॥ ११ ॥
हि मे नाम इत्युक्तः प्रत्युवाच तम् । ईशस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ॥ १२ ॥ किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।
नाम देहीति इत्युवाचाथ तं प्रभुम् ॥ १३ ॥ भीमस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः । किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ॥ १४ ॥
हि मे नाम इत्युक्तः प्रत्युवाच तम् । उग्रस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ॥ १५ ॥ किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।
हि मे नाम त्वं विभो पुनरब्रवीत् । महादेवस्तु नाम्नासि इत्युक्तो विरराम ह ॥ १६ ॥ लब्ध्वा नामानि चैतानि ब्रह्मणो नीललोहितः ।
नाम्नामेतेषां भूतानि प्रादिशेति ह ॥ १७ ॥ ततोऽभिसृष्टास्तनव एषां नाम्नां स्वयम्भुवा । सूर्यो मही जलं वह्निर्वायुराकाशमेव च ॥ १८ ॥
ब्राह्मणश्चन्द्र इत्येते ब्रह्मधातवः । तेषु पूज्यश्च वन्द्यः स्याद्रुद्रस्तान्न हिनस्ति वै ॥ १९ ॥ ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं नीललोहितम्

द्वितीयं नामधेयन्ते मया प्रोक्तं भवेति यत् । एतस्यापो द्वितीया ते तनुर्नाम्ना भविष्यति ॥ २० ॥ इत्युक्ते यत् स्थिरं तस्य शरीरस्थं रसात्मकम् ।
तद्विवेश ततस्तोयं तस्मादापो भवः स्मृतः॥२१॥ यस्माद्भवन्ति भूतानि ताभ्यस्ता भावयन्ति च । भवनाद्भावनाच्चैव भूतानां सम्भवः स्मृतः॥२२॥
तस्मान्मूत्रं पुरीषञ्च नाप्सु कुर्वीत सर्वदा । न स्नायेदप्सु नग्नश्च न निष्ठीवेत् कदाचन ॥ २३ ॥ मैथुनं नैव सेवेत शिरःस्नानञ्च वर्जयेत् । न प्रीतः
परिचक्षीत वहन्न संस्थितोऽपि वा ॥ २४ ॥ मेध्यामेध्यशरीरत्वान्नैव दुष्यन्त्यपः क्वचित् । विवर्णरसगन्धाश्च अल्पाश्च परिवर्जयेत् ॥ २५ ॥ अपां
योनिः समुद्रश्च तस्मात्तं कामयन्ति ताः । मेध्याश्चैवामृताश्चैव भवन्ति प्राप्य सागरम् ॥ २६ ॥ तस्मादपो न रुन्धीत समुद्रं कामयन्ति ताः । न
हिनस्ति भवो देवः सदैवं योऽप्सु वर्त्तते ॥ २७ ॥ ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं कृष्णलोहितम् । शर्वस्त्वमिति यन्नाम तृतीयं समुदाहृतम् । तस्य
भूमिस्तृतीया तु तनुर्नाम्ना भवत्वियम् ॥ २८ ॥ इत्युक्ते यत् स्थिरं तस्य शरीरस्यास्थिसंज्ञितम् । तद्विवेश ततो भूमिस्तस्माद्भूः शर्व उच्यते ॥२९॥
तस्मात् कुर्वीत नो विद्वान् पुरीषम्मूत्रमेव वा । न च्छायायां न सोपाने स्वच्छायां नापि मेहयेत् ॥ ३० ॥ शिरः प्रावृत्य कुर्वीत अन्तर्द्धाय तृणैर्म
हीम् । य एवं वर्त्तते भूमौ तं शर्वो न हिनस्ति वै ॥ ३१ ॥ ततोऽब्रवीत्पुनर्ब्रह्मा तं देवं नीललोहितम् । ईशान इति यत् प्रोक्तं चतुर्थं नाम ते मया॥३२॥
चतुर्थस्य चतुर्थी स्याद्वायुर्नाम्ना तनुस्तव । इत्युक्ते यच्छरीरस्थं पञ्चधा प्राणसंज्ञितम् ॥ ३३ ॥ विवेश तं तदा वायुरीशानो वायुरुच्यते ।
तस्मादेनं परिवदेदायतं वायुमीश्वरम् । एवं युक्तमथेशानो नैव देवो हिनस्ति तम् ॥ ३४ ॥ ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं धूम्रलोहितम् ।
यत्ते पशुपतीत्युक्तं मया नामेह पञ्चमम् । पञ्चमी पञ्चमस्यैव तनुर्नाम्नाऽग्निरस्तु ते ॥ ३५ ॥ इत्युक्ते यच्छरीरस्थं तेजस्तस्योपसंज्ञितम् ।
विवेश तत्तदा ह्यग्निस्तस्मात्पशुपतिः पतिः ॥ ३६ ॥ चन्द्रमास्तु स्मृतः सोमस्तस्यात्मा ह्योषधीगणः । एवं यो वर्त्तते विद्वान् सदा
पर्वाणि पर्वाणि । न हन्ति तं महादेव एवं वन्देत तं प्रभुम् ॥ ३७ ॥ गोपायति दिवादित्यः प्रजा नक्तन्तु चन्द्रमाः । एकरात्रे समेयातां
सूर्य्याचन्द्रमसावुभौ । अमावास्यानिशायान्तु तस्यां युक्तः सदा वसेत् ॥ ३८ ॥ तत्राविष्टं सर्वमिदन्तनुभिर्नामभिः सह । एकाकी
यश्चरत्येषः सूर्य्योऽसौ चन्द्र उच्यते ॥ ३९ ॥ सूर्य्यस्य यत् प्रकाशेन वीक्ष्यन्ते चक्षुषा प्रजाः । शुक्रात्मा संस्थितो रुद्रः पिबत्यम्भो गभ
स्तिभिः ॥ ४० ॥ अद्यते पीयते चैवाप्यन्नपानात्मकानि या । तनुरात्मभवा सा वै देहेष्वेवोपचीयते ॥ ४१ ॥ यया धत्ते प्रजाः सर्वाः स्थिरीभूतेन
चेतसा । पार्थिवी सा तनुस्तस्य शार्वी धारयति प्रजाः ॥ ४२ ॥ यावत् स्थिता शरीरेषु भूतानां प्राणवृत्तिभिः । वाय्वात्मिका तु ऐशानी सा

प्राणाः प्राणिना सह ॥ ४३ ॥ पीताशितानि पचाति भूतानां जठरेषु या । ततः पाशुपती तस्य पाचिका शक्तिरुच्यते ॥ ४४ ॥ यानीह सुषिराणि स्युर्देहेष्वन्तर्गतानि वै । वायोः सञ्चरणार्थाय सा भीमा चोच्यते तनुः ॥ ४५ ॥ वैतानदीक्षितानां तु या स्थितिर्ब्रह्मवादिनाम् । तनुरुग्रात्मिका सा तु तेनोग्रो दीक्षितः स्मृतः ॥ ४६ ॥ यत्तु सङ्कल्पकं तस्य प्रजास्विह समं स्थितम् । सा तनुर्म्मानसी तस्य चन्द्रमाः प्राणिषु स्थितः ॥ ४७ ॥ नवो नवो भवति हि जायमानः पुनः पुनः । नीयते यो यथाकामं विबुधैः पितृभिः सह । महादेवोऽमृतात्माऽसौ ह्यम्मयश्चन्द्रमाः स्मृतः ॥ ४८ ॥ तस्य या प्रथमा नाम्ना तनू रौद्री प्रकीर्तिता । पत्नी सुवर्चला तस्य पुत्रस्तस्याः शनैश्चरः ॥ ४९ ॥ भवस्य या द्वितीया तु तनुरापः स्मृता तु वै । तस्योषाऽत्र स्मृता पत्नी पुत्रश्चाप्युशना स्मृतः ॥ ५० ॥ शर्वस्य या तृतीया तु नाम भूमिस्तनुः स्मृता । पत्नी तस्य विकेशीति पुत्रश्चाङ्गारकः स्मृतः ॥ ५१ ॥ ईशानस्य चतुर्थस्य स्वर्गतस्य च या तनुः । तस्य पत्नी शिवा नाम पुत्रश्चास्य मनोजवः ॥ ५२ ॥ नाम्ना पशुपतेर्या तु तनुरग्निर्द्विजैः स्मृता । तस्य पत्नी स्मृता स्वाहा स्कन्दश्चापि सुतः स्मृतः ॥ ५३ ॥ नाम्ना षष्ठस्य या भीमा तनुराकाश उच्यते । दिशः पत्न्यः स्मृतास्तस्य स्वर्गश्चास्य सुतः स्मृतः ॥ ५४ ॥ उग्रा तनुः सप्तमी या दीक्षितैर्ब्राह्मणैः स्मृता । दीक्षा पत्नी स्मृता तस्य सन्तानः पुत्र उच्यते ॥५५॥ नाम्नाऽष्टमस्य महतस्तनुर्या चन्द्रमाः स्मृतः । पत्नी तु रोहिणी तस्य पुत्रश्चास्य बुधः स्मृतः ॥ ५६ ॥ इत्येतास्तनवस्तस्य नामाभिः परिकीर्तिताः । तास्तु वन्द्य नमस्याश्च प्रतिनाम तनूषु वै ॥ ५७ ॥ भक्तेः सूर्येऽप्सु पृथिव्यां वाय्वग्निव्योमदीक्षिते । तथा च वै चन्द्रमसि तनुभिर्नामभिः सह । प्रजावानेति सायुज्यमीश्वरस्य नरो हि सः ॥ ५८॥ इत्येतद्वो मयाख्यातं गुह्यं भीमस्य तद्यशः । शन्नोऽस्तु द्विपदे नित्यं शन्नोऽस्तु च चतुष्पदे ॥ ५९ ॥ एतत् प्रोक्तं निदानं वस्तनूनां नामभिः सह । महादेवस्य देवस्य भृगोस्तु शृणुत प्रजाः ॥ ६० ॥ इति श्रीमहापुराणे वायुप्रोक्ते महादेवतनुवर्णनं नाम सप्तविंशोऽध्यायः ॥२७॥छ॥ सूत उवाच ॥ भृगोः ख्यातिर्विजज्ञेऽथ ईश्वरौ सुखदुःखयोः । शुभाशुभप्रदातारौ सर्वप्राणभृतामिह । देवौ धाताविधातारौ मन्वन्तरविचारिणौ ॥ १ ॥ तयोर्ज्येष्ठा तु भगिनी देवी श्रीर्लोकभाविनी । सा तु नारायणं देवं पतिमासाद्य शोभनम् । नारायणात्मजौ साध्वी बलोत्साहौ व्यजायत ॥ २ ॥ तस्यास्तु मानसाः पुत्रा ये चान्ये दिव्यचारिणः । ये वहन्ति विमानानि देवानां पुण्यकर्मणाम् ॥ ३ ॥ द्वे तु कन्ये स्मृते भार्य्ये विधातुर्धातुरेव च । आयतिर्नियतिश्चैव तयोः पुत्रौ दृढव्रतौ ॥ ४ ॥ पाण्डुश्चैव मृकण्डुश्च ब्रह्मकोशौ सनातनौ । मनस्विन्यां मृकण्डोश्च मार्कण्डेयो बभूव ह ॥ ५ ॥ सुतो वेदशिरास्तस्य मूर्द्धन्यायामजायत । पीवर्य्यां वेदशिरसः पुत्रा वंशकराः स्मृताः । मार्कण्डेया इति ख्याता ऋषयो वेदपारगाः ॥ ६ ॥ पाण्डोश्च

ण्डरीकायां द्युतिमानात्मजोऽभवत् । उत्पन्नौ द्युतिमन्तश्च सृजवानश्च तावुभौ । तयोः पुत्राश्च पौत्राश्च भार्गवाणां परस्परम् । स्वायम्भुवेऽन्तरेऽतीते
चेः शृणुत प्रजाः ॥ ७ ॥ पत्नी मरीचेः सम्भूतिर्विजज्ञे सात्मसम्भवम् । प्रजायते पूर्णमासं कन्याश्चेमा निबोधत । कृष्टिः पुष्टिस्त्विषा चैव
। चापचितिः शुभा ॥ ८ ॥ पूर्णमासः सरस्वत्यां द्वौ पुत्रावुदपादयत् । विरजश्चैव धर्मिष्ठं पर्वसश्चैव तावुभौ ॥ ९ ॥ विरजस्यात्मजो विद्वान्
मा नाम विश्रुतः । सुधामसुतवैराजः प्राच्यान्दिशि समाश्रितः ॥ १० ॥ लोकपालः सुधर्म्मात्मा गौरिपुत्रः प्रतापवान् । पर्वसः सर्वगणानां
ष्टः स महायशाः ॥ ११ ॥ पर्वसः पर्वसायान्तु जनयामास वै सुतौ । यज्ञवामश्च श्रीमन्तं सुतं काश्यपमेव च । तयोर्गोत्रकरौ पुत्रौ तौ
धर्मनिश्चितौ ॥ १२ ॥ स्मृतिश्चाङ्गिरसः पत्नी जज्ञे तावात्मसम्भवौ । पुत्रौ कन्याश्चतस्रश्च पुण्यास्ता लोकविश्रुताः ॥ १३ ॥
वाली कुहूश्चैव राका चानुमतिस्तथा । तथैव भरताग्निश्च कीर्तिमन्तश्च तावुभौ ॥ १४ ॥ अग्नेः पुत्रन्तु पर्जन्यं संहूती सुषुवे प्रभुम् ।
ण्यरोमा पर्जन्यो मारीच्यामुदपादयत । आभूतसंप्लवस्थायी लोकपालः स वै स्मृतः ॥ १५ ॥ जज्ञे कीर्तिमतश्चापि धेनुका तावक
तौ । वरिष्ठं धृतिमन्तश्चाप्युभावङ्गिरसां वरौ ॥ १६ ॥ तयोः पुत्राश्च पौत्राश्च येऽतीता वै सहस्रशः । अनसूयापि जज्ञे तान् पञ्चात्रे
कल्मषान् ॥ १७ ॥ कन्याञ्चैव श्रुतिं नाम माता शङ्खपदस्य या । कर्दमस्य तु या पत्नी पुलहस्य प्रजापतेः ॥ १८ ॥ सत्यने
हव्यश्च आपोमूर्तिः शनीवरः । सोमश्च पञ्चमस्तेषामासीत् स्वायम्भुवेऽन्तरे । यामेऽतीते सहातीताः पञ्चात्रेयाः प्रकीर्तिताः ॥ १९ ॥ तेषां
श्च पौत्राश्च ह्यात्रिणा वै महात्मना । स्वायम्भुवेऽन्तरे यामे शतशोऽथ सहस्रशः ॥ २० ॥ प्रीत्यां पुलस्त्यभार्यायां दत्तालिस्ततसुतोऽ
न् । पूर्वजन्मनि सोऽगस्त्यः स्मृतः स्वायम्भुवेऽन्तरे । मध्यमो देवबाहुश्च विनीतो नाम ते त्रयः ॥ २१ ॥ स्वसा यवीयसी तेषां सद्वती नाम विश्रु
। पर्जन्यजननी शुभ्रा पत्नी त्वग्नेः स्मृता शुभा ॥ २२ ॥ पौलस्त्यस्य ऋषेश्चापि प्रीतिपुत्रस्य धीमतः । दत्तालेः सुषुवे पत्नी सुजङ्घादीन् बहून् सुतान् ।
स्त्या इति विख्याताः स्मृताः स्वायम्भुवेऽन्तरे ॥ २३ ॥ क्षमा तु सुषुवे पुत्रान् पुलहस्य प्रजापतेः । ते चाग्निवर्चसः सर्वे येषां कीर्तिः
ष्ठिता ॥ २४ ॥ कर्दमश्चाम्बरीषश्च सहिष्णुश्चेति ते त्रयः । ऋषिर्धनकपीवांश्च शुभा कन्या च पीवरी ॥ २५ ॥ कर्दमस्य श्रुतिः पत्नी आत्रेय्य
यत्सुतान् । पुत्रं शङ्खपदञ्चैव कन्यां काम्यां तथैव च ॥ २६ ॥ स वै शङ्खपदः श्रीमान् लोकपालः प्रजापतिः । दक्षिणस्यां दिशि रतः काम्यां दत्त्वा
व्रते ॥ २७ ॥ काम्या प्रियव्रताल्लेभे स्वायम्भुवसमान् सुतान् । दशकन्याद्वयञ्चैव यैः क्षत्रं सम्प्रवर्त्तितम् ॥ २८ ॥ पुत्रो धनकपीवांश्च सहिष्णुर्नाम

ुतः । यशोधारी विजज्ञे वै कामदेवः सुमध्यमः ॥ २९ ॥ ऋतोः क्रतुसमः पुत्रो विजज्ञे सन्ततिः शुभा । नैषां भार्यास्ति पुत्रो वा सर्वे ते ऊर्द्ध
तः । षष्ट्येतानि सहस्राणि वालखिल्या इति श्रुताः ॥ ३० ॥ अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम् । आभूतसंप्लवात्सर्वे पतङ्गसहचारिणः
३१ ॥ स्वसारौ तु यवीयस्यौ पुण्यात्मसुमती च ते । पर्वसस्य स्नुषे ते वै पूर्णमाससुतस्य वै ॥ ३२ ॥ ऊर्जायान्तु वसिष्ठस्य पुत्रा वै सप्त जज्ञिरे ।
ायसी च स्वसा तेषां पुण्डरीका सुमध्यमा ॥ ३३ ॥ जननी सा द्युतिमतः पाण्डोस्तु महिषी प्रिया । अस्यां त्विमे यवीयांसो
सेष्ठाः सप्त विश्रुताः ॥ ३४ ॥ रजः पुत्रोऽर्द्धबाहुश्च सवनश्चाधनश्च यः । सुतपाः शुक्र इत्येते सर्वे सप्तर्षयः स्मृताः ॥ ३५ ॥
सो वाप्यजनयन्मार्कण्डेयी यशस्विनी । प्रतीच्यां दिशि राजन्यं केतुमन्तं प्रजापतिम् ॥३६॥ गोत्राणि नामभिस्तेषां वासिष्ठानां महात्मनाम् । स्वाय
न्वन्तरेऽतीतास्त्वग्नेस्तु शृणुत प्रजाः ॥ ३७ ॥ इत्येष ऋषिसर्गस्तु सानुबन्धः प्रकीर्त्तितः । विस्तरेणानुपूर्व्या चाप्यग्नेस्तु शृणुत प्रजाः ॥ ३८ ॥
े श्रीमहापुराणे वायुप्रोक्ते ऋषिवंशानुकीर्त्तनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥ छ ॥ योऽसावग्निरभिमानी ह्यासीत् स्वायम्भुवेऽन्तरे ।
णो मानसः पुत्रस्तस्मात्स्वाहा व्यजायत ॥ १ ॥ पावकः पवमानश्च पावमानश्च यः स्मृतः । शुचिः शौरस्तु विज्ञेयः स्वाहापुत्रास्त्रयस्तु
॥ २ ॥ निर्म्मथ्य पवमानस्तु शुचिः शौरस्तु यः स्मृतः। पावका वैद्युताश्चैव तेषां स्थानानि यानि वै ॥ ३ ॥ पवमानात्मजश्चैव कव्यवाहन उच्यते ।
कात् सहरक्षस्तु हव्यवाहः शुचेः सुतः ॥ ४ ॥ देवानां हव्यवाहोऽग्निः पितॄणां कव्यवाहनः । सहरक्षोऽसुराणान्तु त्रयाणान्तु त्रयोऽग्नयः ॥ ५ ॥
षां पुत्रपौत्रास्तु चत्वारिंशन्नवैव तु । वक्ष्यामि नामतस्तेषां प्रविभागं पृथक् पृथक् ॥ ६ ॥ वैद्युतो लौकिकाग्निस्तु प्रथमो ब्रह्मणः सुतः । ब्रह्मौदना
स्तत्पुत्रो भरतो नाम विश्रुतः ॥ ७ ॥ वैश्वानरसुखस्तस्य महः काव्यो ह्यपां रसः । अमृतोऽथर्वणा पूर्वं मथितः पुष्करोदधौ । सोऽथर्वा लौकिका
स्तु दध्यङ्ङाथर्वणः सुतः ॥ ८ ॥ अथर्वा तु भृगुर्ज्ञेयोऽप्यङ्गिराऽथर्वणः सुतः । तस्मात् स लौकिकाग्निस्तु दध्यङ्ङाथर्वणः सुतः ॥ ९ ॥ अथ यः
मानोऽग्निर्निर्मन्थ्यः कविभिः स्मृतः । स ज्ञेयो गार्हपत्योऽग्निस्ततः पुत्रद्वयं स्मृतम् ॥ १० ॥ शंस्यस्त्वाहवनीयोऽग्निर्यः स्मृतो हव्यवाहनः । द्विती
तु सुतः प्रोक्तः शुक्रोऽग्निर्यः प्रणीयते ॥ ११ ॥ तथा सभ्यावसथ्यौ वै शंस्यस्याग्नेः सुतावुभौ । शंस्यास्तु षोडश नदीश्चकमे हव्यवाहनः । योऽसा ॥४०॥
हवनीयोऽग्निरभिमानी द्विजैः स्मृतः ॥ १२ ॥ कावेरीं कृष्णवेणीञ्च नर्मदां यमुनान्तथा । गोदावरीं वितस्ताञ्च चन्द्रभागामिरावतीम् ॥ १३ ॥ विपा
कौशिकीञ्चैव शतद्रुं सरयून्तथा । सीतां सरस्वतीञ्चैव ह्रादिनीं पावनीं तथा ॥ १४ ॥ तासु षोडशधात्मानं प्रविभज्य पृथक् पृथक् । आत्मानं

ष्वदेवीतासु धिष्णीष्वथ बभूव सः ॥ १५ ॥ धिष्ण्यो दिव्यभिचारिण्यस्तासूत्पन्नास्तु धिष्णयः। धिष्णीषु जज्ञिरे यस्माद्धिष्णयस्तेन कीर्त्तिताः ॥ १६ ॥ इत्येते वै नदीपुत्रा धिष्णीष्वेव विजज्ञिरे। तेषां विहरणीया ये उपस्थेयाश्च येऽग्नयः। तान् शृणुध्वं समासेन कीर्त्यमानान् यथा तथा ॥ १७ ॥ ऋतुः प्रवाहणोऽग्नीध्रः पुरस्ताद्धिष्णयोऽपरे। विधीयन्ते यथास्थानं सौत्येऽह्नि सवनक्रमात् ॥ १८ ॥ अनिर्देश्यान्यवाच्यानामग्नीनां शृणुत क्रमम्। सम्राडग्निः कृशानुर्यो द्वितीयोत्तरवेदिकः ॥ १९ ॥ सम्राडाग्निः स्मृता ह्यष्टौ उपतिष्ठन्ति तान् द्विजाः। अधस्तात्पर्षदन्यस्तु द्वितीयः सोऽत्र दृश्यते ॥ २० ॥ प्रतद्वोचे नभो नाम चत्वारि स विभाव्यते। ब्रह्मज्योतिर्वसुर्नाम ब्रह्मस्थाने स उच्यते ॥ २१ ॥ हव्यसूर्य्याद्यसंसृष्टः शामित्रे स विभाव्यते। विश्वस्याथ समुद्रोऽग्निर्ब्रह्मस्थाने स कीर्त्यते ॥ २२ ॥ ऋतुधामा च सुज्योतिरौदुम्बर्य्यां स कीर्त्यते। ब्रह्मज्योतिर्वसुर्नाम ब्रह्मस्थाने स उच्यते ॥ २३ ॥ अजैकपादुपस्थेयः स वै शालामुखीयकः। अनुदेश्योऽप्यहिर्बुध्न्यः सोऽग्निर्गृहपतिः स्मृतः ॥२४॥ शंस्यस्यैव सुताः सर्व्वे उपस्थेया द्विजैः स्मृताः। ततो विहरणीयांश्च वक्ष्याम्यष्टौ तु तत्सुतान् ॥ २५ ॥ ऋतुप्रवाहणोऽग्नीध्रस्तत्रस्था धिष्णयोऽपरे। विह्रियन्ते यथास्थानं सौत्येऽह्नि सवनक्रमात् ॥ २६ ॥ पौत्रेयस्तु ततो ह्यग्निः स्मृतो यो हव्यवाहनः। शान्तिश्चाग्निः प्रचेतास्तु द्वितीयः सत्य उच्यते ॥ २७ ॥ तथाग्निर्विश्वदेवस्तु ब्रह्मस्थाने स उच्यते। अवक्षुरच्छावाकस्तु भुवः स्थाने विभाव्यते ॥ २८ ॥ उशीराग्निः सवीर्यस्तु नैष्ठीयः संविभाव्यते। अष्टमस्तु व्यरत्तिस्तु मार्जालीयः प्रकीर्त्तितः ॥ २९ ॥ धिष्ण्या विहरणीया ये सौम्येनान्येन चैव हि। तयोर्यः पावको नाम स चापां गर्भ उच्यते ॥ ३० ॥ अग्निः सोऽवभृथो ज्ञेयः सम्यक् प्राप्याप्सु हूयते। हृच्छयस्तत्सुतो ह्यग्निर्जठरे यो नृणां स्थितः ॥३१॥ मन्युमान् जाठरस्याग्नेर्विद्वानग्निः सुतः स्मृतः। परस्परोच्छ्रितः सोऽग्निर्भूतानां ह विभुर्महान् ॥ ३२ ॥ पुत्रः सोऽग्नेर्मन्युमतो घोरः संवर्त्तकः स्मृतः। पिबन्नपः स वसति समुद्रे वडवामुखः ॥ ३३ ॥ समुद्रवासिनः पुत्रः सहरक्षो विभाव्यते। सहरक्षसुतः क्षामो गृहाणि स दहेन्नृणाम् ॥ ३४ ॥ क्रव्यादोऽग्निः सुतस्तस्य पुरुषानत्ति यो मृतान्। इत्येते पावकस्याग्नेः पुत्रा ह्येवं प्रकीर्त्तिताः ॥ ३५ ॥ ततः शुचेस्तु यैः सौरैर्गन्धर्वैरसुरावृतैः। मथितो यस्त्वरण्यां वै सोऽग्निरग्निः समिध्यते ॥ ३६ ॥ आयुर्नामाथ भगवान् पशौ यस्तु प्रणीयते। आयुषो महिमान् पुत्रः स शावान्नामतः सुतः ॥ ३७ ॥ पाकयज्ञेष्वभिमानी सोऽग्निस्तु सवनः स्मृतः। पुत्रश्च सवनस्याग्नेरद्भुतः स महायशाः ॥ ३८ ॥ विविचिस्त्वद्भुतस्यापि पुत्रोऽग्नेः स महान् स्मृतः। प्रायश्चित्तेऽथ भीमानां हुतं भुङ्क्ते हविः सदा ॥ १३९ ॥ विविचेस्तु सुतो ह्यर्को योऽग्निस्तस्य सुतास्त्विमे। अनीकवान् वासृजवांश्च रक्षोहा पितृकृत्तथा। सुरभिर्वसुरत्नादो प्रविष्टो यश्च रुक्मवान् ॥४०॥

शुचेरग्नेः प्रजा ह्येषा वह्नयस्तु चतुर्दश। इत्येते वह्नयः प्रोक्ताः प्रणीयन्तेऽध्वरेषु ये ॥ ४१ ॥ आदिसर्गे ह्यतीता वै यामैः सह सुरोत्तमैः। स्वायम्
वेऽन्तरे पूर्वमग्नयस्तेऽभिमानिनः ॥ ४२ ॥ एते विहरणीयास्तु चेतनाचेतनेष्विह। स्थानाभिमानिनो लोके प्रागासन् हव्यवाहनाः ॥ ४३ ॥ काम्यनै
त्तिकाजस्रेष्वेते कर्मस्ववस्थिताः। पूर्वमन्वन्तरेऽतीते शुक्रैर्यामैः सुतैः सह। देवैर्महात्मभिः पुण्यैः प्रथमस्यान्तरे मनोः ॥ ४४ ॥ इत्येतानि मयोक्ता
स्थानानि स्थानिनश्च ह। तैरेव तु प्रसङ्ख्यातमतीतानागतेष्वपि ॥ ४५ ॥ मन्वन्तरेषु सर्वेषु लक्षणं जातवेदसाम्। सर्वे तपस्विनो ह्येते सर्वे ह्यवभृ
स्तथा। प्रजानां पतयः सर्वे ज्योतिष्मन्तश्च ते स्मृताः ॥ ४६ ॥ स्वारोचिषादिषु ज्ञेयाः सावर्ण्यन्तेषु सप्तसु। मन्वन्तरेषु सर्वेषु नानारूपप्रयोजं
॥ ४७ ॥ वर्त्तन्ते वर्त्तमानैश्च देवैरिह सहाग्नयः। अनागतैः सुरैः सार्द्धं वर्त्तन्तेऽनागताग्नयः ॥ ४८ ॥ इत्येष विनयोऽग्नीनां मया प्रोक्तो यथातथम्
विस्तरेणानुपूर्व्या च पितॄणां वक्ष्यते ततः ॥ ४९ ॥ इति श्रीमहापुराणे वायुप्रोक्ते अग्निवंशवर्णनं नामोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ ७ ॥ सू
उवाच ॥ ब्रह्मणः सृजतः पुत्रान् पूर्वं स्वायम्भुवेऽन्तरे। अम्भांसि जज्ञिरे तानि मनुष्यासुरदेवताः ॥ १ ॥ पितृवन्मन्यमानस्य जज्ञिरे पितरोऽस्य वै
तेषान्निसर्गः प्रागुक्तो विस्तरस्तस्य वक्ष्यते ॥ २ ॥ देवासुरमनुष्याणां दृष्ट्वा देवोऽभ्यभाषत। पितृवन्मन्यमानस्य जज्ञिरे वोपपक्षिताः ॥ ३ ॥ मध्वादर
षड्‌तवस्तान् पितॄन् परिचक्षते। ऋतवः पितरो देवा इत्येषा वैदिकी श्रुतिः ॥ ४ ॥ मन्वन्तरेषु सर्वेषु ह्यतीतानागतेष्वपि। एते स्वायम्भुवे पूर्वमुत्पः
ह्यन्तरे शुभे ॥ ५ ॥ अग्निष्वात्ताः स्मृता नाम्ना तथा बर्हिषदश्च वै। अयज्वानस्तथा तेषामासन् वै गृहमेधिनः। अग्निष्वात्ताः स्मृतास्ते वै पितरोऽनाहिता
ग्नः ॥ ६ ॥ यज्वानस्तेषु ये ह्यासन् पितरः सोमपीथिनः। स्मृता बर्हिषदस्ते वै पितरस्त्वग्निहोत्रिणः। ऋतवः पितरो देवाः शास्त्रेऽस्मिन्निश्चयो मतः ॥ ७
मधुमाधवौ रसौ ज्ञेयौ शुचिशुक्रौ तु शुष्मिणौ। नभश्चैव नभस्यश्च जीवावेतावुदाहृतौ ॥ ८ ॥ इषश्चैव तथोर्जश्च सुधावन्तावुदाहृतौ। सहश्चैव सहस्यश्च मन
मन्तौ तु तौ स्मृतौ। तपश्चैव तपस्यश्च घोरावेतौ तु शैशिरौ ॥ ९ ॥ कालावस्थास्तु षट् ते षाण्मासाख्या वै व्यवस्थिताः। त इमे ऋतवः प्रोक्ताश्चेतनाचेतना
वै ॥ १० ॥ ऋतवो ब्रह्मणः पुत्रा विज्ञेयास्तेऽभिमानिनः। मासार्द्धमासस्थानेषु स्थानञ्च ऋतवोर्त्तवाः ॥ ११ ॥ स्थानानां व्यतिरेकेण ज्ञेयाः स्थानाभिमानिनः
अहोरात्रश्च मासाश्च ऋतवश्चायनानि च ॥ १२ ॥ संवत्सराश्च स्थानानि कालावस्थाभिमानिनः। निमेषाश्च कलाः काष्ठा मुहूर्त्ता वै दिनक्षपाः ॥ १३
एतेषु स्थानिनो ये तु कालावस्थास्ववस्थिताः। तन्मयत्वात्तदात्मानस्तान् वक्ष्यामि निबोधत ॥ १४ ॥ पर्वण्यास्तिथयः सन्ध्याः पक्षा मासार्द्धसं
ताः। द्वावर्द्धमासौ मासस्तु द्वौ मासावृतुरुच्यते ॥ १५ ॥ ऋतुत्रयं चायनं द्वे अयने दक्षिणोत्तरे। संवत्सरः सुमेकस्तु स्थानान्येतानि स्थानिनाम् ॥ १६

ऋतवः सुमेकपुत्रा विज्ञेया ह्यष्टधा तु षट् । ऋतुपुत्राः स्मृताः पञ्च प्रजास्त्वार्त्तवलक्षणाः ॥ १७ ॥ यस्माच्चैवार्त्तवेयास्तु जायन्ते स्थाणुजङ्गमाः । आर्त्तवाः पितरश्चैव ऋतवश्च पितामहाः ॥ १८ ॥ सुमेकात्तु प्रसूयन्ते म्रियन्ते च प्रजातयः । तस्मात् स्मृतः प्रजानां वै सुमेकः प्रपितामहः ॥ १९ ॥ स्थानेषु स्थानिनो ह्येते स्थानात्मानः प्रकीर्तिताः । तदाख्यास्तन्मयत्वाच्च तदात्मनश्च ते स्मृताः ॥ २० ॥ प्रजापतिः स्मृतो यस्तु स तु संवत्सरो मतः । संवत्सरः स्मृतो ह्यग्निः ऋतमित्युच्यते द्विजैः ॥ २१ ॥ ऋतात्तु ऋतवो यस्माज्जज्ञिरे ऋतवस्ततः । मासाः षडृतवो ज्ञेयास्तेषां पञ्चार्त्तवाः सुताः ॥ २२ ॥ द्विपदाश्चतुष्पदाश्चैव पक्षिसंसर्पतामपि । स्थावराणां च पञ्चानां पुष्पं कालार्त्तवं स्मृतम् ॥ २३ ॥ ऋतुत्वमार्त्तवत्वञ्च पितृत्वञ्च प्रकीर्तितम् । इत्येते पितरो ज्ञेया ऋतवश्चार्त्तवाश्च ये ॥ २४ ॥ सर्वभूतानि तेभ्योऽथ ऋतुकालाद्विजज्ञिरे । तस्मादेतेऽपि पितर आर्त्तवा इति नः श्रुतम् ॥ २५ ॥ मन्वन्तरेषु सर्वेषु स्थिताः कालाभिमानिनः । स्थानाभिमानिनो ह्येते तिष्ठन्तीह प्रसंयमात् ॥ २६ ॥ अग्निष्वात्ता बर्हिषदः पितरो द्विविधाः स्मृताः । जज्ञाते च पितृभ्यस्तु द्वे कन्ये लोकविश्रुते ॥ २७ ॥ मेना च धारिणी चैव याभ्यां विश्वमिदं धृतम् । पितरस्ते निजे कन्ये धर्मार्थं प्रददुः शुभे । त उभे ब्रह्मवादिन्यौ योगिन्यौ चैव ते उभे ॥ २८ ॥ अग्निष्वात्तास्तु ये प्रोक्तास्तेषां मेना तु मानसी । धारणी मानसी चैव कन्या बर्हिषदां स्मृता ॥ २९ ॥ मेरोस्तु धारणीं नाम पत्न्यर्थं व्यसृजन् शुभाम् । पितरस्ते बर्हिषदः स्मृता ये सोमपीथिनः ॥ ३० ॥ अग्निष्वात्तास्तु तां मेनां पत्नीं हिमवते ददुः । स्मृतास्ते वै तु दौहित्रास्तद्दौहित्रान् निबोधत ॥ ३१ ॥ मेना हिमवतः पत्नी मैनाकं सान्वसूयत । गङ्गा सरिद्वरा चैव पत्नी या लवणोदधेः । मैनाकस्यानुजः क्रौञ्चः क्रौञ्चद्वीपो यतः स्मृतः ॥ ३२ ॥ मेरोस्तु धारणी पत्नी दिव्यौषधिसमन्वितम् । मन्दरं सुषुवे पुत्रं तिस्रः कन्याश्च विश्रुताः ॥ ३३ ॥ वेला च नियतिश्चैव तृतीया चायतिः पुनः । धातुश्चैवायतिः पत्नी विधातुर्नियतिः स्मृता ॥ ३४ ॥ स्वायम्भुवेऽन्तरे पूर्वन्तयोर्वै कीर्तिताः प्रजाः । सुषुवे सागराद्वेला कन्यामेकामनिन्दिताम् ॥ ३५ ॥ सावर्णिना च सामुद्री पत्नी प्राचीनबर्हिषः । सवर्णा साथ सामुद्री दशप्राचीनबर्हिषः । सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ॥ ३६ ॥ तेषां स्वायम्भुवो दक्षः पुत्रत्वे जज्ञिवान् प्रभुः । त्र्यम्बकस्याभिशापेन चाक्षुषस्यान्तरे मनोः ॥ ३७ ॥ एतच्छ्रुत्वा ततः सूतमपृच्छच्छांशपायनः । उत्पन्नः स कथं दक्षो ह्यभिशापाद्भवस्य तु । चाक्षुषस्यान्वये पूर्वं तन्नः प्रब्रूहि पृच्छताम् ॥ ३८ ॥ इत्युक्तः कथयामास सूतो दक्षाश्रितां कथाम् । शांशपायनमामन्त्र्य त्र्यम्बकाच्छापकारणम् ॥ ३९ ॥ दक्षस्यासन् सुता ह्यष्टौ कन्या याः कीर्तिता मया । स्वेभ्यो गृहेभ्यो ह्यानाय्य ताः पिताभ्यर्चयद्गृहे । ततस्त्वभ्यर्चिताः सर्वा न्यवसंस्ताः पितुर्गृहे ॥ ४० ॥ तासां ज्येष्ठा सती नाम पत्नी या त्र्यम्बकस्य वै ।

नाजुहावात्मजां तां वै दक्षो रुद्रमभिद्विषन् ॥ ४१ ॥ अकरोत्स नतिं दक्षे न कदाचिन्महेश्वरः । जामाता श्वशुरे तस्मिन् स्वभावात् तेजसि स्थितः ॥ ४२ ॥ ततो ज्ञात्वा सती सर्वाः स्वसॄः प्राप्ताः पितुर्गृहम् । जगाम साप्यनाहूता सती तत् स्वं पितुर्गृहम् ॥ ४३ ॥ ततोऽब्रवीत् सा पितरं देवी क्रोधादमर्षिता । यवीयसीभ्यो ज्यायसीं किन्तु पूजामिमां प्रभो । असम्मताभवज्ञाय कृतवानसि गर्हिताम् ॥ ४४ ॥ अहं ज्येष्ठा वरिष्ठा हि न त्वसत्कर्तुमर्हसि । एवमुक्तोऽब्रवीदेनां दक्षः संरक्तलोचनः ॥ ४५ ॥ त्वन्तु श्रेष्ठा वरिष्ठा च पूज्या बाला सदा मम । तासां ये चैव भर्त्तारस्ते मे बहुमताः सदा ॥ ४६ ॥ ब्रह्मिष्ठाश्च तपिष्ठाश्च महायोगाः सुधार्मिकाः । गुणैश्चैवाधिकाः श्लाघ्याः सर्वे ते त्र्यम्बकात्सति ॥ ४७ ॥ वसिष्ठोऽत्रिः पुलस्त्यश्च अङ्गिराः पुलहः क्रतुः । भृगुर्मरीचिश्च तथा श्रेष्ठा जामातरो मम ॥ ४८ ॥ तस्यात्मा स च ते शर्वो भक्ता चासि हि तं सदा । तेन त्वां न बुभूषामि प्रतिकूलो हि मे भवः ॥ ४९ ॥ इत्युवाच तदा दक्षः संप्रमूढेन चेतसा । शापार्थमात्मनश्चैव ये चोक्ताः परमर्षयः ॥ ५० ॥ तथोक्ता पितरं सा वै क्रुद्धा देवीदमब्रवीत् । वाङ्मनःकर्मभिर्यस्माददुष्टां मां विगर्हसे । तस्मात्त्यजाम्यहन्देहमिदन्तात तवात्मजम् ॥ ५१ ॥ ततस्तेनावमानेन सती दुःखादमर्षिता । अब्रवीद्वचनं देवी नमस्कृत्य महेश्वरम् ॥ ५२ ॥ यत्राहमुपपत्स्येहं पुनर्देहेन भास्वता । तत्राप्यहमसंमूढा सम्भूता धार्मिकी पुनः । गच्छेयं धर्मपत्नीत्वं त्र्यम्बकस्यैव धर्मतः ॥ ५३ ॥ तत्रैवाथ समासीना युक्तात्मानं समादधे । धारयामास चाग्नेयीं धारणां मनसात्मनः ॥ ५४ ॥ तत आग्नेयीसमुत्थेन वायुना समुदीरितः । सर्वाङ्गेभ्यो विनिःसृत्य वह्निर्भस्म चकार ताम् ॥ ५५ ॥ तदुपश्रुत्य निधनं सत्या देवोऽथ शूलधृक् । संवादञ्च तयोर्बुद्ध्वा याथातथ्येन शङ्करः । दक्षस्याथ ऋषीणाञ्च चुकोप भगवान् प्रभुः ॥ ५६ ॥ यस्मादवमता दक्ष मत्कृते नाम सा सती । प्रशस्ताश्चेतराः सर्वाः स्वसुता भर्तृभिः सह ॥ ५७ ॥ तस्माद्वैवस्वतं प्राप्य पुनरेव महर्षयः । उत्पत्स्यन्ते द्वितीये वै मम यज्ञे ह्ययोनिजाः ॥ ५८ ॥ हुते वै ब्रह्मणा शुक्रे चाक्षुषस्यान्तरे मनोः । अभिव्याहृत्य च ऋषीन् दक्षमभ्यगमत् पुनः ॥ ५९ ॥ भविता चाक्षुषो राजा चाक्षुषस्य समन्वये । प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ॥ ६० ॥ दक्ष इत्येव नाम्ना त्वं मार्षायां जनयिष्यसि । कन्यायां शाखिनाञ्चैव प्राप्ते वै चाक्षुषेऽन्तरे ॥ ६१ ॥ दक्ष उवाच ॥ अहं तत्रापि ते विघ्नमाचरिष्यामि दुर्मते । धर्मार्थकामयुक्तेषु कर्मस्विह पुनः पुनः ॥ ६२ ॥ यस्मात् त्वं मत्कृते क्रूरमृषीन् व्याहृतवानसि । तस्मात्सार्द्धं सुरैर्यज्ञे न त्वां यक्ष्यन्ति वै द्विजाः ॥ ६३ ॥ हुत्वाहुतिं ततः क्रूरः अपस्त्यक्ष्यन्ति कर्मसु । इहैव वत्स्यसि तथा दिवं हित्वा युगक्षयात् ॥ ६४ ॥ रुद्र उवाच ॥ सर्वेषामेव लोकानां भूर्लोकस्त्वादिरुच्यते । तमहं धारयिष्यामि निदेशात् परमेष्ठिनः ॥ ६५ ॥

अस्यां क्षितौ वृता लोकाः सर्वे तिष्ठन्ति भास्कराः । तानहं धारयामीह सततं न तवाज्ञया ॥ ६६ ॥ चातुर्वर्ण्यं हि देवानां ते चाप्येकत्र भुञ्जते
नाहं तैः सह भोक्ष्यामि ततो दास्यन्ति ते पृथक् । ततो देवैः स तैः सार्द्धं नेज्यते पृथगिज्यते ॥ ६७ ॥ ततोऽभिव्याहृतो दक्षो रुद्रेणामिततेजसा
स्वायम्भुवेऽन्तरे त्यक्त्वा उत्पन्नो मानुषेष्विह ॥ ६८ ॥ ज्ञात्वा गृहपतिं दक्षं ज्ञानानामीश्वरं प्रभुम् । दक्षो नाम महायज्ञः सोऽयजद्दैवतैः सह ॥ ६९
अथ देवी सती या तु प्राप्ते वैवस्वतेऽन्तरे । मेनायां तामुमां देवीं जनयामास शैलराट् ॥ ७० ॥ सा तु देवी सती पूर्वं ततः पश्चादुमाऽभवत् । स
व्रता भवस्यैषा न तया मुच्यते भवः । यावदिच्छति संस्थातुं प्रभुर्मन्वन्तरेष्विह ॥ ७१ ॥ मारीचं कश्यपं देवी यथादितिरनुव्रता । साध्यं नाराय
श्रीस्तु मघवन्तं शची यथा ॥ ७२ ॥ विष्णुं कीर्तो रुचिः सूर्यं वसिष्ठश्चाप्यरुन्धती । नैतास्तु विजहत्येतान् भर्तॄन् देव्यः कथंचन । आवर्त्तमानकल्पे
पुनर्जायन्ति तैः सह ॥ ७३ ॥ एवं प्राचेतसो दक्षो जज्ञे वै चाक्षुषेऽन्तरे । प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ॥ ७४ ॥ दशभ्यस्तु प्रचेतोभ्
मार्षायाश्च पुनर्नृपः । जज्ञे रुद्राभिशापेन द्वितीयेऽस्मिन्निति श्रुतिः ॥ ७५ ॥ भृग्वादयस्तु ते सर्वे जज्ञिरे वै महर्षयः । आद्ये त्रेतायुगे पूर्वं मनोर्वैवस्व
स्य ह । देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम् ॥ ७६ ॥ इति सानुशयोऽह्यासीत्तयोर्जात्यन्तरागतः । प्रजापतेस्तु दक्षस्य त्र्यम्बकस्य च धीमत
॥ ७७ ॥ तस्मान्नानुशयः कार्यो वैरिष्विह कदाचन । जात्यन्तरगतस्यापि भावितस्य शुभाशुभैः । जन्तुं न मुञ्चति ख्यातिस्तत्र कार्यं विजानत
॥ ७८ ॥ ऋषय ऊचुः ॥ प्राचेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे । विनाशमगमत् सूत हयमेधः प्रजापतेः ॥ ७९ ॥ देव्या मृत्युं कृतं मत्वा क्रुद्धं स
त्मकं प्रभुम् । कथं प्रासादयद्दक्षः स यज्ञः साधितः कथम् । एतद्वेदितुमिच्छामस्तन्नो ब्रूहि यथातथम् ॥ ८० ॥ सूत उवाच ॥ पुरा मेरोर्द्विजश्रेष्ठ
शृङ्गं त्रैलोक्यविश्रुतम् । ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितम् ॥ ८१ ॥ अप्रमेयमनाधृष्यं सर्वलोकनमस्कृतम् । तस्मिन् देवो गिरिश्रेष्ठे सर्वधा
विभूषिते । पर्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह ॥ ८२ ॥ शैलराजसुता चास्य नित्यं पार्श्वस्थिताऽभवत् । आदित्याश्च महात्मानो वसवश्चामितौ
सः ॥ ८३ ॥ तथैव च महात्मानावश्विनौ भिषजां वरौ । तथा वैश्रवणो राजा गुह्यकैः परिवारितः ॥८४॥ यक्षाणामीश्वरः श्रीमान् कैलासनिलयः प्रभुः
उपासते महात्मानं उशना च महामुनिः । सनत्कुमारप्रमुखास्ते चैव परमर्षयः ॥ ८५॥ अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे । विश्वावसुश्च गन्धर्वस्त
नारदपर्वतौ ॥ ८६ ॥ अप्सरोगणसङ्घाश्च समाजग्मुरनेकशः । ववौ शिवः सुखो वायुर्नानागन्धवहः शुचिः ॥ ८७ ॥ सर्वर्तुकुसुमोपेताः पुष्पवन्तो द्रु
स्तथा । तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः ॥ ८८ ॥ महादेवं पशुपतिं पर्युपासन्ति तत्र वै । भूतानि च तथान्यानि नानारूपधराण्यथ ॥ ८९

राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः । बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः ॥ ९० ॥ देवस्यानुचरास्तत्र तस्थुर्वैश्वानरोपमाः । नन्दीश्वरश्च
भगवान् देवस्यानुमते स्थितः ॥ ९१ ॥ प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा । गङ्गा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा । पर्युपासत तन्देवरू
पिणी द्विजसत्तमाः ॥ ९२ ॥ एवं स भगवांस्तत्र दीप्यमानः सुरर्षिभिः । देवैश्च सुमहाभागैर्महादेवो व्यवस्थितः ॥ ९३ ॥ पुरा हिमवतः पृष्ठे दक्षो वै
यज्ञमारभत् । गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ॥ ९४ ॥ ततस्तस्य मखे देवाः शतक्रतुपुरोगमाः । गमनाय समागम्य बुद्धिमापेदिरे तदा
॥ ९५ ॥ स्वैर्विमानैर्महात्मानो ज्वलद्भिर्ज्वलनप्रभाः । देवस्यानुमतेऽगच्छन् गङ्गाद्वार इति श्रुतिः ॥ ९६ ॥ गन्धर्वाप्सरसाकीर्णं नानाद्रुमलतावृतम् ।
ऋषिसङ्घैः परिवृतं दक्षं धर्मभृतां वरम् ॥ ९७ ॥ पृथिव्यामन्तरिक्षे वा ये च स्वर्लोकवासिनः । सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ॥ ९८ ॥
आदित्या वसवो रुद्राः साध्याः सह मरुद्गणैः । जिष्णुना सहिताः सर्वे आगता यज्ञभागिनः ॥ ९९ ॥ ऊष्मपाः सोमपाश्चैव आज्यपा धूमपास्तथा ।
अश्विनौ पितरश्चैव आगता ब्रह्मणा सह ॥ १०० ॥ एते चान्ये च बहवो भूतग्रामास्तथैव च । जरायुजाण्डजाश्चैव स्वेदजोद्भिज्जकास्तथा ॥ १०१ ॥
आहूता मन्त्रतः सर्वे देवाश्च सह पत्निभिः । विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ॥ १०२ ॥ तान् दृष्ट्वा मन्युमाविष्टो दधीचो वाक्यमब्रवीत् ।
अपूज्यपूजने चैव पूज्यानां चाप्यपूजने । नरः पापमवाप्नोति महद्वै नात्र संशयः ॥१०३॥ एवमुक्त्वा तु विप्रर्षिः पुनर्दक्षमभाषत । पूज्यन्तु पशुभर्त्तारं
कस्मान्नाह्वयसे प्रभुम् ॥ १०४ ॥ दक्ष उवाच ॥ सन्ति मे बहवो रुद्राः शूलहस्ताः कपर्दिनः । एकादशावस्थगता नान्यं वेद्मि महेश्वरम् ॥ १०५ ॥
दधीच उवाच ॥ सर्वे निमन्त्रिता देवा येन ईशो निमन्त्रितः । यथाहं शङ्करादूर्द्ध्वं नान्यं पश्यामि दैवतम् । तथा दक्षस्य विपुलो यज्ञोऽयं न भविष्यति
॥ १०६ ॥ दक्ष उवाच ॥ एतन्मखे शूर सुवर्णपात्रे हविः समस्तं विधिमन्त्रपूतम् । विष्णोर्नयाम्यप्रतिमस्य सर्वं प्रभोर्विभो ह्याहवनीयानित्यम् ॥ १०७ ॥
गतास्तु देवता ज्ञात्वा शैलराजसुता तदा । उवाच वचनं साध्वी देवं पशुपतिं तदा ॥ १०८ ॥ उमोवाच ॥ भगवन् क्व गता ह्येते देवाः
शक्रपुरोगमाः । ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयम् ॥ १०९ ॥ महेश्वर उवाच ॥ दक्षो नाम महाभागो प्रजानां पतिरुत्तमः ।
हयमेधेन यजते तत्र यान्ति दिवौकसः ॥ ११० ॥ देव्युवाच ॥ यज्ञमेतं महाभाग किमर्थं न गतोऽसि वै । केन वा प्रतिषेधेन गमनं प्रतिषि
ध्यते ॥ १११ ॥ महेश्वर उवाच ॥ सुरैरेव महाभागे सर्वमेतदनुष्ठितम् । यज्ञेषु मम सर्वेषु न भाग उपकल्पितः ॥ ११२ ॥ पूर्वोपायोपपन्नेन
मार्गेण वरवर्णिनि । न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धीमतः ॥ ११३ ॥ देव्युवाच ॥ भगवन् सर्वदेवेषु प्रभावानधिको गुणैः । अजेय

श्चाप्यधृष्यश्च तेजसा यशसा श्रिया ॥ ११४ ॥ अनेन तु महाभाग प्रतिषेधेन नामतः । अतीव दुःखमापन्ना वेपथुश्च ममानघ ॥ ११५ ॥ किं नाम
दानं नियमन्तपो वा कुर्य्यामहं येन पतिर्म्ममाद्य । लभेत भागं भगवानचिन्त्यो यज्ञस्य चार्द्धं त्वथ वा तृतीयम् ॥ ११६ ॥ एवं ब्रुवाणां भगवान
चिन्त्यः पत्नीं प्रहृष्टः क्षुभितामुवाच । न वेत्सि देवेशि कृशोदराङ्गि किं नाम युक्तं वचनन्तवेदम् ॥ ११७ ॥ अहं हि जानामि विशालनेत्रे ध्यानेन
सर्वं हि वदन्ति सन्तः । न वाद्य मोहेन महेन्द्रदेवो लोकत्रयं सर्वथा संप्रमूढम् ॥ ११८ ॥ मामध्वरे शंसितारः स्तुवन्ति रथन्तरे साम गायन्ति गेयम् ।
मां ब्राह्मणा ब्रह्मसत्रे यजन्ते माध्वर्य्यवः कल्पयन्ते च भागम् ॥ ११९ ॥ देव्युवाच ॥ अप्राकृतोऽपि भगवान् सर्वस्त्रीजनसंसदि । स्तौति गोपा
यते वापि स्वमात्मानं न संशयः ॥ १२० ॥ भगवानुवाच ॥ नात्मानं स्तौमि देवेशि पश्य त्वमुपगच्छ च । यं स्रक्ष्यामि वरारोहे भागार्थं वरव
र्णिनि ॥ १२१ ॥एवमुक्त्वा तु भगवान् पत्नीं प्राणैरपि प्रियान् । सोऽसृजद्भगवान्वक्त्राद्भूतं क्रोधाग्निसन्निभम् ॥ १२२ ॥ सहस्रशीर्षं देवञ्च सहस्रचरणे
क्षणम् । सहस्रमुद्गरधरं सहस्रशरपाणिनम् ॥ १२३ ॥ शङ्खचक्रगदापाणिं दीप्तकार्मुकधारिणम् । परश्वासिधरं देवं महारौद्रं भयावहम् ॥ १२४ ॥ घोर
रूपेण दीप्यन्तं चन्द्रार्धकृतभूषणम् । वसानं चर्म वैयाघ्रं महारुधिरनिःस्रवम् ॥ १२५ ॥ दंष्ट्राकरालं विभ्रान्तं महावक्त्रं महोदरम् । विद्युज्जिह्वं प्रल
म्बोष्ठं लम्बकर्णं दुरासदम् ॥ १२६ ॥ कुलिशोद्योतितकरम्भाभिर्ज्वलितमूर्द्धजम् । ज्वालामालापरिक्षिप्तं मुक्तादामविभूषितम् ॥ १२७ ॥ तेजसा
चैव दीप्यन्तं युगान्ताग्निमिव पावकम् । आकर्णदारितास्यान्तश्चतुर्दिक्षु भयानकम् ॥ १२८ ॥ महाबलं महातेजं महापुरुषमीश्वरम् । विश्वहर्तृंमहा
कायं महान्यग्रोधमण्डलम् । युगपच्चन्द्रशतवद्दीप्यन्तं मन्मथाग्निवत् ॥ १२९ ॥ चतुर्महास्यं सिततीक्ष्णदंष्ट्रं महोग्रतेजोबलकौतुकाढ्यम् । युगान्तसू
र्य्याग्निसहस्रभासं सहस्रचन्द्रामलकान्तिकान्तम् । प्रदीप्तसर्वौषधिमन्दराभं सुमेरुकैलासहिमाद्रितुल्यम् ॥ १३० ॥ युगार्काभं महावीर्य्यं चारुनासं
महाननम् । प्रचण्डगण्डं दीप्ताक्षमग्निज्वालाविलाननम् ॥ १३१ ॥ मृगेन्द्रकृत्तिवसनं महाभुजगवेष्टितम् । उष्णीषिणं चन्द्रधरं क्वचिदुग्रं क्वचित्सम
म् ॥ १३२ ॥ नानाकुसुममूर्द्धानं नानागन्धानुलेपनम् । नानारत्नविचित्राङ्गं नानाभरणभूषितम् ॥ १३३ ॥ कर्णिकारस्रजं दीप्तं क्रोधादुद्भ्रान्तलो
चनम् । क्वचिन्नृत्यति चित्राङ्गं क्वचिद्वदति सुस्वरम् ॥ १३४ ॥ क्वचिद्ध्यायति युक्तात्मा क्वचित्स्थूलं प्रमार्जति । क्वचिद्गायति विश्वात्मा
क्वचिद्रौति मुहुर्मुहुः ॥ १३५ ॥ ज्ञानं वैराग्यमैश्वर्य्यं तपः सत्यं क्षमा धृतिः । प्रभुत्वमात्मसंबोधो ह्यधिष्ठानगुणैर्युतः ॥ १३६ ॥
जानुभ्यामवनिं गत्वा प्रणतः प्राञ्जलिः स्थितः । आज्ञापय त्वं देवेश किं कार्य्यं करवाणि ते ॥ १३७ ॥ तमुवाचाक्षिप मखं दक्षस्येह

महेश्वरः । देवस्यानुमतिं श्रुत्वा वीरभद्रो महाबलः । प्रणम्य शिरसा पादौ देवेशस्य उमापतेः ॥१३८॥ ततो बन्धात् प्रमुक्तेन सिंहेनेवेह लीलया । देव्या मन्युकृतं मत्वा हतो दक्षस्य स क्रतुः ॥ १३९ ॥ मन्युना च महाभीमा भद्रकाली महेश्वरी । आत्मनः सर्वसाक्षित्वे तेन सार्द्धं सहानुगा ॥ १४० ॥ स एष भगवान् क्रुद्धः प्रेतावासकृतालयः । वीरभद्र इति ख्यातो देव्या मन्युप्रमार्जकः ॥ १४१ ॥ सोऽसृजद्रोमकूपेभ्यो रौद्रान्नाम गणेश्वरान् । रुद्रानुगा महावीर्य्या रुद्रवीर्यपराक्रमाः ॥ १४२ ॥ रुद्रस्यानुचराः सर्वे सर्वे रुद्रसमप्रभाः । ते निपेतुस्ततस्तूर्णं शतशोऽथ सहस्रशः ॥ १४३ ॥ ततः किलकिलाशब्द आकाशं पूरयन्निव । तेन शब्देन महता त्रस्ताः सर्वे दिवौकसः ॥ १४४ ॥ पर्वताश्च व्यशीर्यन्त कम्पते च वसुन्धरा । मेरुश्च घूर्णते विप्राः क्षुभ्यन्ते वरुणालयाः ॥ १४५ ॥ अग्नयो नैव दीप्यन्ते न च दीप्यन्ति भास्कराः । ग्रहा नैव प्रकाशन्ते नक्षत्राणि न तारकाः ॥ १४६ ॥ ऋषयो नाभ्यभाषन्त न देवा न च दानवाः । एवं हि तिमिरीभूतं निर्दहन्ति विमानिताः ॥ १४७ ॥ सिंहनादं प्रमुञ्चन्ते घोररूपा महाबलाः । प्रभञ्जन्ते परे घोरा यूपानुत्पाटयन्ति च ॥ १४८ ॥ प्रमर्दन्ति तथा चान्ये विनृत्यन्ति तथाऽपरे । आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः ॥ १४९ ॥ चूर्णन्ते यज्ञपात्राणि यागस्यायतनानि च । शीर्यमाणानि दृश्यन्ते तारा इव नभस्तलात् ॥ १५० ॥ दिव्यान्नपानभक्षाणां राशयः पर्वतोपमाः । क्षीरनद्यस्तथा चान्या घृतपायसकर्दमाः । मधुमण्डोदका दिव्याः खण्डशर्करवालुकाः ॥ १५१ ॥ षड्रसान्निवहन्त्यन्या गुडकुल्या मनोरमाः । उच्चावचानि मांसानि भक्ष्याणि विविधानि च ॥ १५२ ॥ यानि कानि च दिव्यानि लेह्यचोष्यं तथापरे । भुञ्जते विविधैर्वक्त्रैर्विलुण्ठन्ति च सर्वशः । क्रीडन्ति विविधाकाराश्चिक्षिपुः सुरयोषितः ॥ १५३ ॥ रुद्रकोपप्रयुक्तास्तु सर्वदेवैः सुरक्षितम् । तं यज्ञमहनन् शीघ्रं रुद्रकल्पाः समीपतः ॥ १५४ ॥ चक्रुरन्ये तथा नादान् सर्वभूतभयंकरान् । छित्त्वा शिरोऽन्ये यज्ञस्य विनदन्ति भयङ्कराः ॥ १५५ ॥ दक्षो दक्षपतिश्चैव देवो यज्ञपतिस्तथा । मृगरूपेण चाकाशे प्रपलायितुमारभत् ॥ १५६ ॥ वीरभद्रोऽप्रमेयात्मा ज्ञात्वा तस्य बलन्तदा । अन्तरिक्षगतस्याशु चिच्छेदास्य शिरो महान् ॥१५७॥ दक्षः प्रजापतिश्चैव विनष्टभ्रान्तचेतनः । क्रुद्धेन वीरभद्रेण शिरः पादेन पीडितः । जराभिभूततन्त्रात्मा निपपात महीतले ॥१५८॥ त्रयस्त्रिंशद्देवतानां ताः कोट्यो विमलात्मकाः । पाशेनाग्निबलेनाशु बद्धाः सिंहबलेन च ॥१५९॥ ततो जग्मुर्महात्मानं सर्वे देवा महाबलम् । प्रसीद भगवन् रुद्र भृत्यानां मा क्रुधः प्रभो ॥१६०॥ ततो ब्रह्मादयो देवा दक्षश्चैव प्रजापतिः । ऊचुः प्राञ्जलयो भूत्वा कथ्यतां को भवानिति॥ १६१॥ वीरभद्र उवाच ॥ न च देवो न चादित्यो न च भोक्तुमिहागतः । नैव द्रष्टुं हि देवेन्द्रान्न च कौतूहलान्वितः ॥ १६२ ॥ दक्षयज्ञविनाशार्थं सम्प्राप्तं विद्धि मामिह । वीरभद्र इति ख्यातं रुद्रकोपाद्विनिर्गतम् ॥ १६३ ॥

द्रकाली च विज्ञेया देव्याः क्रोधाद्विनिर्गता। प्रेषिता देवदेवेन यज्ञान्तिकमिहागता ॥ १६४ ॥ शरणं गच्छ राजेन्द्र देवं ते त्वमुमापतिम् । वरं
घोऽपि रुद्रस्य वरदानं न देवतः ॥ १६५ ॥ वीरभद्रवचः श्रुत्वा दक्षो धर्म्मभृतां वरः । तोषयामास देवेशं शूलपाणिं महेश्वरम् ॥ १६६ ॥ प्रदुष्टे
वादे तु विद्रुतेषु द्विजातिषु । तारामृगमये दीप्ते रौद्रे भीममहानले ॥ १६७ ॥ शूलनिर्भिन्नवदनैः कूजद्भिः परिचारकैः । निखातोत्पाटितैर्यूपैरपविद्धे
तस्ततः ॥ १६८ ॥ उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृध्नुभिः । पक्षपातविनिर्धूतैः शिवाशतनिनादितैः ॥ १६९ ॥ प्राणापानौ सन्निरुध्य ततः
गनेन यत्नतः । विचार्य सर्वतो दृष्टिं बहुदृष्टिरमित्रजित् ॥ १७० ॥ सहसा देवदेवेशः अग्निकुण्डादुपागतः । चन्द्रसूर्य्यसहस्रस्य तेजः संवर्त्तको
म् ॥ १७१ ॥ प्रहस्य चैनं भगवानिदं वचनमब्रवीत् । नष्टस्ते ज्ञानतो दक्ष प्रीतिस्ते मयि सांप्रतम् ॥ १७२ ॥ स्मितं कृत्वाब्रवीद्वाक्यं ब्रूहि किं
वाणि ते । श्रावितश्च समाख्याय देवानां गुरुभिः सह ॥ १७३ ॥ तमुवाचाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः । भीतशङ्कितवित्रस्तः सवाष्पवदनेक्षणः
१७४ ॥ यदि प्रसन्नो भगवान् यदि वाहं तव प्रियः । यदि वाहमनुग्राह्यो यदि देयो वरो मम ॥ १७५ ॥ यज्जग्धं भक्षितं पीतमशितं यच्च नाशितम् ।
र्णीकृतश्चापविद्धं यज्ञसम्भारमीदृशम् ॥ १७६ ॥ दीर्घकालेन महता प्रयत्नेन च सञ्चितम् । तन्न मिथ्या भवेन्मह्यं वरमेतं वृणोम्यहम्
१७७ ॥ तथास्त्वित्याह भगवान् भगनेत्रहरो हरः । धर्माध्यक्षं महादेवं त्र्यक्षन्तं वै प्रजापतिः ॥ १७८ ॥ जानुभ्यामवनिं गत्वा दक्षो लब्ध्वा
द्भवम् । नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम् ॥१७९॥ दक्ष उवाच ॥ नमस्ते देवदेवेश देवारिबलसूदन । देवेन्द्र ह्यमरश्रेष्ठ देवदानवपूजित
१८० ॥ सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय । सर्वतः पाणिपादस्त्वं सर्वतोऽक्षिशिरोमुखः । सर्वतः श्रुतिमान् लोके सर्वानावृत्य तिष्ठसि
१८१ ॥ शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय । गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते ॥ १८२ ॥ शतोदर शतावर्त्त शतजिह्व
ानन । गायन्ति त्वां गायत्रिणो ह्यर्चयन्ति तथार्च्चिनः ॥ १८३ ॥ देवदानवगोप्ता च ब्रह्मा च त्वं शतक्रतुः । मूर्त्तीशस्त्वं महामूर्ते समुद्राम्बु
य च ॥ १८४ ॥ सर्वा ह्यस्मिन् देवतास्ते गावो गोष्ठ इवासते । शरीरन्ते प्रपश्यामि सोममग्निं जलेश्वरम् ॥ १८५ ॥ आदित्यमथ विष्णुञ्च
ाणं सबृहस्पतिम् । क्रिया कार्य्यं कारणञ्च कर्त्ता करणमेव च ॥ १८६ ॥ असच्च सदसच्चैव तथैव प्रभवाव्ययम् । नमो भवाय शर्वाय रुद्राय
दाय च ॥ १८७ ॥ पशूनां पतये चैव नमस्त्वन्धकघातिने । त्रिजटाय त्रिशीर्षाय त्रिशूलवरधारिणे ॥ १८८ ॥ त्र्यम्बकाय त्रिनेत्राय त्रिपुर
य वै नमः । नमश्चण्डाय मुण्डाय प्रचण्डाय धराय च ॥ १८९ ॥ दण्डि(?)मासक्तकर्णाय दण्डिमुण्डाय वै नमः । नमोऽर्द्धदण्डकेशाय निष्काय

ृताय च ॥ १९० ॥ विलोहिताय धूम्राय नीलग्रीवाय ते नमः । नमस्त्वप्रतिरूपाय शिवाय च नमोऽस्तु ते ॥ १९१ ॥ सूर्य्याय सूर्य्यपतये
त्यंध्वजपताकिने । नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ॥ १९२ ॥ नमो हिरण्यगर्भाय हिरण्यकवचाय च । हिरण्यकृतचूडाय हिरण्यपतये
ः ॥ १९३ ॥ सत्रघाताय दण्डाय वर्णपानपुटाय च । नमः स्तुताय स्तुत्याय स्तूयमानाय वै नमः ॥ १९४ ॥ सर्वायाभक्ष्यभक्ष्याय सर्वभूतान्तरा
ने । नमो होत्राय मन्त्राय शुक्लध्वजपताकिने ॥ १९५ ॥ नमो नमाय नम्याय नमः किलिकिलाय च । नमस्ते शयमानाय शयितायोत्थिताय च ।
१९६ ॥ स्थिताय चलमानाय मुद्राय कुटिलाय च । नमो नर्त्तनशीलाय मुखवादित्रकारिणे ॥ १९७ ॥ नाट्योपहारलुब्धाय गीतवाद्यरताय च
ो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ॥ १९८ ॥ कलनाय च कल्पाय क्षयायोपक्षयाय च । भीमदुन्दुभिहासाय भीमसेनप्रियाय च ॥ १९९ ॥
ाय च नमो नित्यं नमस्ते दशबाहवे । नमः कपालहस्ताय चिताभस्मप्रियाय च ॥ २०० ॥ विभीषणाय भीष्माय भीष्मव्रतधराय च । नमो विकृ
ाय खड्गजिह्वाग्रदंष्ट्रिणे ॥ २०१ ॥ पक्वाममांसलुब्धाय तुम्बवीणाप्रियाय च । नमो वृषाय वृष्याय वृष्णये वृषणाय च ॥२०२॥ कटङ्कटाय चण्डाय
ः सावयवाय च । नमस्ते वरकृष्णाय वराय वरदाय च ॥ २०३ ॥ वरगन्धमाल्यवस्त्राय वरातिवरये नमः । नमो वर्षाय वाताय छायायै
तपाय च ॥ २०४ ॥ नमो रक्तविरक्ताय शोभनायाक्षमालिने । सम्भिन्नाय विभिन्नाय विविक्तविकटाय च ॥ २०५ ॥ अघोररूपरूपाय
घोरतराय च । नमः शिवाय शान्ताय नमः शान्ततराय च ॥ २०६ ॥ एकपाद्बहुनेत्राय एकशीर्षन्नमोऽस्तु ते । नमो वृद्धाय लुब्धाय
भागप्रियाय च ॥ २०७ ॥ पञ्चमालार्चिताङ्गाय नमः पाशुपताय च । नमश्चण्डाय घण्टाय घण्टया जग्धरन्ध्रिणे ॥ २०८ ॥ सहस्रशतघण्टाय
टामालाप्रियाय च । प्राणदण्डाय त्यागाय नमो हिलिहिलाय च ॥ २०९ ॥ हूंहूङ्काराय पाराय हूंहूङ्कारप्रियाय च । नमश्च शम्भवे नित्यं गिरि
कलाय च ॥ २१० ॥ गर्भमांसशृगालाय तारकाय तराय च । नमो यज्ञाधिपतये द्रुतायोपद्रुताय च ॥ २११ ॥ यज्ञवाहाय दानाय तप्याय
नाय च । नमस्तटाय भव्याय तडितां पतये नमः ॥२१२॥ अन्नदायान्नपतये नमोऽस्त्वन्नभवाय च । नमः सहस्रशीर्ष्णे च सहस्रचरणाय च ॥२१३॥
ोद्यतशूलाय सहस्रनयनाय च । नमोऽस्तु बालरूपाय बालरूपधराय च ॥ २१४ ॥ बालानाञ्चैव गोप्त्रे च बालक्रीडनकाय च । नमः ॥४५॥
ाय बुद्धाय क्षोभणायाक्षताय च ॥ २१५ ॥ तरङ्गाङ्कितकेशाय मुक्तकेशाय वै नमः । नमः षट्कर्मनिष्ठाय त्रिकर्मनिरताय च ॥ २१६ ॥ वर्णा
ाणां विधिवत् पृथक्कर्मप्रवर्तिने । नमो घोषाय घोष्याय नमः कलकलाय च ॥ २१७ ॥ श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च । धर्मार्थ

काममोक्षाय क्रथाय कथनाय च ॥ २१८ ॥ साङ्ख्याय साङ्ख्यमुख्याय योगाधिपतये नमः । नमो रथ्यविरथ्याय चतुष्पथरताय च ॥ २१९ ॥ कृष्णा
जिनोत्तरीयाय व्यालयज्ञोपवीतिने । ईशानवज्रसंहाय हरिकेश नमोऽस्तु ते । अविवेकैकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते ॥ २२० ॥ काम कामद
कामघ्न धृष्टोदृप्तनिषूदन । सर्व सर्वद सर्वज्ञ सन्ध्याराग नमोऽस्तु ते ॥ २२१ ॥ महाबाल महाबाहो महासत्त्व महाद्युते । महामेघवरप्रेक्ष महाकाल नमो
ऽस्तु ते ॥२२२॥ स्थूलजीर्णाङ्गजटिने वल्कलाजिनधारिणे । दीप्तसूर्याग्निजटिने वल्कलाजिनवाससे । सहस्रसूर्यप्रतिम तपोनित्य नमोऽस्तु ते ॥ २२३॥
उन्मादनशतावर्त्त गङ्गातोयार्द्रमूर्द्धज । चन्द्रावर्त्त युगावर्त्त मेघावर्त्त नमोऽस्तु ते ॥ २२४ ॥ त्वमन्नमन्नकर्त्ता च अन्नदश्च त्वमेव हि । अन्नस्रष्टा च पक्ता
च पक्वभुक्तपचे नमः ॥ २२५ ॥ जरायुजोऽण्डजश्चैव स्वेदजोद्भिज्ज एव च । त्वमेव देवदेवेशो भूतग्रामश्चतुर्विधः ॥ २२६ ॥ चराचरस्य ब्रह्मा त्वं
प्रतिहर्त्ता त्वमेव च । त्वमेव ब्रह्मविदुषामपि ब्रह्मविदां वरः ॥ २२७ ॥ सत्त्वस्य परमा योनिरब्वायुज्योतिषां निधिः । ऋक्सामानि तथोङ्कारमाहुस्त्वां
ब्रह्मवादिनः ॥ २२८ ॥ हविर्हावी हवो हावी हुवां वाचाहुतिः सदा । गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ॥ २२९ ॥ यजुर्मयो ऋङ्मयश्च सामा
थर्वमयस्तथा । पठ्यसे ब्रह्मविद्भिस्त्वं कल्पोपनिषदां गणैः ॥ २३० ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये । त्वामेव मेघसङ्घाश्च विश्वस्त
नितगर्जितम् ॥२३१॥ संवत्सरस्त्वमृतवो मासा मासार्द्धमेव च । कला काष्ठा निमेषाश्च नक्षत्राणि युगा ग्रहाः ॥२३२॥ वृषाणां ककुदं त्वं हि गिरीणां शि
खराणि च । सिंहो मृगाणां पततां तार्क्ष्योऽनन्तश्च भोगिनाम् ॥ २३३ ॥ क्षीरोदो ह्युदधीनाञ्च यन्त्राणां धनुरेव च । वज्रम्प्रहरणानाञ्च व्रतानां सत्यमेव
च ॥ २३४ ॥ इच्छा द्वेषश्च रागश्च मोहः क्षामो दमः शमः । व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥२३५॥ त्वं गदी त्वं शरी चापि खट्वाङ्गी
झर्झरी तथा । छेत्ता भेत्ता प्रहर्त्ता च त्वं नेताप्यन्तको मतः ॥ २३६ ॥ दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च । इन्द्रः समुद्राः सरितः पल्वलानि
सरांसि च ॥ २३७ ॥ लतावल्ली तृणौषध्यः पशवो मृगपक्षिणः । द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः ॥ २३८ ॥ आदिश्चान्तश्च मध्यश्च गाय
त्र्योङ्कार एव च । हरितो लोहितः कृष्णो नीलः पीतस्तथारुणः ॥ २३९ ॥ कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा । सुवर्णरेता विख्यातः सुवर्ण
श्चाप्यतो मतः ॥ २४० ॥ सुवर्णनामा च तथा सुवर्णप्रिय एव च । त्वमिन्द्रोऽथ यमश्चैव वरुणो धनदोऽनलः ॥ २४१ ॥ उत्फुल्लश्चित्रभानुश्च स्वर्भा
नुर्भानुरेव च । होत्रं होता च होमस्त्वं हुतश्च प्रहुतं प्रभुः ॥ २४२ ॥ सुपर्णञ्च तथा ब्रह्म यजुषां शतरुद्रियम् । पवित्राणां पवित्रं च मङ्गलानाञ्च
मङ्गलम् ॥ २४३ ॥ गिरिः स्तोकस्तथा वृक्षो जीवः पुद्गल एव च । सत्त्वं त्वञ्च रजस्त्वञ्च तमश्च प्रजनं तथा ॥ २४४ ॥ प्राणोऽपानः

समानश्च उदानो व्यान एव च । उन्मेषश्चैव मेषश्च तथा जृम्भितमेव च ॥ २४५ ॥ लोहिताङ्गो गदी दंष्ट्री महावक्त्रो महोदरः । शुचिरोमा हरि
च्छ्मश्रुरूर्द्ध्वकेशस्त्रिलोचनः ॥ २४६ ॥ गीतवादित्रनृत्याङ्गो गीतवादनकप्रियः । मत्स्यो जली जलो जल्यो जवः कालः कली कलः ॥ २४७ ॥ विका
लश्च सुकालश्च दुष्कालः कलनाशनः । मृत्युश्चैव क्षयोऽन्तश्च क्षमापायकरो हरः ॥ २४८ ॥ संवर्त्तकोऽन्तकश्चैव संवर्त्तकवलाहकौ । घटो घटीको
घण्टीको चूडालोलवलो वलम् ॥ २४९ ॥ ब्रह्मकालोऽग्निवक्त्रश्च दण्डी मुण्डी च दण्डधृक् । चतुर्युगश्चतुर्वेदश्चतुर्होत्रश्चतुष्पथः ॥ २५० ॥ चतुरा
श्रमवेत्ता च चातुर्वर्ण्यकरश्च ह । क्षराक्षरप्रियो धूर्त्तोऽगण्योऽगण्यगणाधिपः ॥ २५१ ॥ रुद्राक्षमाल्याम्बरधरो गिरिको गिरिकप्रियः । शिल्पीशः
शिल्पिनां श्रेष्ठः सर्वशिल्पप्रवर्त्तकः ॥ २५२ ॥ भगनेत्रान्तकश्चन्द्रः पूष्णो दन्तविनाशनः । गूढावर्त्तश्च गूढश्च गूढप्रतिनिषेविता ॥ २५३ ॥ तरणस्ता
रकश्चैव सर्वभूतसुतारणः । धाता विधाता सत्वानां निधाता धारणो धरः ॥ २५४ ॥ तपो ब्रह्म च सत्यञ्च ब्रह्मचर्यमथार्जवम् । भूतात्मा भूतकृद्भूतो
भूतभव्यभवोद्भवः ॥ २५५ ॥ भूर्भुवःस्वरितश्चैव तथोत्पत्तिर्महेश्वरः । ईशानो वीक्षणः शान्तो दुर्दान्तो दन्तनाशनः ॥ २५६ ॥ ब्रह्मावर्त्त सुरावर्त्त
कामावर्त्त नमोऽस्तु ते । कामविम्बनिहर्त्ता च कर्णिकाररजःप्रियः ॥ २५७ ॥ मुखचन्द्रो भीममुखः सुमुखो दुर्मुखो मुखः । चतुर्मुखो बहुमुखो रणे
ह्यभिमुखः सदा ॥ २५८ ॥ हिरण्यगर्भः शकुनिर्महोदधिः परो विराट् । अधर्महा महादण्डो दण्डधारो रणप्रियः ॥ २५९ ॥ गोतमो गोप्रतारश्च गोवृ
षेश्वरवाहनः । धर्मकृद्धर्मस्रष्टा च धर्मो धर्मविदुत्तमः ॥ २६० ॥ त्रैलोक्यगोप्ता गोविन्दो मानदो मान एव च । तिष्ठन् स्थिरश्च स्थाणुश्च निष्कम्पः
कम्प एव च ॥ २६१ ॥ दुर्वारणो दुर्विषदो दुःसहो दुरतिक्रमः । दुर्द्धरो दुष्प्रकम्पश्च दुर्विदो दुर्जयो जयः ॥ २६२ ॥ शशः शशाङ्कः शमनः शीतोष्णं
दुर्जराऽथ तृट् । आधयो व्याधयश्चैव व्याधिहा व्याधिगश्च ह ॥ २६३ ॥ सह्यो यज्ञो मृगा व्याधा व्याधीनामाकरोऽकरः । शिखण्डी पुण्डरीकाक्षः
पुण्डरीकावलोकनः ॥ २६४ ॥ दण्डधरः सदण्डश्च दण्डमुण्डविभूषितः । विषपोऽमृतपश्चैव सुरापः क्षीरसोमपः ॥ २६५ ॥ मधुपश्चाज्यपश्चैव सर्व
पश्च महाबलः । वृषाश्ववाह्यो वृषभस्तथा वृषभलोचनः ॥ २६६ ॥ वृषभश्चैव विख्यातो लोकानां लोकसत्कृतः । चन्द्रादित्यौ चक्षुषी ते हृदयञ्च
पितामहः । अग्निरापस्तथा देवो धर्मकर्मप्रसाधितः ॥ २६७ ॥ न ब्रह्मा न च गोविन्दः पुराणऋषयो न च । माहात्म्यं वेदितुं शक्ता याथातथ्येन
ते शिव ॥ २६८ ॥ या मूर्त्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम् । ताभिर्मां सततं रक्ष पिता पुत्रमिवौरसम् ॥ २६९ ॥ रक्ष मां रक्षणीयोऽहं तवानघ
नमोऽस्तु ते ॥ भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ॥ २७० ॥ यः सहस्राण्यनेकानि पुंसामाहृत्य दुर्दृशः । तिष्ठत्येकः समुद्रान्ते स मे गोप्तास्तु

नित्यशः ॥ २७१ ॥ यं विनिद्रा जितश्वासाः सत्त्वस्थाः समदर्शिनः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ २७२ ॥ सम्भक्ष्य सर्वभूतानि युगान्ते समुपस्थिते । यः शेते जलमध्यस्थस्तं प्रपद्येऽप्सुशायिनम् ॥ २७३ ॥ प्रविश्य वदने राहोर्यः सोमं ग्रसते निशि । ग्रसत्यर्कञ्च स्वर्भानुर्भूत्वा सोमाग्निरेव च ॥ २७४ ॥ येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् । रक्षन्तु ते हि मां नित्यं नित्यमाप्याययन्तु माम् ॥ २७५ ॥ ये चाप्युत्पतिता गर्भादधोभागगताश्च ये । तेषां स्वाहाः स्वधाश्चैव आप्नुवन्तु स्वदन्तु च ॥ २७६ ॥ ये न रोदन्ति देहस्थाः प्राणिनो रोदयन्ति च । हर्षयन्ति च हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ॥ २७७ ॥ ये समुद्रे नदीदुर्गे पर्वतेषु गुहासु च । वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥ २७८ ॥ चतुष्पथेषु रथ्यासु चत्वरेषु सभासु च । चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥ २७९ ॥ रसातलगता ये च ये च तस्मात्परङ्गताः । नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्यश्च नित्यशः । सूक्ष्माः स्थूलाः कृशा ह्रस्वा नमस्तेभ्यस्तु नित्यशः ॥ २८० ॥ सर्वस्त्वं सर्वगो देव सर्वभूतपतिर्भवान् । सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ॥ २८१ ॥ त्वमेव चेज्यसे यस्माद्यज्ञैर्विविधदक्षिणैः । त्वमेव कर्त्ता सर्वस्य तेन त्वं न निमन्त्रितः ॥ २८२ ॥ अथ वा मायया देव मोहितः सूक्ष्मया त्वया । एतस्मात् कारणाद्वापि तेन त्वं न निमन्त्रितः ॥ २८३ ॥ प्रसीद मम देवेश त्वमेव शरणं मम । त्वं गतिस्त्वं प्रतिष्ठा च न चान्यास्ति न मे गतिः ॥ २८४ ॥ स्तुत्वैवं स महादेवं विरराम प्रजापतिः । भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ २८५ ॥ परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत । बहुनात्र किमुक्तेन मत्समीपं गमिष्यसि ॥ २८६ ॥ अथैनमब्रवीद्वाक्यं त्रैलोक्याधिपतिर्भवः । कृत्वाश्वासकरं वाक्यं वाक्यज्ञो वाक्यमाहृतम् ॥ २८७ ॥ दक्ष दक्ष न कर्त्तव्यो मन्युर्विघ्नमिमं प्रति । अहं यज्ञहा न त्वन्यो दृश्यते तत्पुरा त्वया ॥ २८८ ॥ भूयश्च तं वरमिमं मत्तो गृह्णीष्व सुव्रत । प्रसन्नवदनो भूत्वा त्वमेकाग्रमनाः शृणु ॥ २८९ ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च । प्रजापते मत्प्रसादात् फलभागी भविष्यसि ॥ २९० ॥ वेदान् षडङ्गानुद्धृत्य साङ्ख्यान्योगांश्च कृत्स्नशः । तपश्च विपुलं तप्त्वा दुश्चरं देवदानवैः ॥ २९१ ॥ अर्थैर्दशार्द्धसंयुक्तैर्गूढमप्राज्ञनिर्म्मितम् । वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ॥ २९२ ॥ श्रुत्यर्थैरध्यवसितं पशुपाशविमोक्षणम् । सर्वेषामाश्रमाणान्तु मया पाशुपतं व्रतम् । उत्पादितं शुभं दक्ष सर्वपापविमोक्षणम् ॥ २९३ ॥ अस्य चीर्णस्य यत्सम्यक् फलं भवति पुष्कलम् । तदस्तु ते महाभाग मानसस्त्यज्यतां ज्वरः ॥ २९४ ॥ एवमुक्त्वा महादेवः सपत्नीकः सहानुगः । अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ॥ २९५ ॥ अवाप्य च तदा भागं यथोक्तं ब्रह्मणा भवः । ज्वरञ्च सर्वधर्मज्ञो बहुधा व्यभजत्तदा । शान्त्यर्थं सर्वभूतानां शृणुध्वं तत्र वै द्विजाः ॥ २९६ ॥ शीर्षा

अपथान् भावयन्तीह इन्द्रद्युम्नसरोऽपि च । तथा खरपथांश्चैव इन्द्रशङ्कुपथानपि ॥ ५४ ॥ मध्येनोद्यानमस्कारान् कुथप्रावरणान् ययौ । इन्द्रद्वीपसमुद्रे
तु प्रविष्टा लवणोदधिम् ॥ ५५ ॥ ततश्च नलिनी चागात् प्राचीमाशां जवेन तु । तोमरान् भावयन्तीह हंसमार्गान् सहूहुकान् ॥ ५६ ॥ पूर्वान्
देशांश्च सेवन्ती भित्त्वा सा बहुधा गिरीन् । कर्णप्रावरणांश्चैव प्राप्य चाश्वमुखानपि ॥ ५७ ॥ सिकतापर्वतमरून् गत्वा विद्याधरान् ययौ ।
नेमिमण्डलकोष्ठे तु प्रविष्टा सा महोदधिम् ॥ ५८ ॥ तासां नद्युपनद्यश्च शतशोऽथ सहस्रशः । उपगच्छन्ति ताः सर्वा यतो वर्षति वासवः ॥ ५९ ॥
वस्वोकसायास्तीरे तु वारिसुरभिविश्रुते । हरिशृङ्गे तु वसति विद्वान् कौबेरको वशी ॥ ६० ॥ यज्ञोपेतः स सुमहानमितौजाः सुविक्रमः । तत्रागस्त्यैः
परिवृतो विद्वद्भिर्ब्रह्मराक्षसैः । कुबेरानुचराः ह्येते चत्वारस्तत्समाः स्मृताः ॥ ६१ ॥ एवमेव तु विज्ञेया ऋद्धिः पर्वतवासिनाम् । परस्परेण द्विगुणा
धर्मतः कामतोऽर्थतः ॥ ६२ ॥ हेमकूटस्य पृष्ठे तु सायनं नाम तत्सरः । मनस्विनी प्रभवति तस्माज्ज्योतिष्मती च सा ॥ ६३ ॥ अवगाह्य ह्युभयतः
समुद्रौ पूर्वपश्चिमौ । सरो विष्णुपदं नाम निषधे पर्वतोत्तमे ॥ ६४ ॥ तस्माद्द्वयं प्रभवति गान्धर्वी नन्वली च या । मेरोः पश्चात् प्रभवति ह्रदश्चन्द्रप्र
भो महान् ॥ ६५॥ तत्र जाम्बूनदी पुण्या यस्यां जाम्बूनदं शुभम् । पयोदं तु सरो नीले सुशुभ्रं पुण्डरीकवत् ॥६६ ॥ पुण्डरीका पयोदा च तस्मान्नद्यौ
विनिर्गते । श्वेतात् प्रभवते पुण्यं सरस्तूत्तरमानसम् ॥६७॥ज्योत्स्ना च मृगकान्ता च तस्माद्वै संबभूवतुः।मधुमत्सरः पुण्यञ्च पद्ममीनद्विजाकुलम् ॥६८॥
कल्पवृक्षसमाकीर्णं मधुवत्सर्वतःसुखम् । रुद्रकान्तमिति ख्यातं निर्मितं तद्भवेन तु॥६९॥ अन्ये चाप्यत्र विख्याताः पद्ममीनद्विजाकुलाः । नाम्ना रुद्राजया
नाम द्वादशोदधिसन्निभाः ॥ ७० ॥ तेभ्यः शान्ता च माध्वी च द्वे नद्यौ सम्बभूवतुः । यानि किम्पुरुषाद्यानि तेषु देवो न वर्षति ॥७१॥ उद्भिद्यान्युदका
न्यत्र प्रवहन्ति सरिद्वराः । ऋषभो दुन्दुभिश्चैव धूम्रश्चैव महागिरिः ॥ ७२॥ पूर्वायता शुभगा निम्नगा लवणाम्भसि । चन्द्रकङ्कस्तथा प्राणो महानाग्निः
शिलोच्चयः । उदग्याता उदीच्यान्ता अवगाढा महोदधिम् ॥७३॥सोमकश्च वराहश्च नारदश्च महीधरः । प्रतीचीमायतास्ते वै प्रविष्टा लवणोदधिम् ॥७४॥
चक्रो बलाहकश्चैव मैनाकश्चैव पर्वतः । आयतास्ते महाशैलाः समुद्रं दक्षिणं प्रति । चन्द्रमैनाकयोर्मध्ये विदिशं दक्षिणां प्रति ॥ ७५ ॥ तत्र संवर्तको
नाम सोऽग्निः पिबति तज्जलम् । नाम्ना समुद्रपः श्रीमानौर्वः स वडवामुखः ॥ ७६ ॥ द्वादशैते प्रविष्टा हि पर्वता लवणोदधिम् । महेन्द्रभयवित्रस्ताः
पक्षच्छेदभयात्तदा । यदेतद्दृश्यते चन्द्रे श्वेते कृष्णशशाकृतिः ॥ ७७ ॥ भारतस्य तु वर्षस्य भेदास्ते नव कीर्तिताः । इहोदितस्य दृश्यन्ते तथा
न्येऽन्यत्र नोदिते ॥ ७८ ॥ उत्तरोत्तरमेतेषां वर्षमुद्दिश्यते गुणैः । आरोग्यायुःप्रमाणाभ्यां धर्मतः कामतोऽर्थतः ॥ ७९ ॥ समन्वितानि भूतानि गुणै

134

रेतैस्तु भागतः । वसन्ति नानाजातीनि तेषु वर्षेषु तानि वै । इत्येषाऽधारयत् सर्वं पृथ्वी विश्वं जगत्स्थिता ॥ ८० ॥ इति महापुराणे वायु प्रोक्ते भुवनविन्यासो नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ छ ॥ सूत उवाच ॥ दक्षिणेनापि वर्षस्य भारतस्य निबोधत । दशयोजनसाहस्रं सम तीत्य महार्णवम् ॥ १ ॥ त्रीण्येव तु सहस्राणि योजनानां समायतम् । अतस्त्रिभागविस्तीर्णं नानापुष्पफलोदयम् ॥ २ ॥ विद्युत्वन्तं महाशैलं तत्रैकं कुलपर्वतम् । येन कूटतटैर्नैकैस्तद्द्वीपं समलंकृतम् ॥ ३ ॥ प्रसन्नस्वादुसलिलास्तत्र नद्यः सहस्रशः । वाप्यस्तस्य तु द्वीपस्य प्रवृत्ता विमलोदकाः॥४॥ तस्य शैलस्य छिद्रेषु विस्तीर्णेष्वायतेषु च । अनेकेषु समृद्धानि नानाकाराणि सर्वशः ॥ ५ ॥ नरनारीसमाढ्यानि मुदितानि महान्ति च । तेषां तलप्रवेशानि सहस्राणि शतानि च ॥ ६ ॥ पुराणि सन्निविष्टानि पर्वतान्तर्गतानि च । सुसम्बद्धानि चान्योन्यमेकद्वाराणि चान्यथ ॥ ७ ॥ दीर्घश्मश्रुधरात्मानो नीला मेघसमप्रभाः । जातमात्राः प्रजास्तत्र अशीतिपरमायुषः ॥ ८ ॥ शाखामृगसधर्माणः फलमूलाशिनस्तथा । गोधर्माणो ह्यनिर्दिष्टाः शौचाचारविवर्जिताः ॥ ९ ॥ तद्द्वीपं तादृशैः पूर्णं मनुजैः क्षुद्रमानुषैः । एवमेतेऽन्तरद्वीपा व्याख्याता आनुपूर्वशः ॥ १० ॥ विंशत्त्रिंशच्च पञ्चाशत् षष्ट्यशीतिः शतं तथा । सहस्रमपि चाप्युक्तं योजनानां समन्ततः ॥ ११ ॥ विस्तीर्णाश्चायताश्चैव नानासत्त्वसमाकुलाः । बर्हिणद्वीपपर्वाणि क्षुद्रद्वीपाः सहस्रशः ॥ १२ ॥ जम्बूद्वीपप्रदेशात्तु षडन्ये विविधाश्रयाः । अत्र द्वीपाः समाख्याता नानारत्नाकराः क्षितौ ॥ १३ ॥ अङ्गद्वीपं यमद्वीपं मलयद्वीपमेव च । शङ्खद्वीपं कुशद्वीपं वराहद्वीपमेव च ॥ १४ ॥ अङ्गद्वीपं निबोध त्वं नानासङ्घसमाकुलम् । नानाम्लेच्छगणाकीर्णं तद्द्वीपं बहुविस्तरम् ॥ १५ ॥ हेमविद्रुमपूर्णानां रत्नानामाकरं क्षितौ । नदीशैलवनैश्चित्रं सन्निभं लवणाम्भसा ॥ १६ ॥ तत्र चक्रगिरिर्नाम नैक निर्झरकन्दरः । तत्र सा तु दरी चास्य नानासत्त्वसमाश्रया ॥ १७ ॥ स मध्ये नागदेशस्य नैकदेशो महागिरिः । कोटिभ्यां नागनिलयं प्राप्तो नदनदी पतिम् ॥ १८ ॥ यमद्वीपमिति प्रोक्तं नानारत्नाकराचितम् । तत्रापि द्युतिमान्नाम पर्वतो धातुमण्डितः । समुद्रगानां प्रभवः प्रभवः काञ्चनस्य तु ॥ १९ ॥ तथैव मलयद्वीपमेवमेव सुसंवृतम् । मणिरत्नाकरं स्फीतमाकरं कनकस्य च ॥ २० ॥ आकरं चन्दनानाञ्च समुद्राणां तथाकरम् । नानाम्लेच्छगणाकीर्णं नदीपर्वतमण्डितम् ॥ २१ ॥ तत्र श्रीमांस्तु मलयः पर्वतो रजताकरः । महामलय इत्येवं विख्यातो वरपर्वतः ॥ २२ ॥ द्वितीयं मन्दरं नाम प्रथितञ्च सदा क्षितौ । अगस्त्यभवनं तत्र देवासुरनमस्कृतम् ॥ २३ ॥ तथा काञ्चनपादस्य मलयस्यापरस्य हि । निकुञ्जैस्तृणसोमाङ्गैराश्रमं पुण्यसेवितम् ॥ २४ ॥ नानापुष्पफलोपेतं स्वर्गादपि विशिष्यते । तत्रावतरते स्वर्गः सदा पर्वसु पर्वसु ॥ २५ ॥

तथा त्रिकूटनिलये नानाधातुविभूषिते । अनेकयोजनोत्सेधे चित्रसानुदरीगृहे ॥ २६ ॥ तस्य कूटतटे रम्ये हेमप्राकारतोरणा । निर्यूहवलभीचित्रा
हर्म्यप्रासादमालिनी ॥ २७ ॥ शतयोजनविस्तीर्णा त्रिंशदायामयोजना । नित्यप्रमुदिता स्फीता लङ्का नाम महापुरी ॥ २८ ॥ सा कामरू
पिणां स्थानं राक्षसानां महात्मनाम् । आवासो बलदृप्तानां तद्विद्याद्देवविद्विषाम् । मानुषाणामसम्बाधा ह्यगम्या सा महापुरी ॥ २९ ॥
तस्य द्वीपस्य वै पूर्वे तीरे नदनदीपतेः । गोकर्णनामधेयस्य शङ्करस्यालयं महत् ॥ ३० ॥ तथैकराज्यं विज्ञेयं शङ्खद्वीपसमास्थितम् ।
शतयोजनविस्तीर्णं नानाम्लेच्छगणालयम् ॥ ३१ ॥ तत्र शङ्खगिरिर्नाम धौतशङ्खदलप्रभः । नानारत्नाकरः पुण्यः पुण्यकृद्भिर्निषेवितः ॥ ३२ ॥ शङ्ख
नागा महापुण्या यस्मात् प्रभवते नदी । यत्र शङ्खमुखो नाम नागराजः कृतालयः ॥ ३३ ॥ तथैव कुमुदद्वीपं नानापुण्योपशोभितम् । नानाग्रामसमा
कीर्णं नानारत्नाकरं शिवम् ॥ ३४ ॥ कुमुदाख्या महाभागा दुष्टचित्तनिबर्हणी । महादेवस्य भगिनी प्रभाभिस्ताभिरिज्यते ॥ ३५ ॥ तथा वराहद्वीपे च
नानाम्लेच्छगणाकुले । नानाजातिसमाकीर्णे नानाधिष्ठानपत्तने ॥ ३६ ॥ धनधान्ययुते स्फीते धर्म्मिष्ठजनसङ्कुले । नदीशैलवनैश्चित्रैर्बहुपुष्पफलोपगैः
॥ ३७ ॥ वराहपर्व्वतो नाम तत्र रम्यः शिलोच्चयः । अनेककन्दरदरीगुहानिर्झरशोभितः ॥ ३८ ॥ तस्मात्सुरसपानीया पुण्यतीर्थतरङ्गिणी । वाराही नाम
वरदा प्रवृत्तास्य महानदी ॥ ३९ ॥ वाराहरूपिणे तत्र विष्णवे प्रभविष्णवे । अनन्यदेवतास्तस्मै नमस्कुर्वन्ति विप्रजाः ॥ ४० ॥ एवं षडेते कथिता अनुद्वीपाः
समन्ततः । भारतद्वीपदेशो वै दक्षिणे बहुविस्तरः ॥ ४१ ॥ एवमेकमिदं वर्षं बहुद्वीपमिहोच्यते । समुद्रजलसम्भिन्नं खण्डं खण्डीकृतं स्मृतम् ॥ ४२ ॥ एवञ्च तु
महाद्वीपः सान्तरद्वीपमण्डितः । साजुद्वीपः समाख्यातो जम्बूद्वीपस्य विस्तरः ॥ ४३ ॥ इति महापुराणे वायुप्रोक्ते भुवनविन्यासो नामाष्टचत्वारिंशो
ध्यायः ॥ ४८ ॥ सूत उवाच ॥ प्लक्षद्वीपं प्रवक्ष्यामि यथावदिव सङ्ग्रहात् । शृणुतेमं यथातत्त्वं ब्रुवतो मे द्विजोत्तमाः ॥ १ ॥ जम्बूद्वीपस्य विस्ताराद्द्विगु
णस्तस्य विस्तरः । विस्तारात्त्रिगुणश्चास्य परिणाहः समन्ततः । तेनावृतः समुद्रोऽयं द्वीपेन लवणोदकः ॥ २ ॥ तत्र पुण्या जनपदाश्चिराच्च म्रियते प्रजा ।
कुत एव हि दुर्भिक्षं जराव्याधिभयं कुतः ॥ ३ ॥ तत्रापि पर्वताः शुभ्राः सप्तैव मणिभूषणाः । रत्नाकरास्तथा नद्यस्तासान्नामानि वच्मि भोः ॥ ४ ॥
प्लक्षद्वीपादिषु तेषु सप्त सप्तसु सप्तसु । ऋज्वायताः प्रतिदिशं निविष्टाः पर्वताः सदा ॥ ५ ॥ प्लक्षद्वीपे तु वक्ष्यामि सप्त द्वीपान्महाचलान् । गोमेद
कोऽत्र प्रथमः पर्वतो मेघसन्निभः । ख्यायते तस्य नाम्ना वै वर्षं गोमेदकन्तु तत् ॥ ६ ॥ द्वितीयः पर्वतश्चन्द्रः सर्वौषधिसमन्वितः । अश्विभ्याममृत
स्यार्थे ओषध्यस्तत्र संस्थिताः ॥ ७ ॥ तृतीयो नारदो नाम दुर्गशैलो महोच्छ्रयः । तत्राचले समुत्पन्नौ पूर्वं नारदपर्वतौ ॥ ८ ॥ चतुर्थस्तत्र वै शैलो

दुन्दुभिर्नाम नामतः । शब्दमृत्युः पुरा तस्मिन् दुन्दुभिस्ताडितः सुरैः । रज्जुदारो रज्जुमयः शाल्मलश्चासुरान्तकृत् ॥ ९ ॥ पञ्चमः सोमको नाम देवै
र्यत्रामृतं पुरा । सम्भृतञ्च हृतं चैव मातुरर्थे गरुत्मता ॥ १० ॥ षष्ठस्तु सुमना नाम स एवर्षभ उच्यते । हिरण्याक्षो वराहेण तस्मिन् शैले निषूदितः
॥ ११ ॥ वैभ्राजः सप्तमस्तत्र भ्राजिष्णुः स्फाटिको महान् । यस्माद्विभ्राजतेऽर्चिर्भिर्वैभ्राजस्तेन स स्मृतः ॥ १२ ॥ तेषां वर्षाणि वक्ष्यामि नामतस्तु
यथाक्रमम् । गोमेदं प्रथमं वर्षं नाम्ना शान्तभयं स्मृतम् ॥ १३ ॥ चन्द्रस्य शिखरं नाम नारदस्य सुखोदयम् । आनन्दं दुन्दुभेर्वर्षं सोमकस्य शिवं स्मृतम् ।
क्षेमकं ऋषभस्यापि वैभ्राजस्य ध्रुवं तथा ॥ १४ ॥ एतेषु देवगन्धर्वाः सिद्धाश्च सहचारणैः । विहरन्ति रमन्ते च दृश्यमानास्तु तैः सह ॥ १५ ॥ तेषां नद्यश्च
सप्तैव प्रतिवर्षं समुद्रगाः । नामतस्ताः प्रवक्ष्यामि सप्तगङ्गा महानदी ॥ १६ ॥ अभिगच्छन्ति ता नद्यस्ताभ्यश्चान्याः सहस्रशः । बहूदकाश्चौघवत्यो यतो
वर्षति वासवः ॥ १७ ॥ ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते । शुभाः शान्तवहाश्चैव प्रमोदा ये च ते शिवाः ॥ १८ ॥ आनन्दाश्च ध्रुवाश्चैव क्षेमकाश्च शिवैः
सह । वर्णाश्रमाचारयुक्ताः प्रजास्तेष्वथ सर्वशः ॥ १९ ॥ सर्वेष्वरोगाः सुबलाः प्रजास्त्वामयवर्जिताः । अवसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी न
च ॥ २० ॥ न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित् । त्रेतायुगसमः कालः सर्वदा तत्र वर्त्तते ॥ २१ ॥ प्लक्षद्वीपादिषु ज्ञेयः पञ्चस्वेतेषु सर्वशः ।
देशस्यानुविधानेन कालस्यानुविधाः स्मृताः ॥ २२ ॥ पञ्चवर्षसहस्राणि तेषु जीवन्ति मानवाः । सुरूपाश्च सुवेषाश्च अरोगा बलिनस्तथा ॥ २३ ॥
सुखमायुर्बलं रूपमारोग्यं धर्म एव च । प्लक्षद्वीपादिषु ज्ञेयं शाकद्वीपान्तकेषु च ॥ २४ ॥ प्लक्षद्वीपः पृथुः श्रीमान् सर्वतो धनधान्यवान् । दिव्यौषधि
फलोपेतः सर्वौषधिवनस्पतिः ॥ २५ ॥ आवृतः पशुभिः सर्वैर्ग्रामारण्यैः सहस्रशः । जम्बूवृक्षेण संख्यातस्तस्य मध्ये द्विजोत्तमाः । प्लक्षो नाम्ना महावृ
क्षस्तस्य नाम्ना स उच्यते ॥ २६ ॥ स तत्र पूज्यते स्थाणुर्मध्ये जनपदस्य हि । स चापीक्षुरसोदेशः प्लक्षद्वीपसमावृतः । प्लक्षद्वीपस्य चैवेह वैपुल्याद्विस्तरेण
तु ॥ २७ ॥ इत्येष सन्निवेशो वः प्लक्षद्वीपस्य कीर्तितः । आनुपूर्व्या समासेन शाल्मलन्तन्निबोधत ॥ २८ ॥ ततस्तृतीयं द्वीपानां शाल्मलं द्वीपमुत्तमम् ।
शाल्मलेन समुद्रस्तु द्वीपेनेक्षुरसोदकः । प्लक्षद्वीपस्य विस्ताराद्द्विगुणेन समावृतः ॥ २९ ॥ तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः । रत्नाकरास्तथा
नद्यस्तेषु वर्षेषु सप्तसु ॥ ३० ॥ प्रथमः सूर्यसङ्काशः कुमुदो नाम पर्वतः । सर्वधातुमयैः शृङ्गैः शिलाजालसमुद्गतैः ॥ ३१ ॥ द्वितीयः पर्वतस्तस्य उन्नतो
नाम विश्रुतः । हारितालमयैः शृङ्गैर्दिवमावृत्य तिष्ठति ॥ ३२ ॥ तृतीयः पर्वतस्तस्य बलाहक इति श्रुतः । जात्यञ्जनमयैः शृङ्गैर्दिवमावृत्य तिष्ठति ॥ ३३ ॥
चतुर्थः पर्वतो द्रोणो यत्रौषध्यो महाबलाः । विशल्यकरणी चैव मृतसञ्जीवनी तथा ॥ ३४ ॥ कङ्कस्तु पञ्चमस्तत्र पर्वतः सुमहोदयः । दिव्यपुष्पफलो

पेतो वृक्षवीरुत्समावृतः ॥ ३५ ॥ षष्ठस्तु पर्वतस्तत्र महिषो मेघसन्निभः । यस्मिन् सोऽग्निर्निवसति महिषो नाम वारिजः ॥ ३६ ॥ सप्तमः पर्वतस्तत्र ककुद्मान्नाम भाष्यते । तत्र रत्नान्यनेकानि स्वयं वर्षति वासवः । प्रजापतिमुपादाय प्राजापत्ये विधिस्त्वयम् ॥ ३७॥ इत्येते पर्वताः सप्त शाल्मले मणिभूषिताः । तेषां वर्षाणि वक्ष्यामि सप्तैव तु शुभानि वै । कुमुदात् प्रथमं श्वेतमुन्नतस्य तु लोहितम् ॥ ३८ ॥ बलाहकस्य जीमूतं द्रोणस्य हरितं स्मृतम् । कङ्कस्य वैद्युतं नाम महिषस्य तु मानसम् ॥ ३९॥ ककुदः सुप्रभं नाम सप्तैतानि तु सप्तधा । वर्षाणि पर्वतांश्चैव नदीस्तेषु निबोधत ॥ ४० ॥ पानितोया वितृष्णा च चन्द्रा शुक्रा विमोचनी । निवृत्तिः सप्तमी तासां प्रतिवर्षं तु ताः स्मृताः ॥ ४१ ॥ तासां समीपगाश्चान्याः शतशोऽथ सहस्रशः । अशक्याः परिसंख्यातुं श्रद्धेयास्तु बुभूषता ॥ ४२ ॥ इत्येष सन्निवेशो वः शाल्मलस्यापि कीर्तितः । प्लक्षवृक्षेण संख्यातस्तस्य मध्ये महाद्रुमः ॥ ४३ ॥ शाल्मलिर्विपुलस्कन्धस्तस्य नाम्ना स उच्यते । शाल्मलिस्तु समुद्रेण सुरोदेन समन्ततः । विस्ताराच्छाल्मलस्यैव समेन तु समन्ततः ॥ ४४ ॥ उत्तरेषु तु धर्मज्ञा द्वीपेषु शृणुत प्रजाः । यथाश्रुतं यथान्यायं ब्रुवतो मे निबोधत ॥ ४५ ॥ कुशद्वीपं प्रवक्ष्यामि चतुर्थं तं समासतः । सुरोदकः परिवृतः कुशद्वीपेन सर्वतः ॥४६॥ सप्तैव गिरयस्तत्र वर्ण्यमानान्निबोधत । शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः ॥४७॥ कुशद्वीपे तु विज्ञेयः पर्वतो विद्रुमोच्चयः । द्वीपस्य प्रथमस्तस्य द्वितीयो हेमपर्वतः ॥४८॥ तृतीयो द्युतिमान्नाम जीमूतसदृशो गिरिः । चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः ॥ ४९ ॥ षष्ठो हरिगिरिर्नाम सप्तमो मन्दरः स्मृतः । मन्दा इति ह्यपां नाम मन्दरो दारणादपाम् ॥ ५० ॥ तेषामन्तरविष्कम्भो द्विगुणः परिवारितः । उद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम् ॥ ५१ ॥ तृतीयं स्वैरथाकारं चतुर्थं लवणं स्मृतम् । पञ्चमं धृतिमद्वर्षं षष्ठं वर्षं प्रभाकरम् । सप्तमं कपिलं नाम सप्तैते वर्षपर्वताः ॥ ५२ ॥ एतेषु देवगन्धर्वाः प्रभास्तु जगदीश्वराः । विहरन्ति रमन्ते च दृश्यमानास्तु वर्षशः ॥ ५३ ॥ न तेषु दस्यवः सन्ति म्लेच्छजातयस्तथैव च । गौरप्रायो जनः सर्वः क्रमाच्च म्रियते तथा ॥५४॥ तत्रापि नद्यः सप्तैव धुतपापाः शिवास्तथा । पवित्रा सन्ततिश्चैव द्युतिगर्भा मही तथा ॥ ५५ ॥ अन्यास्ताभ्यः परिज्ञाताः शतशोऽथ सहस्रशः । अभिगच्छन्ति ताः सर्वा यतो वर्षति वासवः ॥ ५६ ॥ घृतोदेन कुशद्वीपो बाह्यतः परिवारितः । विज्ञेयः स तु विस्तारात् कुशद्वीपसमेन तु ॥ ५७ ॥ इत्येष सन्निवेशो वः कुशद्वीपस्य वर्णितः । क्रौञ्चद्वीपस्य विस्तारं वक्ष्याम्यहमतः परम् ॥ ५८ ॥ कुशद्वीपस्य विस्ताराद्द्विगुणः स तु वै स्मृतः । घृतोदकसमुद्रो वै क्रौञ्चद्वीपेन संवृतः ॥ ५९ ॥ तस्मिन् द्वीपे नगश्रेष्ठः क्रौञ्चस्थः प्रथमो गिरिः । क्रौञ्चात्परो वामनको वामनादन्धकारकः ॥ ६० ॥ अन्धकारात्परश्चापि दिवावृन्नाम पर्वतः । दिवावृतः परश्चापि दिविन्दो गिरिरुच्यते ॥ ६१ ॥ दिविन्दात्परत

पि पुण्डरीको महागिरिः । पुण्डरीकात्परश्चापि प्रोच्यते दुन्दुभिस्वनः ॥ ६२ ॥ एते रत्नमयाः सप्त क्रौञ्चद्वीपस्य पर्वताः । बहुवृक्षफ
॥ नानावृक्षलतावृताः ॥ ६३ ॥ परस्परेण द्विगुणा विष्कम्भाद्वर्षपर्वताः । वर्षाणि तत्र वक्ष्यामि नामतस्तु निबोधत ॥ ६४ ॥ क्रौञ्चस्य कुश
ो वामनस्य मनोनुगः । मनोनुगात्परश्चोष्णस्तृतीयो देश उच्यते ॥ ६५ ॥ उष्णात्परः प्रावरकः प्रावरादन्धकारकः । अन्धकारकदेशात्तु मुनिदे
ः स्मृतः ॥ ६६ ॥ मुनिदेशात्परश्चैव प्रोच्यते दुन्दुभिस्वनः । सिद्धचारणसङ्कीर्णो गौरप्रायो जनः स्मृतः ॥ ६७ ॥ तत्रापि नद्यः सप्तैव
। स्मृताः शुभाः । गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा । ख्यातिश्च पुण्डरीका च गङ्गा सप्तविधा स्मृता ॥ ६८ ॥ तासां समुद्रगाश्चा
ो यास्तु समीपगाः । अनुगच्छन्ति ताः सर्वा विपुलाः सुबहूदकाः ॥ ६९ ॥ क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन तु । आवृतः सर्वतः श्रीम
ञ्चद्वीपसमेन तु ॥ ७० ॥ प्लक्षद्वीपादयो ह्येते समासेन प्रकीर्त्तिताः । तेषां निसर्गो द्वीपानामानुपूर्व्येण सर्वशः ॥ ७१ ॥ न शक्यं विस्तरा
पे वर्षशतैरपि । निसर्गोऽयं प्रजानां तु संहारो यश्च तासु वै ॥ ७२ ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि शाकद्वीपस्य यो विधिः । शाकद्वीपस्य कृत्स्न
ावदिह निश्चयात् । शृणुध्वं वै यथातत्त्वं ब्रुवतो मे यथार्थवत् ॥ ७३ ॥ क्रौञ्चद्वीपस्य विस्ताराद्विगुणस्तस्य विस्तरः । परिवार्य समुद्रं
धिमण्डोदकं स्थितः ॥ ७४ ॥ तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः । कुत एव तु दुर्भिक्षजराव्याधिभयं कुतः ॥ ७५ ॥ तत्रापि पर्वताः शु
ैव मणिभूषिताः । रत्नाकरास्तथा नद्यस्तासां नामानि मे शृणु ॥ ७६ ॥ देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते । प्रागायतः स सौवर्ण उदयो न
तिः ॥ ७७ ॥ तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्ति च यान्ति च । तस्यापरेण सुमहान् जलधारो महागिरिः ॥ ७८ ॥ तस्मान्नित्यमुपादत्ते वास
में जलम् । ततो वर्षं प्रभवति वर्षाकाले प्रजास्विह ॥ ७९ ॥ तस्यापरे रैवतको यत्र नित्यं प्रतिष्ठिता । रेवती दिवि नक्षत्रं पितामहकृतो गि
८० ॥ तस्यापरेण सुमहान् श्यामो नाम महागिरिः । तस्माच्छ्यामत्वमापन्नाः प्रजाः पूर्वमिमाः किल ॥ ८१ ॥ तस्यापरेण रजतो महानर
रिः स्मृतः । तस्यापरेणाम्बिकेयो दुर्गः शैलो हिमाचितः ॥ ८२ ॥ आम्बिकेयात्परो रम्यः सर्वौषधिसमन्वितः । स चैव केशरीत्युक्तो यतो वा
ायति ॥ ८३ ॥ शृणुध्वं नामतस्तानि यथावदनुपूर्वशः । उदयस्योदयं वर्षं जलदं नाम विश्रुतम् ॥ ८४ ॥ द्वितीयं जलधारस्य सुकुमारमि
ुतम् । रैवतस्य तु कौमारं श्यामस्य तु मणीचकम् ॥ ८५ ॥ अस्तस्यापि शुभं वर्षं विज्ञेयं कुसुमोत्तरम् । आम्बिकेयस्य मोदाकं केसरेषु मह
म् ॥ ८६ ॥ द्वीपस्य परिमाणञ्च ह्रस्वदीर्घत्वमेव च । शाकद्वीपेन विख्यातस्तस्य मध्ये वनस्पतिः । शाको नाम महावृक्षस्तस्य पूजा

ञते ॥ ८७ ॥ एतेन देवगन्धर्वाः सिद्धाश्च सह चारणैः । विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह ॥ ८८ ॥ तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः । तेषु नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः । विद्धि नाम्नश्च ताः सर्वा गङ्गास्ताः सप्तधा स्मृताः ॥ ८९ ॥ प्रथमा सुकुमारीति गङ्गा शिवजला तथा । अनुतप्ता च नाम्नैव नदी सम्परिकीर्त्तिता ॥ ९० ॥ कुमारी नामतः सिद्धा द्वितीया सा पुनः सती । नन्दा च पार्वती चैव तृतीया परिकीर्त्तिता ॥ ९१ ॥ शिवेतिका चतुर्थी स्यात् त्रिदिवा च पुनः स्मृता । इक्षुश्च पञ्चमी ज्ञेया तथैव च पुनः ऋतुः ॥ ९२ ॥ धेनुका च स्मृता चैव षष्ठी संपरिकीर्त्तिता । एताः सप्त महागङ्गाः प्रतिवर्षं शिवोदकाः । भावयन्ति जनं सर्वं शाकद्वीपनिवासिनम् ॥ ९३ ॥ अनुगच्छन्ति तास्त्वन्या नदीर्नद्यः सहस्रशः । बहूदकपरिस्रावा यतो वर्षति वासवः ॥९४॥ तासान्तु नामधेयानि परिमाणं तथैव च । न शक्यं परिसंख्यातुं पुण्यास्ताः सरिदुत्तमाः । ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ॥ ९५ ॥ शंशपायन विस्तीर्णो द्वीपोऽसौ चक्रसंस्थितः । नदीजलैः प्रतिच्छन्नः पर्वतैश्चाभ्रसन्निभैः ॥ ९६ ॥ सर्वधातुविचित्रैश्च मणिविद्रुमभूषितैः । पुरैश्च विविधाकारैः स्फीतैर्जनपदैरपि ॥ ९७ ॥ वृक्षैः पुष्पफलोपेतैः समन्ताद्धनधान्यवान् । क्षीरोदेन समुद्रेण सर्वतः परिवारितः । शाकद्वीपस्तु विस्तारात् समेन तु समन्ततः ॥ ९८ ॥ तस्मिन् जनपदाः पुण्याः पर्वतान्तरिते शुभाः । वर्णाश्रमसमाकीर्णा देशास्ते सप्त वै स्मृताः ॥ ९९ ॥ न सङ्करश्च तेष्वास्ति वर्णाश्रमकृतः क्वचित् । धर्मस्य चाव्यभीचारादेकान्तसुखिताः प्रजाः ॥ १०० ॥ न तेषु लोभो माया वा ईर्ष्या सूयाऽधृतिः कुतः । विपर्ययो न तेष्वस्ति एतत् स्वाभाविकं स्मृतम् ॥ १०१ ॥ करोत्पत्तिर्न तेष्वस्ति न दण्डो न च दण्डकाः । स्वधर्मेणैव धर्मज्ञास्ते रक्षन्ति परस्परम् ॥ १०२ ॥ एतावदेव शक्यं वै तस्मिन् द्वीपे निवासिनाम् । पुष्करं सप्तमं द्वीपं प्रवक्ष्यामि निबोधत ॥ १०३ ॥ पुष्करेण तु द्वीपेन वृतः क्षीरोदको बहिः । शाकद्वीपस्य विस्तारादद्विगुणेन समन्ततः ॥ १०४ ॥ पुष्करे पर्वतः श्रीमान् एक एव महाशिलः । चित्रैर्मणिमयैः शैलैः शिखरैस्तु समुच्छ्रितैः ॥ १०५ ॥ द्वीपस्य तस्य पूर्वार्द्धे चित्रसानुः स्थितो महान् । परिमण्डलसहस्राणि विस्तीर्णः पञ्चविंशतिः ॥ १०६ ॥ ऊर्द्ध्वञ्चैव चतुस्त्रिंशत्सहस्राणि समाचितः । द्वीपार्द्धस्य परिस्तोमः पर्वतो मानसोत्तमः ॥ १०७ ॥ स्थितो वेलासमीपे तु नवचन्द्र इवोदितः । योजनानां सहस्राणि ऊर्द्ध्वं पञ्चाशदुच्छ्रितः ॥ १०८ ॥ तावदेव स विस्तीर्णः सर्वतः परिमण्डलः । स एवं द्वीपपश्चार्द्धे मानसः पृथिवीधरः ॥ १०९ ॥ एक एव महासानुः सन्निवेशादद्विधा कृतः । स्वादूदकेनोदधिना सर्वतः परिवारितः ॥ ११० ॥ पुष्करद्वीपविस्ताराद्विस्तीर्णोऽसौ समन्ततः । तस्मिन् द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ । अभितो मानसस्याथ पर्वतस्यानुमण्डलौ ॥ १११ ॥ महावीतन्तु यद्वर्षं बाह्यतो मानसस्य तत् ।

यैवाभ्यन्तरे यत्तु धातकीखण्डमुच्यते ॥ ११२ ॥ दशवर्षसहस्राणि तत्र जीवन्ति मानवाः । आरोग्यसुखभूयिष्ठा मानसीं सिद्धिमास्थिताः ॥ ११३ ॥
मायुश्च रूपञ्च तस्मिन् वर्षद्वये स्थितम् । अधमोत्तमौ न तेष्वास्तां तुल्यास्ते रूपशीलतः ॥ ११४ ॥ न तत्र वञ्चको नेर्ष्या न स्तेना न भयं
म। निग्रहो न च दण्डोऽस्ति न लोभो न परिग्रहः ॥११५॥ सत्यानृतं न तत्रास्ति धर्माधर्मौ तथैव च । वर्णाश्रमाणां वार्त्ता वा पाशुपाल्यं वणिक्क्रिया
११६ ॥ त्रयी विद्या दण्डनीतिः शुश्रूषा शल्यमेव च । वर्षद्वये सर्वमेतत् पुष्करस्य न विद्यते ॥ ११७ ॥ न तत्र नद्यो वर्षञ्च शीतोष्णं वा न वि
। उद्भिज्जान्युदकान्यत्र गिरिप्रस्रवणानि च ॥ ११८ ॥ उत्तराणां कुरूणाञ्च तुल्यकालो जनः सदा। सर्वत्र सुसुखस्तत्र जराक्लमविवर्जितः ॥ ११९ ॥
येष धातकीखण्डो महावीते तथैव च । आनुपूर्व्याद्विधिः कृत्स्नः पुष्करस्य प्रकीर्त्तितः ॥१२०॥ स्वादूदकेनोदधिना पुष्करः परिवारितः। विस्तरान्म
लाच्चैव पुष्करस्य तथैव च ॥ १२१ ॥ एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः। द्वीपस्यानन्तरो यस्तु समुद्रस्तु समन्ततः॥१२२॥एवं द्वीपसमुद्राणां
द्धिर्ज्ञेया परस्परात् । अपाञ्चैव समुद्रेकात् समुद्रा इति संज्ञिताः ॥ १२३ ॥ ऋषयो निवसन्त्यस्मिन् प्रजा यस्माच्चतुर्विधाः । तस्माद्वर्षमिति प्रोक्तं
ानां सुखदन्तु तत् ॥ १२४ ॥ ऋष इत्येव ऋषयः वृषः शक्तिप्रबन्धने । इति प्रबन्धनात् सिद्धं वर्षत्वं तेन तेषु तत् ॥ १२५ ॥ शुक्लपक्षे चन्द्रवृद्धौ
ुद्रः पूर्यते तदा प्रक्षीयमाणे बहुले क्षीयतेऽस्तमिते खगे ॥ १२६ ॥ आपूर्यमाणे उदधिः स्वत एवाभिपूर्यते । ततोऽपक्षीयमाणेऽपि स्वात्मनैवा
ृष्यते ॥ १२७ ॥ उखास्थमग्निसंयोगात् जलमुद्रिच्यते यथा । तथा महोदधिगतं तोयमुद्रिच्यते ततः ॥ १२८ ॥ अन्यूना ह्यतिरिक्ताश्च वर्द्ध
ापो ह्रसन्ति च । उदयास्तमितैश्चेन्दोः पक्षयोः शुक्लकृष्णयोः । क्षयवृद्धिरेवमुदधेः सोमवृद्धिक्षयात्पुनः ॥ १२९ ॥ दशोत्तराणि पञ्चैव अङ्गुलीनां
ानि तु। अपां वृद्धिः क्षयो दृष्टः समुद्राणान्तु पर्वसु ॥ १३० ॥ द्विरापत्वात् स्मृता द्वीपाः सर्वतश्चोदकावृताः । उदकस्याधानं यस्माच्च
स्मादुदधिरुच्यते ॥ १३१ ॥ अपर्वाणस्तु गिरयः पर्वभिः पर्वताः स्मृताः । प्लक्षद्वीपे तु गोमेदः पर्वतस्तेन चोच्यते ॥ १३२ ॥ शाल्मलिः शाल्म
द्वीपे पूज्यते च महाद्रुमाः । कुशद्वीपे कुशस्तम्बस्तस्य नाम्ना स उच्यते ॥ १३३ ॥ क्रौञ्चद्वीपे गिरिः क्रौञ्चो मध्ये जनपदस्य ह । शाकद्वीपे द्रुमः
कस्तस्य नाम्ना स उच्यते ॥१३४॥ न्यग्रोधः पुष्करद्वीपे तत्र तैः स नमस्कृतः। महादेवः पुष्करे तु ब्रह्मा त्रिभुवनेश्वरः ॥ १३५ ॥ तस्मिन्निवसति
ा साध्यैः सार्द्धं प्रजापतिः । उपासते तत्र देवास्त्रयस्त्रिंशन्महर्षिभिः। स तत्र पूज्यते चैव देवैर्देवोत्तमोत्तमः ॥ १३६ ॥ जम्बूद्वीपात्प्रवर्त्तन्ते रत्नानि
विधानि च । द्वीपेषु तेषु सर्वेषु प्रजानां हि क्रमास्त्विह ॥ १३७ ॥ सर्वशो ब्रह्मचर्येण सत्येन च दमेन च। आरोग्यायुःप्रमाणाद्धि द्विगुणश्च

समन्ततः ॥ १३८ ॥ एतास्मिन् पुष्करद्वीपे यदुक्तं वर्षकद्वयम् । गोपायाति प्रजास्तत्र स्वयं सज्जनमण्डिताः ॥ १३९ ॥ ईश्वरो दण्डमुद्यम्य ब्रह्मा त्रिभुवनेश्वरः । सविष्णुः सशिवो देवः सपिता सपितामहः ॥ १४० ॥ भोजनश्चाप्रयत्नेन तत्र स्वयमुपस्थितम् । षड्रसं सुमहावीर्यं भुञ्जते च प्रजाः सदा ॥ १४१ ॥ परेण पुष्करस्याथ आवृत्या यः स्थितो महान् । स्वादूदकः समुद्रस्तु समन्तात्परिवेष्टितः ॥ १४२ ॥ परेण तस्य महती दृश्यते लोकसंस्थितिः । काञ्चनी द्विगुणा भूमिः सर्वा चैकशिलोपमा ॥ १४३ ॥ तस्मात्परेण शैलस्तु मर्यादान्ते तु मण्डलम् । प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥१४४॥ आलोकस्तस्य चार्वाक्तु निरालोकस्ततः परम् । योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः॥१४५॥तावांश्च विस्तरस्तस्य पृथिव्यां कामगश्च सः । आलोके लोकशब्दस्तु निरालोके सलोकता । लोकार्थं सम्मतो लोको निरालोकस्तु बाह्यतः ॥ १४६ ॥ लोकविस्तारमात्रन्तु आलोकः सर्वतो बहिः । परिच्छिन्नः समन्ताच उदकेनावृतश्च सः । निरालोकात्परश्चापि अण्डमावृत्य तिष्ठति ॥ १४७ ॥ अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी । भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा ॥ १४८॥ जनस्तपस्तथा सत्य एतावान् लोकसङ्ग्रहः । एतावानेव विज्ञेयो लोकान्तश्चैव तत्परः ॥ १४९ ॥ कुम्भस्थायी भवेद्यादृक् प्रतच्यान्दिशि चन्द्रमाः । आदितः शुक्लपक्षस्य वपुरण्डस्य तद्विधम् ॥ १५० ॥ अण्डानामीदृशानान्तु कोट्यो ज्ञेयाः सहस्रशः । तिर्यगूर्ध्वमधस्ताच कारणस्याव्ययात्मनः । कारणैः प्राकृतैस्तत्र ह्यावृतं प्रतिसप्तभिः॥१५१॥दशाधिक्येन चान्योन्यं धारयन्ति परस्परम् । परस्परावृताः सर्वे उत्पन्नाश्च परस्परात् ॥ १५२ ॥ अण्डस्यास्य समन्तात्तु सन्निविष्टो घनोदधिः। समन्ताद्येन तोयेन धार्यमाणः स तिष्ठति ॥ १५३ ॥ बाह्यतो घनतोयस्य तिर्यगूर्द्ध्वन्तुमण्डलम् । धार्यमाणं समन्तात्तु तिष्ठते घनतेजसा॥ १५४ ॥ अयोगुडनिभो वह्निः समन्तान्मण्डलाकृतिः । समन्ताद्धनवातेन धार्यमाणः स तिष्ठति । घनवातस्तथाकाशन्धारयाणस्तु तिष्ठति ॥ १५५ ॥ भूतादिश्च तथाकाशं भूताद्यश्चाप्यसौ महान् । महान् व्याप्तो ह्यनन्तेन अव्यक्तेन तु धार्यते॥ १५६ ॥अनन्तमपरिव्यक्तन्दशधा सूक्ष्म एव च । अनन्तमकृतात्मानमनादिनिधनञ्च तत् ॥१५७॥ अतीत्य परतो घोरमनालम्बमनामयम् । नैकयोजनसाहस्रं विप्रकृष्टं तमोवृतम् ॥ १५८ ॥ तम एव निरालोकममर्यादमदेशिकम् । देवानामप्यविदितं व्यवहारविवर्जितम् ॥ १५९ ॥ तमसोऽन्ते च विख्यातमाकाशान्ते च भास्वरम् । मर्यादायामतस्तस्य शिवस्यायतनं महत् ॥ १६० ॥ त्रिदशानामगम्यन्तु स्थानं दिव्यमिति श्रुतिः । महतो देवदेवस्य मर्यादायां व्यवस्थितम् ॥१६१॥ चन्द्रादित्यावतपास्तु ये लोकाः प्रथिता बुधैः । ते लोका इत्यभिहिता जगतश्च न संशयः॥१६२॥रसातलतलात् सप्त सप्तैवोर्द्ध्वतलाः क्षितौ॥सप्तस्कन्धास्तथा वायोः सब्रह्मसदना द्विजाः॥१६३॥आपातालाद्दिवं यावदत्र पञ्चविधा गतिः ।

प्रमाणमेतज्जगत एष संसारसागरः ॥ १६४ ॥ अनाद्यन्ता प्रयात्येवं नैकजातिसमुद्भवाः । विचित्रा जगतः सा वै प्रवृत्तिरनवस्थिता ॥ १६५ ॥ यथैत
द्भौतिकं नाम निसर्गबहुविस्तरम् । अतीन्द्रियैर्महाभागैः सिद्धैरपि न लक्ष्यते ॥ १६६ ॥ पृथिव्यापश्चाग्निवायूनां महतस्तमसस्तथा । ईश्वरस्य
तु देवस्य अनन्तस्य द्विजोत्तमाः ॥ १६७ ॥ क्षयो वा परिमाणं वा अन्तो वापि न विद्यते । अनन्त एष सर्वत्र सर्वस्थानेषु पठ्यते । तस्य
चोक्तं मया पूर्वं तस्मिन्नामानुकीर्तने ॥ १६८ ॥ य एष शिवनाम्ना हि तद्वः कात्स्न्येन कीर्तितम् । स एष सर्वत्र गतः सर्वस्थानेषु पूज्यते
॥ १६९ ॥ भूमौ रसातले चैव आकाशे पवनेऽनले । अर्णवेषु च सर्वेषु दिवि चैव न संशयः ॥ १७० ॥ तथा तपसि विज्ञेय एष एव महाद्युतिः ।
अनेकधा विभक्ताङ्गो महायोगी महेश्वरः । सर्वलोकेषु लोकेश इज्यते बहुधा प्रभुः ॥ १७१ ॥ एवं परस्परोत्पन्ना धार्यन्ते च परस्परान् ।
आधाराधेयभावेन विकारास्ते विकारिणः ॥ १७२ ॥ पृथ्व्यादयो विकारास्ते परिच्छिन्नाः परस्परम् । परस्पराधिकाश्चैव प्रविष्टाश्च परस्परम् ॥ १७३ ॥
यस्माद्विष्टाश्च तेऽन्योन्यं तस्मात् स्थैर्यमुपागताः । प्रागासन् ह्यविशेषास्तु विशेषान्योन्यवेशनात् । पृथिव्याद्याश्च वाय्वन्ताः परिच्छिन्नास्त्रयस्तु
ते ॥ १७४ ॥ गुणापचयसारेण परिच्छेदो विशेषतः । शेषाणां तु परिच्छेदः सौक्ष्म्यान्नेह विभाव्यते ॥ १७५ ॥ भूतेभ्यः परतस्तेभ्यो ह्यालोकः
परतः स्मृतः । भूतान्यालोक आकाशे परिच्छिन्नानि सर्वशः ॥ १७६ ॥ पात्रे महति पात्राणि यथैवान्तर्गतानि तु । भवन्त्यन्योन्यहीनानि परस्परसमाश्र
यात् । तथा ह्यालोक आकाशे भेदास्त्वन्तर्गता मताः ॥ १७७ ॥ कृत्स्नान्येतानि चत्वारि अन्योन्यस्याधिकानि तु । यावदेतानि भूतानि तावदुत्पत्ति
रुच्यते ॥ १७८ ॥ जन्तूनामिह संस्कारो भूतेष्वन्तर्गतो मताः । प्रत्याख्याय च भूतानि कार्योत्पत्तिर्न विद्यते ॥ १७९ ॥ तस्मात्परिमिता भेदाः
स्मृताः कार्यात्मकास्तु ते । कारणात्मकास्तथैव स्युर्भेदा ये महदादयः ॥ १८० ॥ इत्येष सन्निवेशो वो मया प्रोक्तो विभागशः । सप्तद्वीपसमुद्राया
याथातथ्येन वै द्विजाः ॥ १८१ ॥ विस्तारान्मण्डलाच्चैव प्रसंख्यातेन चैव हि । वैश्वरूपं प्रधानस्य परिमाणैकदेशिकम् ॥ १८२ ॥ अधिष्ठानं भगवतो
यस्य सर्वमिदं जगत् । एवं भूतगणाः सप्त सन्निविष्टाः परस्परम् ॥ १८३ ॥ एतावान् सन्निवेशस्तु मया शक्यः प्रभाषितुम् । एतावदेव श्रोतव्यं
सन्निवेशे तु पार्थिव ॥ १८४ ॥ सप्त प्रकृतयस्त्वेता धारयन्ति परस्परम् । तास्वल्पपरिमाणेन प्रसङ्ख्यातुमिहोच्यते । असङ्ख्येयाः प्रकृतयस्तिर्य
गूर्द्ध्वमधश्च याः ॥ १८५ ॥ तारकासन्निवेशश्च यावद्दिव्यं तु मण्डलम् । मर्यादासन्निवेशस्तु भूमेस्तदनुमण्डलम् । अतः परं प्रवक्ष्यामि पृथिव्यां वै
द्विजोत्तमाः ॥ १८६ ॥ इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामैकोनपञ्चाशोऽध्यायः ॥ ४९ ॥ ७ ॥ सूत उवाच ॥ अधःप्रमाण

मूद्देश्च वर्ण्यमानं निबोधत । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् । अनन्तधातवो ह्येते व्यापकास्तु प्रकीर्तिताः ॥ १ ॥ जननी सर्वभूतानां स
भूतधरा धरा । नानाजनपदाकीर्णा नानाधिष्ठानपत्तना ॥ २ ॥ नानानदनदीशैला नैकजातिसमाकुला । अनन्ता गीयते देवी पृथिवी बहुविस्तर
॥ ३ ॥ नदीनदसमुद्रस्थास्तथा क्षुद्राश्रयाः स्थिताः । पर्वताकाशसंस्थाश्च अन्तर्भूमिगताश्च याः ॥ ४ ॥ आपोऽनन्ताश्च विज्ञेयास्तथाग्निः सर्वलौकिकः
अनन्तः पठ्यते चैव व्यापकः सर्वसम्भवः ॥ ५ ॥ तथाकाशमनालम्बं रम्यं नानाश्रयं स्मृतम् । अनन्तं प्रथितं सर्वं वायुश्चाकाशसम्भवः ॥ ६ ॥ आप
पृथिव्यामुदके पृथिवी चोपरि स्थिता । आकाशञ्चापरमधः पुनर्भूमिः पुनर्ज्जलम् ॥ ७ ॥ एवमन्तमनन्तस्य भौतिकस्य न विद्यते । पुरा सुरैरभिहि
निश्चितन्तु निबोधत ॥ ८ ॥ भूमिर्जलमथाकाशमिति ज्ञेया परम्परा । स्थितिरेषा तु विज्ञेया सप्तमेऽस्मिन् रसातले ॥ ९ ॥ दशयोजनसाहस्रमेकभौ
रसातलम् । साधुभिः परिविख्यातमेकैकं बहुविस्तरम् ॥ १० ॥ प्रथममतलञ्चैव सुतलन्तु ततः परम् । ततः परतरं विद्यादितलं बहुविस्तर
। ११ ॥ ततो गभस्तलं नाम परतश्च महातलम् । श्रीतलञ्च ततः प्राहुः पातालं सप्तमं स्मृतम् ॥ १२ ॥ कृष्णभौमञ्च प्रथमं भूमिभागञ्च कीर्त्तितम्
ाण्डुभौमं द्वितीयन्तु तृतीयं रक्तमृत्तिकम् ॥ १३ ॥ पीतभौमञ्चतुर्थन्तु पञ्चमं शर्करातलम् । षष्ठं शिलामयञ्चैव सौवर्णं सप्तमन्तलम् ॥ १४ ॥ प्रथ
तले ख्यातमसुरेन्द्रस्य मन्दिरम् । नमुचेरिन्द्रशत्रोर्हि महानादस्य चालयम् ॥ १५ ॥ पुरञ्च शङ्कुकर्णस्य कबन्धस्य च मन्दिरम् । निष्कुलादस्य
ुरं प्रहृष्टजनसङ्कुलम् ॥ १६ ॥ राक्षसस्य च भीमस्य शूलदन्तस्य चालयम् । लोहिताक्षकलिङ्गानां नगरं श्वापदस्य तु ॥ १७ ॥ धनञ्जयस्य च पु
ाहेन्द्रस्य महात्मनः । कालियस्य च नागस्य नगरं कलसस्य च ॥ १८ ॥ एवं पुरसहस्राणि नागदानवरक्षसाम् । तले ज्ञेयानि प्रथमे कृष्णभौमे
ंशयः ॥ १९ ॥ द्वितीयेऽपि तले विप्रा दैत्येन्द्रस्य सुरक्षसः । महाजम्भस्य च तथा नगरं प्रथमस्य तु ॥ २० ॥ हयग्रीवस्य कृष्णस्य निकुम्भस्य
ान्दिरम् । शङ्खाख्येयस्य च पुरं नगरं गोमुखस्य च ॥ २१ ॥ राक्षसस्य च नीलस्य मेघस्य क्रथनस्य च । पुरञ्च कुरुपादस्य महोष्णीषस्य चालयम् ॥ २२
म्बलस्य च नागस्य पुरमश्वतरस्य च । कद्रुपुत्रस्य च पुरं तक्षकस्य महात्मनः ॥ २३ ॥ एवं पुरसहस्राणि नागदानवरक्षसाम् । द्वितीयेऽस्मिन् तले विप्रा
ाण्डुभौमे न संशयः ॥ २४ ॥ तृतीये तु तले ख्यातं प्रह्लादस्य महात्मनः । अनुह्लादस्य च पुरं दैत्येन्द्रस्य महात्मनः ॥ २५ ॥ तारकाख्यस्य च पुरं पु
शिरसस्तथा । शिशुमारस्य च पुरं हृष्टपुष्टजनाकुलम् ॥ २६ ॥ च्यवनस्य च विज्ञेयं राक्षसस्य च मन्दिरम् । राक्षसेन्द्रस्य च पुरं कुम्भिलस्य खरस
॥ २७ ॥ विरापस्य च क्रूरस्य पुरमुल्कामुखस्य च । हेमकस्य च नागस्य तथा पाण्डुरकस्य च ॥ २८ ॥ मणिमन्त्रस्य च पुरं कपिलस्य च मन्दिरम्

नन्दस्य चोरगपतेर्विशालस्य च मन्दिरम् ॥ २९ ॥ एवं पुरसहस्राणि नागदानवरक्षसाम्। तृतीयेऽस्मिंस्तले विप्राः पीतभौमे न संशयः ॥ ३० ॥ चतुर्थे दैत्यसिंहस्य कालनेमेर्महात्मनः । गजकर्णस्य च पुरं नगरं कुञ्जरस्य च ॥ ३१ ॥ राक्षसेन्द्रस्य च पुरं सुमालेर्बहुविस्तरम् । मुञ्जस्य लोकनाथस्य वृकवक्त्रस्य चालयम् ॥ ३२ ॥ बहुयोजनसाहस्रं बहुपक्षिसमाकुलम् । नगरं वैनतेयस्य चतुर्थेऽस्मिन् रसातले ॥ ३३ ॥ पञ्चमे शर्कराभौमे बहुयोजनविस्तृते । विरोचनस्य नगरं दैत्यसिंहस्य धीमतः ॥ ३४ ॥ वैदूर्य्यस्याग्निजिह्वस्य हिरण्याक्षस्य चालयम् । पुरञ्च विद्युज्जिह्वस्य राक्षसस्य च धीमतः ॥ ३५ ॥ महामेघस्य च पुरं राक्षसेन्द्रस्य शालिनः । कम्मारस्य च नागस्य स्वस्तिकस्य जयस्य च ॥ ३६ ॥ एवं पुरसहस्राणि नागदानवरक्षसाम् । पञ्चमेऽपि तथा ज्ञेयं शर्करानिलये सदा ॥ ३७ ॥ षष्ठे तले दैत्यपतेः केसरेर्नगरोत्तमम् । सुपर्व्वणः सुलोम्नश्च नगरं महिषस्य च । राक्षसेन्द्रस्य च पुरमुत्क्रोशस्य महात्मनः ॥ ३८ ॥ तत्रास्ते सुरसापुत्रः शतशीर्षो मुदा युतः । कश्यपस्य सुतः श्रीमान् वासुकिर्नाम नागराट् ॥ ३९ ॥ एवं पुरसहस्राणि नागदानवरक्षसाम् । षष्ठे तलेऽस्मिन् विख्याते शिलाभौमे रसातले ॥ ४० ॥ सप्तमे तु तले ज्ञेयं पाताले सर्व्वपश्चिमे । पुरं बलेः प्रमुदितं नरनारीसमाकुलम् ॥ ४१ ॥ असुराशीविषैः पूर्णमुद्धृतैर्देवशत्रुभिः । मुचुकुन्दस्य दैत्यस्य तत्र वै नगरं महत् ॥ ४२ ॥ अनेकैर्दितिपुत्राणां समुदीर्णैर्महापुरैः । तथैव नागनगरैरृद्धिमद्भिः सहस्रशः ॥ ४३ ॥ दैत्यानां दानवानाञ्च समुदीर्णैर्महापुरैः । उदीर्णै राक्षसावासैरनेकैश्च समाकुलम् ॥ ४४ ॥ पातालान्ते च विप्रेन्द्रा विस्तीर्णे बहुयोजने । आस्ते रक्तारविन्दाक्षो महात्मा ह्यजरामरः ॥ ४५ ॥ धौतशङ्खोदरवपुर्नीलवासा महाभुजः । विशालभोगो द्युतिमांश्चित्रमालाधरो बली ॥ ४६ ॥ रुक्मशृङ्गावदातेन दीप्तास्येन विराजता । प्रभुर्मुखसहस्रेण शोभते वै स कुण्डली ॥ ४७ ॥ स जिह्वामालया देवो लोलज्वालानलार्चिषा । ज्वालामालापरिक्षिप्तः कैलास इव लक्ष्यते ॥ ४८ ॥ स तु नेत्रसहस्रेण द्विगुणेन विराजता । बालसूर्य्याभिताम्रेण शोभते स्निग्धमण्डलः ॥ ४९ ॥ तस्य कुन्देन्दुवर्णस्य अक्षमाला विराजते । तरुणादित्यमालेव श्वेतपर्व्वतमूर्द्धनि ॥ ५० ॥ जटाकरालो द्युतिमान् लक्ष्यते शयनासने । विस्तीर्ण इव मेदिन्यां सहस्रशिखरो गिरिः ॥ ५१ ॥ महाभोगैर्महाभागैर्महानागैर्महाबलैः । उपास्यते महातेजा महानागपतिः स्वयम् ॥५२॥ स राजा सर्वनागानां शेषो नाम महाद्युतिः । सा वैष्णवी ह्यहितनुर्मर्यादायां व्यवस्थिता ॥ ५३ ॥ सप्तैवमेते कथिता व्यवहार्या रसातलाः । देवासुरमहानागराक्षसाध्युषिताः सदा ॥ ५४ ॥ अतःपरमनालोक्यमगम्यं सिद्धसाधुभिः । देवानामप्यविदितं व्यवहारविवर्जितम्॥५५॥ पृथिव्यग्न्यम्बुवायूनां नभसश्च द्विजोत्तमाः । महत्त्वमेवमृषिभिर्वर्ण्यते नात्र संशयः ॥ ५६ ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि

सूर्याचन्द्रमसोर्गतिम् । सूर्याचन्द्रमसावेतौ भ्रमन्तौ यावदेव तु । प्रकाशतः स्वभाभिस्तौ मण्डलाभ्यां समास्थितौ ॥ ५७ ॥ सप्तानाञ्च समुद्राणां द्वीपानान्तु स विस्तरः । विस्तरार्द्धं पृथिव्यास्तु भवेदन्यत्र बाह्यतः ॥ ५८ ॥ पर्यासपारिमाण्यन्तु चन्द्रादित्यौ प्रकाशतः । पर्यासपारिमाण्येन भूमेस्तुल्यं दिवं स्मृतम् ॥ ५९ ॥ अवति त्रीनिमान् लोकान् यस्मात् सूर्यः परिभ्रमन् । अवधातुः प्रकाशाख्यो ह्यवनात्स रविः स्मृतः ॥ ६० ॥ अतः परं प्रवक्ष्यामि प्रमाणं चन्द्रसूर्ययोः । महितत्वान्महीशब्दो ह्यस्मिन् वर्षे निपात्यते ॥ ६१ ॥ अस्य भारतवर्षस्य विष्कम्भन्तु सुविस्तरम् । मण्डलं भास्करस्याथ योजनानां निबोधत ॥ ६२ ॥ नवयोजनसाहस्रो विस्तारो भास्करस्य तु । विस्तारात्रिगुणश्चास्य परिणाहोऽथ मण्डलम् । विष्कम्भो मण्डलस्यैव भास्कराद्द्विगुणः शशी ॥ ६३ ॥ अतः पृथिव्यां वक्ष्यामि प्रमाणं योजनैः सह । सप्तद्वीपसमुद्राया विस्तारो मण्डलञ्च यत् ॥ ६४ ॥ इत्येतदिह सङ्ख्यातं पुराणं परिमाणतः । तद्वक्ष्यामि प्रसङ्ख्याय साम्प्रतैरभिमानिभिः ॥ ६५ ॥ अभिमानिन्यतीता ये तुल्यास्ते साम्प्रतैरिह । देवा ये वै ह्यतीतास्ते रूपैर्नामभिरेव च ॥ ६६ ॥ तस्मात्तु साम्प्रतैर्देवैर्वक्ष्यामि वसुधातलम् । दिवस्तु सन्निवेशो वै साम्प्रतैरेव कृत्स्नशः ॥ ६७ ॥ शतार्द्धकोटिविस्तारा पृथिवी कृत्स्नतः स्मृता । तस्या वार्धप्रमाणेन मेरोर्वै चातुरन्तरम् ॥६८॥ पृथिव्या वार्धविस्तारो योजनाग्रात्प्रकीर्तितः । मेरुमध्यात् प्रतिदिशं कोटिरेकादश स्मृताः ॥ ६९ ॥ तथा शतसहस्राणि एकोननवतिः पुनः । पञ्चाशच्च सहस्राणि पृथिव्या वार्धविस्तरः ॥ ७० ॥ पृथिव्या विस्तरं कृत्स्नं योजनैस्तान्निबोधत । तिस्रः कोटयस्तु विस्तारः संख्यातः स चतुर्दशम् ॥ ७१ ॥ तथा शतसहस्राणामेकोनाशीतिरुच्यते । सप्तद्वीपसमुद्रायाः पृथिव्यास्त्वेष विस्तरः ॥७२॥ विस्तारात् त्रिगुणश्चैव पृथिव्यन्तस्य मण्डलम् । गणितं योजनाग्रन्तु कोटयस्त्वेकादश स्मृताः ॥७३॥ तथा शतसहस्रन्तु सप्तत्रिंशाधिकानि तु । इत्येतद्वै प्रसङ्ख्यातं पृथिव्यन्तस्य मण्डलम् ॥७४॥ तारकासन्निवेशस्य दिवि यावद्धि मण्डलम् । पर्यासः सन्निवेशस्य भूमस्तावत्तु मण्डलम् ॥७५॥ पर्यासपारिमाण्येन भूमेस्तुल्यं दिवं स्मृतम् । सप्तानामपि लोकानामेतन्मानं प्रकीर्तितम् ॥ ७६ ॥ पर्यासपारिमाण्येन मण्डलानुगतेन च । उपर्युपरि लोकानां छत्रवत्परिमण्डलम् ॥ ७७ ॥ संस्थितिर्विहिता सर्वा येषु तिष्ठन्ति जन्तवः । एतदण्डकटाहस्य प्रमाणं परिकीर्तितम् ॥ ७८ ॥ अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी । भूर्लोकश्च भुवश्चैव तृतीयः स्वरिति स्मृतः । महर्लोको जनश्चैव तपः सत्यश्च सप्तमः ॥ ७९ ॥ एते सप्त कृता लोकाश्छत्राकारा व्यवस्थिताः । स्वकैरावरणैः सूक्ष्मैर्धार्यमाणाः पृथक् पृथक् ॥ ८० ॥ दशभागाधिकाभिश्च ताभिः प्रकृतिभिर्बहिः । धार्यमाणा विशेषैश्च समुत्पन्नैः परस्परम् ॥ ८१ ॥ अस्याण्डस्य समन्ताच्च सन्निविष्टो घनोदधिः । पृथिवीमण्डलं कृत्स्नं घनतोयेन धार्यते ॥ ८२ ॥

घनोदधिपरेणाथ धार्य्यते घनतेजसा । वाह्यतो घनतेजस्तु तिर्य्यगूर्द्धन्तु मण्डलम् ॥ ८३ ॥ समन्ताद्घनवातेन धार्य्यमाणं प्रतिष्ठितम् । घनवातात्त थाकाशमाकाशञ्च महात्मना ॥ ८४ ॥ भूतादिना वृतं सर्व्वं भूतादिर्महता वृतः । वृतो महानन्तेन प्रधानेनाव्ययात्मना ॥ ८५ ॥ पुराणि लोकपालानां प्रवक्ष्यामि यथाक्रमम् । ज्योतिर्गणप्रचारस्य प्रमाणं परिवक्ष्यते ॥ ८६ ॥ मेरोः प्राच्यां दिशि तथा मानसस्यैव मूर्द्धनि । वस्त्वोकसारा माहेन्द्री पुण्या हेमपरिष्कृता ॥ ८७ ॥ दक्षिणेन पुनर्मेरोर्मानसस्यैव मूर्द्धनि । वैवस्वतो निवसति यमः संयमने पुरे ॥ ८८ ॥ प्रतीच्यान्तु पुनर्मेरोर्मानसस्यैव मूर्द्धनि । सुखा नाम पुरी रम्या वरुणस्याथ धीमतः ॥ ८९ ॥ दिश्युत्तरस्यां मेरोस्तु मानसस्यैव मूर्द्धनि । तुल्या माहेन्द्रपुर्य्यां तु सोमस्यापि विभावरी ॥ ९० ॥ मानसोत्तरपृष्ठे तु लोकपालाश्चतुर्दिशम् । स्थिता धर्म्मव्यवस्थार्थं लोकसंरक्षणाय च ॥ ९१ ॥ लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने । काष्ठागतस्य सूर्य्यस्य गतिर्या तां निबोधत ॥ ९२ ॥ दक्षिणे प्रक्रमे सूर्य्यः क्षिप्तेषुरिव सर्पति । ज्योतिषाञ्चक्रमादाय सततं परिगच्छति ॥ ९३ ॥ मध्यगश्चामरावत्यां यदा भवति भास्करः । वैवस्वते संयमने उदयस्तत्र उच्यते ॥ ९४ ॥ सुखायामर्द्धरात्रञ्च मध्यगः स्याद्रविर्यदा । सुखायामथ वारुण्यामुत्तिष्ठन् स तु दृश्यते ॥ ९५ ॥ विभायामर्द्धरात्रं स्यान्माहेन्द्यामस्तमेति च । तदा दक्षिणपूर्व्वेषामपराह्लो विधीयते ॥ ९६ ॥ दक्षिणापर देश्यानां पूर्व्वाह्नः परिकीर्त्त्यते । तेषामपररात्रञ्च ये जना उत्तरापथे ॥ ९७ ॥ देशा उत्तरपूर्व्वा ये पूर्व्वरात्रन्तु तान् प्रति । एवमेवोत्तरेष्वर्को भवनेषु विराजते ॥ ९८ ॥ सुखायामथ वारुण्यां मध्याह्ने चार्य्यमा यदा । विभावर्य्यां सोमपुर्य्यामुत्तिष्ठति विभावसुः ॥ ९९ ॥ रात्र्यर्द्धं चामरावत्यामस्तमेति यमस्य च । सोमपुर्यां विभायान्तु मध्याह्ने स्याद्दिवाकरः ॥ १०० ॥ महेन्द्रस्यामरावत्यामुत्तिष्ठति यदा रविः । अर्द्धरात्रं संयमने वारुण्यामस्तमेति च ॥ १०१ ॥ स शीघ्रमेति पर्य्येति भास्करोऽलातचक्रवत् । भ्रमन् वै भ्रममाणानि ऋक्षाणि गगने रविः ॥ १०२ ॥ एवं चतुर्षु द्वीपेषु दक्षिणान्तेन सर्पति । उदयास्तमनेनासावुत्तिष्ठति पुनः पुनः ॥ १०३ ॥ पूर्व्वाह्णे चापराह्णे तु द्वौ द्वौ देवालयौ तु सः । तपत्येकन्तु मध्याह्ने तैरेव तु सरश्मिभिः ॥ १०४ ॥ उदितो वर्द्धमानाभिरामध्याह्नं तपन् रविः । अतः परं ह्रसन्तीभिर्गोभिरस्तं स गच्छति ॥ १०५ ॥ उदयास्तमयाभ्यां हि स्मृते पूर्वापरे दिशौ । यावत्पुरस्तात्तपति तावत् पृष्ठे तु पार्श्वयोः ॥ १०६ ॥ यत्रोद्यन् दृश्यते सूर्यस्तेषां स उदयः स्मृतः । यत्र प्रणाशमायाति तेषामस्तः स उच्यते ॥ १०७ ॥ सर्वेषामुत्तरे मेरुर्लोकालोकस्तु दक्षिणे । विदूरभावादर्कस्य भूमेर्लेखावृतस्य च । ह्रियन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते ॥ १०८ ॥ ग्रहनक्षत्रताराणां दर्शनं भास्करस्य च । उच्छ्रायस्य प्रमाणेन ज्ञेयमस्तमनोदयम् ॥ १०९ ॥ शुक्लच्छायोऽग्निराप्‌श्च कृष्णच्छाया

च मेदिनी। विदूरभावादर्कस्य उद्यतस्य विरश्मिता । रक्ताभावो विरश्मित्वाद्रक्तत्वाच्चाप्यनुष्णता ॥ ११० ॥ लेखयावस्थितः सूर्यो. यत्र
तु दृश्यते । ऊर्द्ध्वं गतः सहस्रन्तु योजनानां स दृश्यते ॥ १११ ॥ प्रभा हि सौरी पादेन अस्तङ्गच्छति भास्करे । अग्निमाविशते रात्रौ तस्माद्दूर
प्रकाशते ॥ ११२ ॥ उदितस्तु पुनः सूर्यः अस्तमाग्नेयमाविशत् । संयुक्तो वह्निना सूर्यस्ततः स तपते दिवा ॥ ११३ ॥ प्राकाश्यञ्च तथौष्ण्
सूर्याग्नेयी च तेजसी । परस्परानुप्रवेशादाप्यायेते दिवानिशम् ॥ ११४ ॥ उत्तरे चैव भूम्यर्द्धे तथा तस्मिंश्च दक्षिणे । उत्तिष्ठति तथा सूर्ये रात्रिर
शते त्वपः । तस्मात्ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात् ॥ ११५ ॥ अस्तं याति पुनः सूर्ये दिनं वै प्रविशत्यपः । तस्माच्छुक्ला
न्त्यापो नक्तमह्नः प्रवेशनात् ॥ ११६ ॥ एतेन क्रमयोगेन भूम्यर्द्धे दक्षिणोत्तरे । उदयास्तमनेऽर्कस्य अहोरात्रं विशत्यपः ॥ ११७ ॥
सूर्यप्रकाशाख्यं तामसी रात्रिरुच्यते । तस्माद्व्यवस्थिता रात्रिः सूर्यावेक्ष्यमहः स्मृतम् ॥ ११८ ॥ एवं पुष्करमध्येन यदा सर्पति भास्करः । त्रि
शकन्तु मेदिन्या मुहूर्तेनैव गच्छति ॥ ११९ ॥ योजनाग्रान्मुहूर्त्तस्य इमां सङ्ख्यां निबोधत । पूर्णं शतसहस्राणामेकत्रिंशत्तु सा स्मृता ॥ १२०
पञ्चाशत्तु तथान्यानि सहस्राण्यधिकानि तु । मौहूर्त्तिकी गतिर्ह्येषा सूर्यस्य तु विधीयते ॥ १२१ ॥ एतेन गतियोगेन यदा काष्ठान्तु दक्षिणाम्
पर्य्यागच्छेत्तदादित्यो माघे काष्ठान्तमेव हि ॥१२२॥ सर्पते दक्षिणायान्तु काष्ठायां तन्निबोधत । नवकोट्यः प्रसङ्ख्याता योजनैः परिमण्डलम् ॥१२
तथा शतसहस्राणि चत्वारिंशच्च पञ्च च । अहोरात्रात्पतङ्गस्य गतिरेषा विधीयते ॥ १२४ ॥ दक्षिणाद्विनिवृत्तोऽसौ विषुवस्थो यदा रविः । क्षीरोद
समुद्रस्य उत्तरान्ता दिशश्चरन् ॥ १२५ ॥ मण्डलं विषुवद्यापि योजनैस्तन्निबोधत । तिस्रः कोटयस्तु विस्तीर्णा विषुवद्यापि सा स्मृता ॥ १२६
तथा शतसहस्राणामशीत्येकाधिका पुनः । श्रवणे चोत्तरां काष्ठाञ्चित्रभानुर्यदा भवेत् । शाकद्वीपस्य षष्ठस्य उत्तरान्ता दिशश्चरन् ॥ १२७ ॥ उत्तराय
काष्ठायां प्रमाणं मण्डलस्य च । योजनाग्रात्प्रसङ्ख्याता कोटिरेका तु सा द्विजैः ॥१२८॥ अशीतिर्नियुतानीह योजनानां तथैव च । अष्टपञ्चाशतः
योजनान्याधिकानि तु ॥१२९॥ नागवीथ्युत्तरावीथी अजवीथी च दक्षिणा । मूलं चैव तथाषाढे ह्यजवीथ्युदयास्त्रयः । अभिजित्पूर्वतः स्वातिर्नागवीथ्युद
स्त्रयः ॥ १३० ॥ काष्ठयोरन्तरं यच्च तद्वक्ष्ये योजनैः पुनः । एतच्छतसहस्राणामेकत्रिंशोत्तरं शतम् ॥ १३१ ॥ त्रयस्त्रिंशाधिकाश्चान्ये त्रयस्त्रिंश
योजनैः । काष्ठयोरन्तरं ह्येतद्योजनाग्रात् प्रतिष्ठितम् ॥ १३२ ॥ काष्ठयोर्लेखयोश्चैव अन्तरे दक्षिणोत्तरे । ते तु वक्ष्यामि सङ्ख्याय योजनैस्तन्निबो
॥ १३३ ॥ एकैकमन्तरन्तस्या नियुतान्येकसप्ततिः । सहस्राण्यतिरिक्ताश्च ततोऽन्या पञ्चसप्ततिः ॥ १३४ ॥ लेखयोः काष्ठयोश्चैव वाह्याभ्यन्तर

स्मृतम् । अभ्यन्तरन्तु पर्येति मण्डलान्युत्तरायणे ॥ १३५ ॥ वाह्यतो दक्षिणे चैव सततन्तु यथाक्रमम् । मण्डलानां शतं पूर्णमशीत्यधिकमुत्तरम् ॥ १३६ ॥ चरते दक्षिणे चापि तावदेव विभावसुः । प्रमाणं मण्डलस्याथ योजनाग्रान्निबोधत ॥ १३७ ॥ एकविंशद्योजनानां सहस्राणि समासतः । शते द्वे पुनरप्यन्ये योजनानां प्रकीर्त्तिते ॥ १३८ ॥ एकविंशतिभिश्चैव योजनैरधिकैर्हि ते । एतत्प्रमाणमाख्यातं योजनैर्मण्डलं हि तत् ॥ १३९ ॥ विष्कम्भो मण्डलस्यैष तिर्यक् स तु विधीयते । प्रत्यहश्चरते तानि सूर्यो वै मण्डलक्रमम् ॥ १४० ॥ कुलालचक्रपर्यन्तो यथा शीघ्रं निवर्त्तते । दक्षिणे प्रक्रमे सूर्यस्तथा शीघ्रं निवर्त्तते ॥ १४१ ॥ तस्मात् प्रकृष्टां भूमिञ्च कालेनाल्पेन गच्छति । सूर्यो द्वादशभिः शीघ्रं मुहूर्त्तैर्दक्षिणोत्तरे ॥ १४२ ॥ त्रयोदशार्द्धमृक्षाणामह्नानुचरते रविः । मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥ १४३ ॥ कुलालचक्रमध्यस्तु यथा मन्दं प्रसर्पति । तथोदगयने सूर्यः सर्पते मन्दविक्रमः ॥ १४४ ॥ त्रयोदशार्द्धमर्द्धेन ऋक्षाणां चरते रविः । तस्माद्दीर्घेण कालेन भूमिमल्पां निगच्छति ॥ १४५ ॥ अष्टादशमुहूर्त्तैस्तु उत्तरायणपश्चिमम् । अहर्भवति तच्चापि चरते मन्दविक्रमः ॥ १४६ ॥ त्रयोदशार्द्धमर्धेन ऋक्षाणाञ्चरते रविः । मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ॥ १४७ ॥ ततो मन्दतरं ताभ्याञ्चक्रं भ्रमति वै यथा । मृत्पिण्ड इव मध्यस्थो ध्रुवो भ्रमति वै यथा ॥ १४८ ॥ त्रिंशन्मुहूर्त्तानि वाहुरहोरात्रं ध्रुवो भ्रमन् । उभयोः काष्ठयोर्मध्ये भ्रमते मण्डलानि सः ॥१४९॥ कुलालचक्रनाभिस्तु यथा तत्रैव वर्त्तते । ध्रुवस्तथा हि विज्ञेयस्तत्रैव परिवर्त्तते ॥ १५० ॥ उभयोः काष्ठयोर्मध्ये भ्रमतो मण्डलानि तु । दिवा नक्तञ्च सूर्यस्य मन्दा शीघ्रा च वै गतिः ॥ १५१ ॥ उत्तरे प्रक्रमे त्विन्दोर्दिवा मन्दा गतिः स्मृता । तथैव च पुनर्नक्तं शीघ्रा सूर्यस्य वै गतिः ॥ १५२ ॥ दक्षिणे प्रक्रमे चैव दिवा शीघ्रं विधीयते । गतिः सूर्यस्य नक्तं वै मन्दा चापि तथा स्मृता ॥ १५३ ॥ एवं गतिविशेषेण विभजन् रात्र्यहानि तु । तथा विचरते मार्गे समेन विषमेण च ॥१५४॥ लोकालोके स्थिता ये ते लोकपालाश्चतुर्दिशम् । अगस्त्यश्चरते तेषामुपरिष्टाज्जवेन तु । भजन्नसावहोरात्रमेवङ्गतिविशेषणैः ॥ १५५ ॥ दक्षिणे नागवीथ्यायां लोकालोकस्य चोत्तरम् । लोकसन्तारको ह्येष वैश्वानरपथाद्बहिः ॥१५६॥ पृष्ठे यावत् प्रभा सौरी पुरस्तात् सम्प्रकाशते । पार्श्वयोः पृष्ठतस्तावल्लोकालोकस्य सर्वतः ॥ १५७ ॥ योजनानां सहस्राणि दशोर्द्धन्तूच्छ्रितो गिरिः । प्रकाशश्चाप्रकाशश्च सर्वतः परिमण्डलः ॥ १५८ ॥ नक्षत्रचन्द्रसूर्याश्च ग्रहास्तारागणैः सह । अभ्यन्तरं प्रकाशन्ते लोकालोकस्य वै गिरेः ॥१५९॥ एतावानेव लोकस्तु निरालोकस्त्वतः परम् । लोकालोक एकधा तु निरालोकस्त्वनेकधा॥१६०॥ लोकालोकन्तु सन्धत्ते यस्मात् सूर्यः परिग्रहम् । तस्मात्सन्ध्येति तामाहुरुषाव्युष्ट्योर्यदन्तरम् । उषा रात्रिः स्मृता विप्रैर्व्युष्टिश्चापि त्वहः स्मृतम्॥१६१॥

सूर्यं हि ग्रसमानानां सन्ध्याकाले हि रक्षसाम् । प्रजापतिनियोगेन शापस्तेषां दुरात्मनाम् । अक्षयत्वञ्च देहस्य प्रापिता मरणं तथा ॥ १६२ ॥
तिस्रः कोटयस्तु विख्याता मन्देहा नाम राक्षसाः । प्रार्थयन्ति सहस्रांशुमुदयन्ति दिने दिने । तापयन्तो दुरात्मानः सूर्यमिच्छन्ति खादितुम् ॥ १६३॥
अथ सूर्यस्य तेषाञ्च युद्धमासीत् सुदारुणम् । ततो ब्रह्मा च देवाश्च ब्राह्मणाश्चैव सत्तमाः । सन्ध्येति समुपासन्तः क्षेपयन्ति महाजलम् ॥ १६४ ॥ ओ
ङ्कारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम् । तेन दह्यन्ति ते दैत्या वज्रभूतेन वारिणा ॥ १६५ ॥ ततः पुनर्महातेजा महाद्युतिपराक्रमः । योजनानां सह
स्राणि ऊर्द्धमुत्तिष्ठते शतम् ॥ १६६ ॥ ततः प्रयाति भगवान् ब्राह्मणैः परिवारितः । वालखिल्यैश्च मुनिभिः कृतार्थैः समरीचिभिः ॥ १६७ ॥ काष्ठा
निमेषा दश पञ्च चैव त्रिंशच्च काष्ठा गणयेत् कलान्तम् । त्रिंशत् कलाश्चैव भवेन्मुहूर्त्तस्तैस्त्रिंशता रात्र्यहनी समेते ॥ १६८ ॥ ह्रासवृद्धी त्वह
र्भागैर्दिवसानां यथाक्रमम् । सन्ध्या मुहूर्त्तमानन्तु ह्रासे वृद्धौ समा स्मृता ॥ १६९ ॥ लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तागते तु वै । प्रातस्तनः स्मृतः कालो
भागस्त्वह्नः स पञ्चमः ॥ १७० ॥ तस्मात् प्रातस्तनात्कालात् त्रिमुहूर्त्तस्तु सङ्गवः । मध्याह्नस्त्रिमुहूर्त्तस्तु तस्मात्कालाच्च सङ्गवात् ॥ १७१ ॥
तस्मान्मध्यान्दिनात् कालादपराह्न इति स्मृतः । त्रय एव मुहूर्त्तास्तु तस्मात् कालाच्च मध्यमात् ॥ १७२ ॥ अपराह्णे व्यतीपाते कालः सायाह्न
उच्यते । दशपञ्चमुहूर्त्ताद्दै मुहूर्त्तास्त्रय एव च ॥ १७३ ॥ दशपञ्चमुहूर्त्तं वै अहर्विषुवति स्मृतम् । दशपञ्चमुहूर्त्ताद्दै रात्रिन्दिवमिति स्मृतम् ॥ १७४ ॥
वर्द्धते ह्रसते चैव अयने दक्षिणोत्तरे । अहस्तु ग्रसते रात्रिं रात्रिस्तु ग्रसते त्वहः ॥ १७५ ॥ शरद्वसन्तयोर्मध्ये विषुवन्ताद्विभाव्यते । अहोरात्रं
कलाश्चैव सप्त सोमः समश्नुते ॥ १७६ ॥ तथा पञ्चदशाहानि पक्ष इत्याभिधीयते । द्वौ पक्षौ च भवेन्मासो द्वौ मासावन्तरावृतुः ।
ऋतुत्रयमयनं स्याद्द्वेऽयने वर्षमुच्यते ॥ १७७ ॥ निमेषादिकृतः कालः काष्ठाया दश पञ्च च । कलायास्त्रिंशतः काष्ठा मात्राशीतिद्वया
त्मिका ॥ १७८॥ शतमेकोनकास्त्रिंशन्मात्रास्त्रिंशत् षडुत्तरा । द्विषष्टिभाक् त्रयोविंशन्मात्रायाश्च चला भवेत् ॥ १७९ ॥ चत्वारिंशतसहस्राणि
शतान्यष्टौ च विद्युतिः । सप्ततिश्चापि तत्रैव नवतिं विद्धि निश्चये ॥ १८० ॥ चत्वार्येव शतान्याहुर्विद्युतौ वैधसंयुगे । चरांशो ह्येष विज्ञेयो नालिका
चात्र कारणम् ॥ १८१ ॥ संवत्सरादयः पञ्च चतुर्मानविकल्पिताः । निश्चयः सर्वकालस्य युग इत्यभिधीयते ॥ १८२ ॥ संवत्सरस्तु प्रथमो द्वितीयः ॥७५॥
परिवत्सरः । इद्वत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः । पञ्चमो वत्सरस्तेषां कालस्तु परिसंज्ञितः ॥ १८३ ॥ विंशशतं भवेत्पूर्णं पर्वणां तु रवेर्युगम् ।
एतान्यष्टादशस्त्रिंशदुदयो भास्करस्य च ॥ १८४ ॥ ऋतवास्त्रिंशतः सौरा अयनानि दशैव तु । पञ्चत्रिंशत् शतं चापि षष्टिर्मासाश्च भास्करः ॥ १८५ ॥

त्रिंशदेव त्वहोरात्रं स तु मासश्च भास्करः । एकषष्टिस्त्वहोरात्रा दनुरेको विभाव्यते ॥ १८६ ॥ अह्नान्तु त्र्यधिकाशीतिः शतं चाप्यधिकं भवेत् । मानं तच्चित्रभानोस्तु विज्ञेयं भुवनस्य तु ॥ १८७ ॥ सौरसौम्यं तु विज्ञेयं नक्षत्रं सावनं तथा । नामान्येतानि चत्वारि यैः पुराणं विभाव्यते ॥ १८८ ॥ खे तस्योत्तरतश्चैव शृङ्गवान्नाम पर्वतः । त्रीणि तस्य तु शृङ्गाणि स्पृशन्तीव नभस्तलम् ॥ १८९ ॥ तैश्चापि शृङ्गवान्नाम सर्वतश्चैव विश्रुतः । एकमार्गश्च विस्तारो विष्कम्भश्चापि कीर्तितः ॥ १९० ॥ तस्य वै सर्वतः शृङ्गं मध्यमन्तद्धिरण्मयम् । दक्षिणं राजतञ्चैव शृङ्गं तु स्फटिकप्रभम् ॥ १९१ ॥ सर्वरत्नमयं चैकं शृङ्गमुत्तरमुत्तमम् । एवं कूटैस्त्रिभिः शैलैः शृङ्गवानिति विश्रुतः ॥ १९२ ॥ यत्तद्विषुवतं शृङ्गन्तदर्कः प्रतिपद्यते । शरद्वसन्तयोर्मध्ये मध्यमां गतिमास्थितः । अहस्तुल्यामथो रात्रिं करोति तिमिरापहः ॥ १९३ ॥ हरिताश्च हया दिव्यास्ते नियुक्ता महारथे । अनुलिप्ता इवाभान्ति पद्मरक्तैर्गभस्तिभिः ॥ १९४ ॥ मेषान्ते च तुलान्ते च भास्करोदयतः स्मृताः । मुहूर्त्ता दश पञ्चैव अहोरात्रिश्च तावती ॥ १९५ ॥ कृत्तिकानां यदा सूर्यः प्रथमांशगतो भवेत् । विशाखानां तथा ज्ञेयश्चतुर्थांशे निशाकरः ॥ १९६ ॥ विशाखायां यदा सूर्यश्चरतेंऽशं तृतीयकम् । तदा चन्द्रं विजानीयात् कृत्तिकाशिरसि स्थितम् ॥ १९७ ॥ विषुवन्तं तदा विद्यादेवमाहुर्महर्षयः । सूर्येण विषुवं विद्यात् कालं सोमेन लक्षयेत् ॥ १९८ ॥ समा रात्रिरहश्चैव यदा तद्विषुवद्भवेत् । तदा दानानि देयानि पितृभ्यो विषुवत्यपि । ब्राह्मणेभ्यो विशेषेण मुखमेतत्तु दैवतम् ॥ १९९ ॥ ऊनरात्राधिमासौ च कलाकाष्ठामुहूर्त्तकाः । पौर्णमासी तथा ज्ञेया अमावास्या तथैव च । सिनीवाली कुहूश्चैव राका चानुमतिस्तथा ॥ २०० ॥ तपस्तपस्यौ मधुमाधवौ च शुक्रः शुचिश्चायनमुत्तरं स्यात् । नभो नभस्योऽथ इषुः सहोर्जः सहःसहस्याविति दक्षिणं स्यात् ॥ २०१ ॥ संवत्सरास्ततो ज्ञेयाः पञ्चाब्दा ब्रह्मणः सुताः । तस्मात्तु ऋतवो ज्ञेया ऋतवो ह्यन्तराः स्मृताः ॥ २०२ ॥ तस्मादनुमुखा ज्ञेया अमावास्यास्य पर्वणः । तस्मात्तु विषुवं ज्ञेयं पितृदैवहितं सदा ॥ २०३ ॥ एवं ज्ञात्वा न मुह्येत दैवे पित्र्ये च मानवः । तस्मात् स्मृतं प्रजानां वै विषुवत्सर्वगं सदा ॥ २०४ ॥ आलोकान्तः स्मृतो लोको लोकान्तो लोक उच्यते । लोकपालाः स्थितास्तत्र लोकालोकस्य मध्यतः ॥ २०५ ॥ चत्वारस्ते महात्मानास्तिष्ठन्त्याभूतसम्प्लवात् । सुधामा चैव वैराजः कर्दमः शङ्खपस्तथा । हिरण्यलोमा पर्जन्यः केतुमान् जातनिश्चयः ॥ २०६ ॥ निर्द्वन्द्वा निरभीमाना निस्तन्त्रा निष्परिग्रहाः । लोकपालाः स्थिता ह्येते लोकालोके चतुर्दिशम् ॥ २०७ ॥ उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम् । पितृयाणः स वै पन्था वैश्वानरपथाद्वहिः ॥२०८॥ तत्रासते प्रजावन्तो मुनयो ह्यग्निहोत्रिणः । लोकस्य सन्तानकराः पितृयाणे पथि स्थिताः ॥२०९॥ भूतारम्भ

कृतं कर्म आशिषा ऋत्विगुच्यते। प्रारभन्ते लोककामास्तेषां पन्थाः स दक्षिणः ॥ २१० ॥ चलितन्ते पुनर्द्धर्मं स्थापयन्ति युगे युगे । सन्तत्या
तपसा चैव मर्यादाभिः श्रुतेन च ॥ २११ ॥ जायमानास्तु पूर्वे वै पश्चिमानां गृहेषु च । पश्चिमाश्चैव जायन्ते पूर्वेषां निधनेष्वपि । एव
मावर्त्तमानास्ते तिष्ठन्त्याभूतसम्प्लवात् ॥ २१२ ॥ अष्टाशीतिसहस्राणि मुनीनां गृहमेधिनाम् । सवितुर्दक्षिणं मार्गं श्रिता ह्याचन्द्रतारकम् । क्रियावतां
प्रसङ्ख्येया ये श्मशानानि भेजिरे ॥ २१३ ॥ लोकसंव्यवहारेण भूतारम्भकृतेन च । इच्छाद्वेषप्रवृत्त्या च मैथुनोपगमेन च ॥ २१४ ॥ तथा
कायकृतेनेह सेवनाद्विषयस्य च। एतैस्तैः कारणैः सिद्धाः श्मशानानि हि भेजिरे। प्रजैषिणस्ते मुनयो द्वापरेष्विह जज्ञिरे ॥ २१५ ॥ नागवी
थ्युत्तरे यच्च सप्तर्षिभ्यश्च दक्षिणम् । उत्तरः सवितुः पन्था देवयानस्तु स स्मृतः ॥ २१६ ॥ यत्र ते वासिनः सिद्धा विमला ब्रह्मचारिणः ।
सततन्ते जुगुप्सन्ते तस्मान्मृत्युर्जितस्तु तैः ॥ २१७ ॥ अष्टाशीतिसहस्राणि तेषामप्यूर्द्ध्वरेतसाम् । उदक्पन्थानमर्यम्णः श्रिता ह्याभूतसम्प्लवात्
॥ २१८ ॥ इत्यैतैः कारणैः शुद्धैस्तेऽमृतत्वं हि भेजिरे। आभूतसम्प्लवस्थानममृतत्वं विभाव्यते ॥ २१९ ॥ त्रैलोक्यस्थितिकालोऽयमपुनर्मार्गगा
मिनः। ब्रह्महत्याश्वमेधाभ्यां पुण्यपापकृतोऽपरम्। आभूतसम्प्लवान्ते तु क्षीयन्ते ह्यूर्द्ध्वरेतसः ॥ २२० ॥ ऊर्द्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्रास्ति वै स्मृतम् ।
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ॥ २२१ ॥ तत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम् । धर्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाधकाः
॥ २२२ ॥ इति श्रीमहापुराणे वायुप्रोक्ते ज्योतिष्प्रचारो नाम पञ्चाशोऽध्यायः ॥ ५० ॥ छ ॥ सूत उवाच ॥ स्वायम्भुवे निसर्गे तु व्याख्यातान्युत्त
राणि तु । भविष्याणि च सर्वाणि तेषां वक्ष्याम्यनुक्रमम् ॥ १ ॥ एतच्छ्रुत्वा तु मुनयः पप्रच्छुर्लोमहर्षणम् । सूर्याचन्द्रमसोश्चारं ग्रहाणाञ्चैव सर्वशः
॥ २ ॥ ऋषय ऊचुः ॥ भ्रमन्ते कथमेतानि ज्योतींषि दिवि मण्डलम् । तिर्यग्व्यूहेन सर्वाणि तथैवासङ्करेण च । कश्च भ्रामयते तानि भ्रमन्ति यदि वा
स्वयम् ॥ ३ ॥ एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम । भूतसम्मोहनन्त्वेतच्छ्रोतुमिच्छा प्रवर्त्तते ॥ ४ ॥ सूत उवाच ॥ भूतसम्मोहनं ह्येतद्
ब्रुवतो मे निबोधत । प्रत्यक्षमपि दृश्यं यत्तत् संमोहयते प्रजाः ॥ ५ ॥ योऽसौ चतुर्दिशं पुच्छे शिशुमारे व्यवस्थितः । उत्तानपादपुत्रोऽसौ मेढीभूतो
ध्रुवो दिवि ॥ ६ ॥ स हि भ्रमन् भ्रामयते चन्द्रादित्यौ ग्रहैः सह । भ्रमन्तमनुगच्छन्ति नक्षत्राणि च चक्रवत् ॥ ७ ॥ ध्रुवस्य मनसा चासौ सर्पते ॥७६॥
भगणः स्वयम् । सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह ॥ ८ ॥ वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै । तेषां योगश्च भेदाश्च कालचारस्तथैव
च ॥ ९ ॥ अस्तोदयौ तथोत्पाता अयने दक्षिणोत्तरे । विषुवद्ग्रहवर्णाश्च ध्रुवात्सर्वं प्रवर्त्तते ॥ १० ॥ वर्षा घर्मो हिमं रात्रिः सन्ध्या चैव दिनं तथा ।

शुभाशुभं प्रजानाञ्च ध्रुवात्सर्वं प्रवर्त्तते ॥ ११ ॥ ध्रुवेणाधिकृतश्चैव सूर्योऽपावृत्त्य तिष्ठति । तदेष दीप्तकिरणः स कालाग्निर्दिवाकरः ॥ १२ ॥ परिवर्त्त
क्रमाद्विप्रा भाभिरालोकयन् दिशः । सूर्यः किरणजालेन वायुयुक्तेन सर्वशः । जगतो जलमादत्ते कृत्स्नस्य द्विजसत्तमाः ॥ १३ ॥ आदित्यपीतं
सूर्याग्नेः सोमं संक्रमते जलम् । नाडीभिर्वायुयुक्ताभिर्लोकाधानं प्रवर्त्तते ॥ १४ ॥ यत्सोमात् स्रवते सूर्यस्तदभ्रेष्ववतिष्ठते । मेघा वायुनिघातेन
विसृजन्ति जलम्भुवि ॥ १५ ॥ एवमुत्क्षिप्यते चैव पतते च पुनर्जलम् । नानाप्रकारमुदकन्तदेव परिवर्त्तते ॥ १६ ॥ सन्धारणार्थं भूतानां मायैषा
विश्वनिर्मिता । अनया मायया व्याप्तं त्रैलोक्यं सचराचरम् ॥ १७ ॥ विश्वेशो लोककृद्देवः सहस्रांशुः प्रजापतिः । धाता कृत्स्नस्य लोकस्य प्रभु
र्विष्णुर्दिवाकरः ॥ १८ ॥ सर्वलौकिकमम्भो वै यत्सोमान्नभसः स्रुतम् । सोमाधारं जगत्सर्वमेतत्तथ्यं प्रकीर्तितम् ॥ १९ ॥ सूर्यादुष्णं निस्रवते
सोमाच्छीतं प्रवर्त्तते । शीतोष्णवीर्यौ द्वावेतौ युक्तौ धारयतो जगत् ॥ २० ॥ सोमाधारा नदी गङ्गा पवित्रा विमलोदका । सोमपुत्रपुरोगाश्च महानद्यो
द्विजोत्तमाः ॥ २१ ॥ सर्वभूतशरीरेषु आपो ह्यनुगताश्च याः । तेषु सन्दह्यमानेषु जङ्गमस्थावरेषु च । धूमभूतास्तु ता आपो निष्क्रामन्तीह सर्वशः
॥ २२ ॥ तेन चाभ्राणि जायन्ते स्थानमत्राम्भसां स्मृतम् । आर्कन्तेजो हि भूतेभ्यो ह्यादत्ते रश्मिभिर्जलम् ॥ २३ ॥ समुद्राद्वायुसंयोगाद्वहन्त्यापो
गभस्तयः । यतस्त्वृतुवशात् काले परिवर्त्तो दिवाकरः । यच्छत्यपो हि मेघेभ्यः शुक्लाः शुक्लगभस्तिभिः ॥२४॥ अभ्रस्था प्रपतन्त्यापो वायुना समुदी
रिताः । सर्वभूतहितार्थाय वायुभिश्च समन्ततः ॥ २५ ॥ ततो वर्षति षण्मासान् सर्वभूतविवृद्धये । वायव्यं स्तनितञ्चैव वैद्युतञ्चाग्निसंभवम् ॥ २६ ॥
मेहनाच्च मिहेर्द्धातोर्मेघत्वं व्यञ्जयन्ति च । न भ्रश्यन्ति यतस्त्वापस्तदभ्रं कवयो विदुः ॥ २७ ॥ मेघानां पुनरुत्पत्तिस्त्रिविधा योनिरुच्यते । आग्नेया
ब्रह्मजाश्चैव पक्षजाश्च पृथग्विधाः । त्रिधा घनाः समाख्यातास्तेषां वक्ष्यामि सम्भवम् ॥ २८ ॥ आग्नेयास्त्वर्णजाः प्रोक्तास्तेषां तस्मात् प्रवर्त्तनम् ।
शीतदुर्दिनवाता ये स्वगुणास्ते व्यवस्थिताः ॥२९॥ महिषाश्च वराहाश्च मत्तमातङ्गगामिनः । भूत्वा धरणिमभ्येत्य विचरन्ति रमन्ति च ॥३०॥ जीमूता
नाम ते मेघा एतेभ्यो जीवसम्भवाः । विद्युद्गुणविहीनाश्च जलधारावलम्बिनः ॥३१॥ मूका घना महाकाया प्रवाहस्य वशानुगाः । क्रोशमात्राच्च वर्षन्ति
क्रोशार्द्धादपि वा पुनः ॥ ३२ ॥ पर्वताग्रनितम्बेषु वर्षन्ति च रमन्ति च । बलाकागर्भदाश्चैव बलाकागर्भधारिणः ॥ ३३ ॥ ब्रह्मजानाम ते मेघा ब्रह्मनिः
श्वाससम्भवाः । ते हि विद्युद्गुणोपेताः स्तनयन्ति स्वनप्रियाः ॥३४॥ तेषां शब्दप्रणादेन भूमिः स्वाङ्गरुहोद्गमा । राज्ञी राज्ञाभिषिक्तेव पुनर्यौवनमश्नुते ।
तेष्वियं प्रीतिमासक्ता भूतानां जीवितोद्भवा ॥३५॥ जीमूता नाम ते मेघास्तेभ्यो जीवस्य सम्भवः । द्वितीयं प्रवहं वायुं मेघास्ते तु समाश्रिताः॥३६॥

शंसितव्रताः ॥ १४ ॥ ऋषय ऊचुः ॥ कथं सप्तर्षयः पूर्वमुत्पन्नाः सप्त मानसाः । पुत्रत्वे कल्पिताश्चैव तन्नो निगद सत्तम । ततोऽब्रवीन्महातेजाः सूत पौराणिकः शुभम् ॥ १५ ॥ कथं सप्तर्षयः सिद्धा ये वै स्वायम्भुवेऽन्तरे । मन्वन्तरं समासाद्य पुनर्वैवस्वतं किल ॥ १६ ॥ भवाभिशापात्संविद्धा अप्राप्तास्ते तदा तपः । उपपन्ना जने लोके सकृदागामिनस्तु ते ॥ १७ ॥ ऊचुः सर्वे ततोऽन्योन्यं जनलोके महर्षयः । ऊचुरेव महाभागा वारुणे वितते क्रतौ ॥ १८ ॥ सर्वे वयं प्रसूयामश्चाक्षुषस्यान्तरे मनोः । पितामहात्मजाः सर्वे ततः श्रेयो भविष्यति ॥ १९ ॥ स्वायम्भुवेऽन्तरे शप्ताः सप्तार्थं ते भवेन तु । जज्ञिरे वै पुनस्ते ह जनलोकाद्दिवं गताः ॥ २० ॥ देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम् । ब्रह्मणो जुह्वतः शुक्रमग्नौ पूर्वं प्रजेप्सया । ऋषयो जज्ञिरे पूर्वं द्वितीयमिति नः श्रुतम् ॥ २१ ॥ भृगुरङ्गिरा मरीचिः पुलस्त्यः पुलहः क्रतुः । अत्रिश्चैव वसिष्ठश्च अष्टौ ते ब्रह्मणः सुताः ॥ २२ ॥ तथास्य वितते यज्ञे देवाः सर्वे समागताः । यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्तिमान् ॥ २३ ॥ मूर्त्तिमन्ति च सामानि यजूंषि च सहस्रशः । ऋग्वेदश्चाभवत्तत्र पदक्रमविभूषितः ॥ २४ ॥ यजुर्वेदश्च वृत्ताढ्य ओङ्कारवदनोज्ज्वलः । स्थितो यज्ञार्थसंपृक्तसूक्तब्राह्मणमन्त्रवान् ॥ २५ ॥ सामवेदश्च वृत्ताढ्यः सर्वगेयपुरःसरः । विश्वावस्वादिभिः सार्द्धं गन्धर्वैः सम्भृतोऽभवत् ॥ २६ ॥ ब्रह्म वेदस्तथा घोरैः कृत्याविधिभिरन्वितः । प्रत्यङ्गिरसयोगैश्च द्विशरीरशिरोऽभवत् ॥ २७ ॥ लक्षणानि स्वराः स्तोभा निरुक्तस्वरभक्तयः । आश्रयस्तु वषट्कारो निग्रहप्रग्रहावपि ॥ २८ ॥ दीप्ता दीप्तिरिलादेवी दिशः प्रदिशगीश्वराः । देवकन्याश्च पत्न्यश्च तथा मातर एव च ॥ २९ ॥ आयुः सर्वत एवैते देवस्य यजतो मुखे । मूर्त्तिमन्तः स्वरूपाख्या वरुणस्य वपुर्भृतः ॥ ३० ॥ स्वयम्भुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि । ब्रह्मर्षेर्भाविभूतस्य विधानाच्च न संशयः ॥ ३१ ॥ कृत्वा जुहाव स्रुग्भ्यां च स्रुवेण परिगृह्य च । आज्यवज्जुहुवाञ्चक्रे मन्त्रवच्च पितामहः ॥ ३२ ॥ ततः स जनयामास भूतग्रामं प्रजापतिः । तस्यार्वाक् तेजसस्तस्य यज्ञे लोकेषु तैजसम् । तमसाभावव्याप्यत्वं तथा सत्त्वं तथा रजः ॥ ३३ ॥ सगुणात्तेजसो नित्यमाकाशे तमसि स्थितम् । तमसस्तेजसत्वाच्च सर्वभूतानि जज्ञिरे ॥ ३४ ॥ यदा तस्मिन्नजायन्त काले पुत्रास्तु कर्मजाः । आज्यस्थाल्यामुपादाय स्वशुक्रं हुतवांश्च ह ॥ ३५ ॥ शुक्रे हुतेऽथ तस्मिंस्तु प्रादुर्भूता महर्षयः । ज्वलन्तो वपुषा युक्ताः सप्त वै प्रसवैर्गुणैः ॥ ३६ ॥ हुते चाग्नौ सकृच्छुक्रे ज्वालाया निःसृतः कविः । हिरण्यगर्भस्तं दृष्ट्वा ज्वालां भित्त्वा विनिःसृतम् । भृगुस्त्वमिति होवाच यस्मात्तस्मात्स वै भृगुः ॥ ३७ ॥ महादेवस्तथोद्भूतं दृष्ट्वा ब्राह्मणमब्रवीत् । ममैष पुत्रकामस्य दीक्षितस्य त्वयं प्रभो । विज्ञेऽथ भृगुर्देवो मम पुत्रो भवत्वयम् ॥ ३८ ॥ तथेति समनुज्ञातो महादेवः स्वयम्भुवा । पुत्रत्वे कल्पयामास महादेवस्तथा भृगुम् । वारुणा भृगव

तस्मात्तदपत्यञ्च स प्रभुः ॥ ३९ ॥ द्वितीयन्तु ततः शुक्रमङ्गारेष्वपतत्प्रभुः । अङ्गारेष्वङ्गिरोऽङ्गानि संहितानि ततोऽङ्गिराः ॥ ४० ॥ सम्भूतिं
स्य तां दृष्ट्वा वह्निर्ब्रह्माणमब्रवीत् । रेतोधास्तुभ्यमेवाहं द्वितीयोऽयं ममास्त्विति ॥ ४१ ॥ एवमस्त्विति सोऽप्युक्तो ब्रह्मणा सदसस्पतिः । तस्मादङ्गि
सश्चापि आग्नेया इति नः श्रुतम् ॥ ४२ ॥ षट्कृत्यस्तु पुनः शुक्रे ब्रह्मणा लोककारिणा । हुते समभवंस्तत्र षड्ब्रह्माण इति श्रुतिः ॥ ४३ ॥
रीचिः प्रथमस्तत्र मरीचिभ्यः समुत्थितः । क्रतौ तस्मिन् सुतो जज्ञे यतस्तस्मात्स वै क्रतुः ॥ ४४ ॥ अहं तृतीय इत्यर्थस्तस्मादत्रिः स कीर्त्यते ।
शैश्च निशितैर्भूतः पुलस्त्यस्तेन स स्मृतः ॥ ४५ ॥ केशैर्लम्बैः समुद्भूतस्तस्मात्तु पुलहः स्मृतः । वसुमध्यात्समुत्पन्नो वसुमान् वसुधाश्रयः॥४६॥
सिष्ठ इति तत्त्वज्ञैः प्रोच्यते ब्रह्मवादिभिः । इत्येते ब्रह्मणः पुत्रा मानसाः षण्महर्षयः ॥ ४७ ॥ लोकस्य सन्तानकरास्तैरिमा वर्द्धिताः प्रजाः ।
जापतय इत्येवं पठ्यन्ते ब्रह्मणः सुताः ॥ ४८ ॥ अपरे पितरो नाम एतैरेव महर्षिभिः । उत्पादिता ऋषिगणाः सप्त लोकेषु विश्रुताः ॥ ४९ ॥
रीचा भार्गवाश्चैव तथैवाङ्गिरसोऽपरे । पौलस्त्याः पौलहाश्चैव वासिष्ठाश्चैव विश्रुताः । आत्रेयाश्च गणाः प्रोक्ताः पितॄणां लोकविश्रुताः ॥ ५० ॥
ते समासतस्तात पुरैव तु गुणास्त्रयः । अपूर्वाश्च प्रकाशाश्च ज्योतिष्मन्तश्च विश्रुताः ॥ ५१ ॥ तेषां राजा यमो देवो यमैर्विहितकल्मषाः ।
परे प्रजानां पतयस्ताञ्छृणुध्वमतन्द्रिताः ॥ ५२ ॥ कर्दमः कश्यपः शेषो विक्रान्तः सुश्रुवास्तथा । बहुपुत्रः कुमारश्च विवस्वान् स शुचिश्रवाः ।
५३ ॥प्रचेतसोऽरिष्टनेमिर्बहुलश्च प्रजापतिः । इत्येवमादयोऽन्येऽपि बहवश्च प्रजेश्वराः ॥ ५४ ॥ कुशोच्चया वालखिल्याः सम्भूताः परमर्षयः ।
ोजवाः सर्वगताः सार्वभौमाश्च तेऽभवन् ॥ ५५ ॥ जाता भस्मव्यपोहिन्यां ब्रह्मर्षिगणसम्मताः । वैखानसा मुनिगणास्तपःश्रुतपरायणाः ॥ ५६ ॥
तोभ्यस्तस्य चोत्पन्नावश्विनौ रूपसम्मितौ । विदुर्जन्माक्षरजसो विमला नेत्रसम्भवाः ॥ ५७ ॥ ज्येष्ठाः प्रजानां पतयः स्रोतोभ्यस्तस्य जज्ञिरे ।
षयो रोमकूपेभ्यस्तथा स्वेदमलोद्भवाः ॥५८॥ दारुणा हि रुते मासा निर्यासाः पक्षसन्धयः । वत्सरा ये त्वहोरात्राः पित्तं ज्योतिश्च दारुणम् ॥ ५९ ॥
ं लोहितमित्याहुर्लोहितं कनकं स्मृतम् । तन्मैत्रमिति विज्ञेयं धूमश्च पशवः स्मृताः ॥ ६० ॥ येऽर्चिषस्तस्य ते रुद्रास्तथादित्याः समुद्भवाः ।
ङ्गारेभ्यः समुत्पन्ना ज्योतिषो दिव्यमानुषाः ॥ ६१ ॥ आदिमानस्य लोकस्य ब्रह्मा ब्रह्मसमुद्भवः । सर्वकामदमित्याहुस्तत्र कन्यामुदाहरन् ॥ ६२ ॥
ा सुरगुरुस्तत्र त्रिदशैः संप्रसीदति । इमे वै जनयिष्यन्ति प्रजाः सर्वाः प्रजेश्वराः ॥ ६३ ॥ सर्वे प्रजानां पतयः सर्वे चापि तपस्विनः । तत्प्रसादा
ाँल्लोकान्धारयेयुरिमाः क्रियाः ॥ ६४ ॥ द्वन्द्वं संवर्द्धयामास तव तेजोविवर्द्धनम् । देवेषु वेदविद्वांसः सर्वे राजर्षयस्तथा ॥ ६५ ॥ वेदमन्त्र

पराः सर्वे प्रजापतिगुणोद्भवाः । अनन्तं ब्रह्म सत्यञ्च तपश्च परमं भुवि ॥ ६६ ॥ सर्वे हि वयमेते च तवैव प्रसवः प्रभो । ब्रह्म च ब्राह्मणाश्चैव लोकाश्चैव चराचराः ॥ ६७ ॥ मरीचिमादितः कृत्वा देवाश्च ऋषिभिः सह । अपत्यानीह सञ्चिन्त्य तेऽपत्यङ्कामयामहे ॥ ६८ ॥ तस्मिन् यज्ञे महाभागा देवाश्च ऋषिभिः सह । एतद्वंशसमुद्भूताः स्थानकालाभिमानिनः ॥ ६९ ॥ न च तेनैव रूपेण स्थापयेयुरिमाः प्रजाः । युगादिनिधनाच्चैव स्थापयेयुरिमाः प्रजाः ॥ ७० ॥ ततोऽब्रवील्लोकगुरुः परमित्यविचारयन् । एवं देवा विनिश्चित्य मया सृष्टा न संशयः । भवतां वंशसम्भूताः पुनरेते महर्षयः ॥ ७१ ॥ तेषां भृगोः कीर्तयिष्ये वंशं पूर्वमहात्मनः । विस्तरेणानुपूर्व्या च प्रथमस्य प्रजापतेः ॥ ७२ ॥ भार्या भृगोरप्रतिमे उत्तमेऽभिजने शुभे । हिरण्यकशिपोः कन्या दिव्या नाम परिश्रुता । पुलोम्नश्चापि पौलोमी दुहिता वरवर्णिनी ॥ ७३ ॥ भृगोस्त्वजनयद्दिव्या काव्यं वेदविदां वरम् । देवासुराणामाचार्यं शुक्रङ्कविसुतं ग्रहम् ॥ ७४ ॥ स शुक्रश्चोशना ख्यातः स्मृतः काव्योऽपि नामतः । पितृणां मानसी कन्या सोमपानां यशस्विनी । शुक्रस्य भार्याङ्गी नाम विजज्ञे चतुरः सुतान् ॥ ७५ ॥ ब्राह्मेण तेजसा युक्तः स जातो ब्रह्मवित्तमः । तस्यामेव तु चत्वारः पुत्राः शुक्रस्य जज्ञिरे ॥ ७६ ॥ त्वष्टा वरूत्री द्वावेतौ शण्डामर्कौ च तावुभौ । ते तदादित्यसङ्काशा ब्रह्मकल्पाः प्रभावतः ॥ ७७ ॥ रञ्जनः पृथुरश्मिश्च विद्वान्यश्च बृहद्गिराः । वरूत्रिणः सुता ह्येते ब्रह्मिष्ठाः सुरयाजकाः ॥ ७८ ॥ इज्याधर्मविनाशार्थं मनुमेत्याभ्ययोजयन् । निरस्यमानं वै धर्मं दृष्ट्वेन्द्रो मनुमब्रवीत् ॥ ७९ ॥ एतैरेव तु कामं त्वां प्रापयिष्यामि याजनम् । श्रुत्वेन्द्रस्य तु तद्वाक्यं तस्माद्देशादपाक्रमन् ॥ ८० ॥ तिरोभूतेषु तेष्विन्द्रो धर्मपत्नीञ्च चेतनाम् । ग्रहेण मोचयित्वा तु ततः सोऽनुससार ताम् ॥ ८१ ॥ तत इन्द्रविनाशाय यतमानान् यतींस्तु तान् । तत्रागतान् पुनर्दृष्ट्वा दुष्टानिन्द्रः प्रहन्यतु । सुष्वाप देवदेवस्य वेद्यां वै दक्षिणे ततः ॥८२॥ तेषान्तु भक्ष्यमाणानां तत्र शालावृकैः सह । शीर्षाणि न्यपतंस्तानि खर्जूराण्यभवंस्ततः ॥ ८३ ॥ एवं वरूत्रिणः पुत्रा इन्द्रेण निहताः पुरा । यजन्यां देवयानी च शुक्रस्य दुहिताऽभवत् ॥८४॥ त्रिशिरा विश्वरूपस्तु त्वष्टुः पुत्रोऽभवन्महान् । विश्वरूपानुजश्चापि विश्वकर्मा यमः स्मृतः ॥८५॥ भृगोस्तु भृगवो देवा जज्ञिरे द्वादशात्मजाः । देव्यां तान्सुषुवे सर्वान्काव्यश्चैवात्मजान्प्रभुः ॥ ८६ ॥ भुवनो भावनश्चैव अन्यश्चान्यायतस्तथा । क्रतुःश्रवाश्च मूर्द्धा च व्यजयो व्यश्रुपश्च यः । प्रसवश्चाप्यजश्चैव द्वादशोऽधिपतिः स्मृतः ॥ ८७ ॥ इत्येते भृगवो देवाः स्मृता द्वादश याज्ञिकाः । पौलोम्यजनयत्पुत्रं ब्रह्मिष्ठं वशिनं विभुम् ॥ ८८ ॥ व्याधितः सोऽष्टमे मासि गर्भक्रूरेण कर्मणा । च्यवनाच्च्यवनासोऽथ चेतनस्तु प्रचेतसः । प्राचेतसाच्च्यवनक्रोधादध्यानं पुरुषादजः ॥ ८९ ॥

जनयामास पुत्रौ द्वौ सुकन्यायाञ्च भार्गवः । आत्मवानं दधीचश्च तावुभौ साधुसंमतौ ॥ ९० ॥ सारस्वतः सरस्वत्यां दधीचादोपपद्यते । रुची पत्नी महाभागा आत्मवानस्य नाहुषी ॥ ९१ ॥ तस्य ऊर्वोऽर्कपिर्जज्ञे ऊरू भित्त्वा महायशाः । और्वश्चासीदृचीकस्तु दीप्ताग्निसदृशप्रभः ॥ ९२ ॥ जमदग्निर्ऋचीकस्य सत्यवत्यां व्यजायत । भृगोश्च रुचिपर्याये रौद्रवैष्णवयोस्तथा ॥ ९३ ॥ जमनाद्वैष्णवस्याग्रेर्जमदग्निरजायत । रेणुका जमदग्नेस्तु शक्रतुल्यपराक्रमम् । ब्रह्मक्षत्रमयं रामं सुषुवेऽमिततेजसम् ॥ ९४ ॥ और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम् । तेषां पुत्रसहस्राणि भार्गवाणां परस्परात् ॥ ९५ ॥ ऋष्यन्तरेषु वै बाह्या बहवो भार्गवाः स्मृताः । वत्सो विश्वोऽश्विषेणश्च पाण्डः पथ्यः सशौनकः । गोत्रेण सप्तमा ह्येते पक्षा ज्ञेयास्तु भार्गवाः ॥ ९६ ॥ शृणुताङ्गिरसो वंशमग्नेः पुत्रस्य धीमतः । यस्यान्ववाये सम्भूता भारद्वाजाः सगौतमाः । देवाश्चाङ्गिरसो मुख्यास्त्विषुमन्तो महौजसः ॥ ९७ ॥ सुरूपा चैव मारीची कार्दमी च तथा स्वराट् । पथ्या च मानवी कन्या तिस्रो भार्यास्त्वथर्वणः । इत्येताङ्गिरसः पत्न्यस्तासु वक्ष्यामि सन्ततिम् ॥ ९८ ॥ अथर्वणस्तु दायादास्तासु जाताः कुलोद्वहाः । उत्पन्ना महता चैव तपसा भावितात्मनाम् ॥ ९९ ॥ बृहस्पतिः सुरूपायां गौतमः सुषुवे स्वराट् । अवन्ध्यं वामदेवञ्च उतथ्यमुशिजन्तथा ॥ १०० ॥ धिष्णुः पुत्रस्तु पथ्यायां संवर्त्तश्चैव मानसः । विचितश्च तथायस्यः शरद्वांश्चाप्युतथ्यजः ॥ १०१ ॥ अशिजो दीर्घतमा बृहदुक्थो वामदेवजः । धिष्णोः पुत्रः सुधन्वान ऋषभश्च सुधन्वनः ॥ १०२ ॥ रथकाराः स्मृता देवा ऋषयो ये परिश्रुताः । बृहस्पतेर्भरद्वाजो विश्रुतः सुमहायशाः ॥ १०३ ॥ आङ्गिरसस्तु संवर्त्तो देवानाङ्गिरसः शृणु । बृहस्पतेर्यवीयांसो देवा ह्याङ्गिरसः स्मृताः ॥ १०४ ॥ औरसाङ्गिरसः पुत्राः सुरूपायां विजज्ञिरे । औदार्यायुर्दनुर्दक्षो दर्भः प्राणस्तथैव च । हविष्मांश्च हविष्णुश्च क्रतुः सत्यश्च ते दश ॥ १०५ ॥ अयस्यस्तु उतथ्यश्च वामदेवस्तथोशिजः । भारद्वाजाः शांकृतिका गार्ग्यकाण्वरथीतराः ॥ १०६ ॥ मुद्गला विष्णुवृद्धाश्च हरिता वायवस्तथा । तथा भाक्षा भरद्वाजा आर्षभाः किम्भयास्तथा ॥ १०७ ॥ एते ह्याङ्गिरसः पक्षा विज्ञेया दश पञ्च च । ऋष्यन्तरेषु वै बाह्या बहवोऽङ्गिरसः स्मृताः ॥ १०८ ॥ मारीचं परिवक्ष्यामि वंशमुत्तमपूरुषम् । यस्यान्ववाये सम्भूतं जगत्स्थावरजङ्गमम् ॥ १०९ ॥ मरीचिरापश्चकमे ताभिध्यायन्प्रजेप्सया । पुत्रः सर्वगुणोपेतः प्रजावान् सुरुचिर्दितिः । संपूज्यते प्रशस्तायां मनसा भाविता प्रभुः ॥ ११० ॥ आहूताश्च ततः सर्वा आपः समवसत्प्रभुः । तासु प्रणिहितात्मानमेकः सोऽजनयत्प्रभुः ॥ १११ ॥ पुत्रमप्रतिमन्नाम्नारिष्टनेमिः प्रजापतिः । पुत्रं मरीचिं सूर्याभं प्रधौवेशो व्यजीजनत् ॥ ११२ ॥ प्रध्यायन् हि

सतां वाचं पुत्रार्थी सलिले स्थितः । सप्तवर्षसहस्राणि ततः सोऽप्रतिमोऽभवत् ॥ ११३ ॥ कश्यपः सवितुर्विद्वांस्तेन स ब्रह्मणः समः । मन्वन्तरेषु
सर्वेषु ब्राह्मणांशेन जायते ॥ ११४ ॥ कन्यानिमित्तमित्युक्ते दक्षेण कुपिताः प्रजाः । अपिबत्स तदा कश्यं कश्यं मद्यमिहोच्यते ॥ ११५ ॥ हाश्चेकसा
हि विज्ञेया ब्रह्मणः कश्य उच्यते । कश्यं मद्यं स्मृतं विप्रैः कश्यपानात्तु कश्यपः ॥ ११६ ॥ करोति नाम यद्वाचो वाचं क्रूरमुदाहृतम् । दक्षाभिशप्तः
कुपितः कश्यपस्तेन सोऽभवत् ॥ ११७ ॥ तस्माच्च कश्यपेनोक्तो ब्रह्मणा परमेष्ठिना । तस्माद्दक्षः कश्यपाय कन्यास्ताः प्रत्यपद्यत । सर्वांश्च ब्रह्मवा
दिन्यः सर्वास्ता लोकमातरः ॥ ११८ ॥ इत्येतमृषिसर्गन्तु पुण्यं यो वेद वारुणम् । आयुष्मान् पुण्यवान् शुद्धः सुखमाप्नोत्यनुत्तमम् । धारणात् श्रवणा
च्चैव सर्वपापैः प्रमुच्यते ॥ ११९ ॥ अथाब्रुवन् पुनः सर्वे मुनयो रोमहर्षणम् । विनिवृत्ते प्रजासर्गे षष्ठे वै चाक्षुषस्य ह । निसर्गः सम्प्रवृत्तोऽयं मनोर्वैव
स्वतस्य ह ॥ १२० ॥ सूत उवाच ॥ प्रजाः सृजेति व्यादिष्टः स्वयं दक्षः स्वयम्भुवा । ससर्ज दक्षो भूतानि गतिमन्ति ध्रुवाणि च । उपस्थितेऽन्तरे
ह्यस्मिन् मनोर्वैवस्वतस्य ह ॥ १२१ ॥ ततः प्रवृत्तो दक्षस्तु प्रजाः स्रष्टुश्चतुर्विधाः । जरायुजा अण्डजाश्च उद्भिज्जाः स्वेदजास्तथा ॥ १२२ ॥ दशवर्ष
सहस्राणि तप्त्वा घोरं महत्तपः । सम्भावितो योगबलैरणिमाद्यैर्विशेषतः ॥ १२३ ॥ आत्मानं व्यभजन् श्रीमान् मनुष्योरगराक्षसान् । देवासुरसगन्ध
र्वान् दिव्यसंहननप्रजान् । ईश्वरानात्मनस्तुल्यान् रूपद्रविणतेजसा ॥ १२४ ॥ तथैवान्यानि मुदितो गतिमन्ति ध्रुवाणि च । मानसान्येव भूतानि
सिसृक्षुर्विविधाः प्रजाः ॥ १२५ ॥ ऋषीन् देवान् सगन्धर्वान् मनुष्योरगराक्षसान् । यक्षभूतपिशाचांश्च वयःपशुमृगांस्तथा ॥ १२६ ॥ यदास्य
मनसा सृष्टा न व्यवर्द्धन्त ताः प्रजाः । अपध्याता भगवता महादेवेन धीमता ॥ १२७ ॥ मैथुनेन च भावेन सिसृक्षुर्विविधाः प्रजाः । असिक्नीं चावहत्
पत्नीं वीरणस्य प्रजापतेः ॥ १२८ ॥ सुतां सुमहता युक्तां तपसा लोकधारिणीम् । यया धृतमिदं सर्वं जगत् स्थावरजङ्गमम् ॥ १२९ ॥ अत्राप्युदा
हरन्तीमौ श्लोकौ प्राचेतसं प्रति । दक्षस्योद्वहतो भार्यामसिक्नीं वीरिणीं पराम् ॥ १३० ॥ कूपानां नियुतं दक्षः सर्पिणां साभिमानिनाम् । नदीगिरिषु
सर्जंस्ताः पृष्ठतोऽनुययौ प्रभुः ॥ १३१ ॥ तं दृष्ट्वा ऋषिभिः प्रोक्तं प्रतिष्ठास्यति वै प्रजाः । प्रथमात्र द्वितीया तु दक्षस्येह प्रजापतेः ॥ १३२ ॥
तथागच्छद्यथाकालं कूपानां नियुते तु सः । असिक्नीं वैरिणीं यत्र दक्षः प्राचेतसोऽवहत् ॥ १३३ ॥ अथ पुत्रसहस्रं स वैरिण्याममितौजसा ।
असिक्न्यां जनयामास दक्षः प्राचेतसः प्रभुः ॥ १२४ ॥ तांस्तु दृष्ट्वा महातेजाः स विवर्द्धयिषून् प्रजाः । देवर्षिः प्रियसंवादो नारदो ब्रह्मणः सुतः ।
नाशाय वचनं तेषां शापायैवात्मनोऽब्रवीत् ॥ १२५ ॥ यः स वै प्रोच्यते विप्रः कश्यपस्येति कृत्रिमः । दक्षशापभयाद्भीतो ब्रह्मर्षिस्तेन कर्मणा ॥ १३६ ॥

यः कश्यपसुतस्याथ परमेष्ठी व्यजायत । मा[illegible] [illegible]श्यपस्येह दक्षशापभयात् पुनः ॥ १३७ ॥ तस्मात् स कश्यपस्याथ द्वितीयं मानसोऽभवत् । स हि पूर्वसमुत्पन्नो नारदः परमेष्ठिनः ॥ १३८ ॥ येन दक्षस्य पुत्रास्ते हर्यश्वा इति विश्रुताः । निन्दार्थं नाशिताः सर्वे विनष्टाश्च न संशयः ॥ १३९ ॥ तस्योद्यतस्तदा दक्षः क्रुद्धो नाशाय वै प्रभुः । ब्रह्मर्षीन् वै पुरस्कृत्य याचितः परमेष्ठिना ॥ १४० ॥ ततोऽभिसन्धितं चक्रे दक्षस्तु परमेष्ठिना । कन्यायां नारदो मह्यं तव पुत्रो भवत्विति॥१४१॥ततो दक्षः सुतां प्रादात् प्रियां वै परमेष्ठिने । तस्मात् स नारदो जज्ञे भूयः शान्तो भयादृषिः ॥१४२॥ तदुपश्रुत्य विप्रास्ते जातकौतूहलाः पुनः । अपृच्छन् वदतां श्रेष्ठं सूतं तत्त्वार्थदर्शिनम् ॥ १४३ ॥ ऋषय ऊचुः ॥ कथं विनाशिताः पुत्रा नारदेन महात्मना । प्रजापतिसुतास्ते वै प्रजाः प्राचेतसात्मजाः ॥ १४४ ॥ स तथ्यं वचनं श्रुत्वा जिज्ञासासम्भवं शुभम् । प्रोवाच मधुरं वाक्यं तेषां सर्वगुणान्वितम् ॥ १४५ ॥ दक्षपुत्राश्च हर्यश्वा विवर्द्धयिषवः प्रजाः । समागता महावीर्या नारदस्तानुवाच ह ॥ १४६ ॥ बालिशा बत यूयं वै न प्रजानीथ भूतलम् । अन्तमूर्द्धमधश्चैव कथं स्रक्ष्यथ वै प्रजाः ॥१४७॥ किं प्रमाणन्तु मेदिन्याः स्रष्टव्यानि तथैव च । अविज्ञायेह स्रष्टव्यमन्यथा किं नु स्रक्ष्यथ । अल्पं वापि बहुर्वापि तत्र दोषस्तु दृश्यते ॥ १४८ ॥ ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशम् । वायुन्तु समनुप्राप्य गतास्ते वै पराभवम् ॥ १४९ ॥ अद्यापि न निवर्त्तन्ते भ्रमन्तो वायुमिश्रिताः । एवं वायुपथं प्राप्य भ्रमन्ते ते महर्षयः ॥१५०॥ स्वेषु पुत्रेषु नष्टेषु दक्षः प्राचेतसः पुनः । वैरिण्यामेव पुत्राणां सहस्रमसृजत् प्रभुः ॥ १५१ ॥ प्रजा विवर्द्धयिषवः शवलाश्वाः पुनस्तु ते । पूर्वमुक्तं वचस्तत्र श्राविता नारदेन ह ॥ १५२ ॥ तच्छ्रुत्वा वचनं सर्वे कुमारास्ते महौजसः । अन्योऽन्यमूचुस्ते सर्वे सम्यगाह महानृषिः । भ्रातॄणां पदवी चैव गन्तव्या नात्र संशयः ॥ १५३ ॥ ज्ञात्वा प्रमाणं पृथ्व्याश्च सुखं स्रक्ष्यामहे प्रजाः । तेऽपि तेनैव मार्गेण प्रयाताः सर्वतोदिशम् । अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः ॥ १५४ ॥ ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे रतः । प्रयातो नश्यति तथा तन्न कार्यं विजानता ॥ १५५ ॥ नष्टेषु शवलाश्वेषु दक्षः क्रुद्धोऽभवद्विभुः । नारदं नाशमेहीति गर्भवासं वसेति च ॥ १५६ ॥ तथा तेष्वपि नष्टेषु महात्मसु पुरा किल । षष्टिकन्याऽसृजद्दक्षो वैरिण्यामेव विश्रुताः ॥ १५७ ॥ तास्तदा प्रतिजग्राह पत्न्यर्थं कश्यपः प्रभुः । धर्मः सोमस्तु भगवांस्तथैवान्ये महर्षयः ॥ १५८ ॥ इमां विसृष्टिं दक्षस्य कृत्स्नां यो वेद तत्त्वतः । आयुष्मान् कीर्त्तिमान् धन्यः प्रजावांश्च भवत्युत ॥ १५९ ॥ इति श्रीमहापुराणे वायुप्रोक्ते प्रजापतिवंशानुकीर्त्तनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ ७ ॥ ऋषय ऊचुः ॥ देवानां दानवानाञ्च दैत्यानाञ्चैव सर्वशः । उत्पत्तिं विस्तरेणेह ब्रूहि वैवस्वतेऽन्तरे ॥ १ ॥ सूत उवाच ॥

धर्मस्य तावद्वक्ष्यामि निसर्गं तं निबोधत । अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती ॥ २ ॥ सङ्कल्पा च मुहूर्ता च साध्या विश्वा तथैव च ।
धर्मपत्न्यो दश त्वेता दक्षः प्राचेतसो ददौ ॥ ३ ॥ साध्या पुत्रांस्तु धर्मस्य साध्यान् द्वादश जज्ञिरे । साध्या नाम महाभागाश्छन्दजा यज्ञभागिनः ।
देवेभ्यस्तान् परान् देवान् देवज्ञाः परिचक्षिरे ॥ ४ ॥ ब्रह्मणो वै मुखात् सृष्टा जया देवाः प्रजेप्सया । सर्वे मन्त्रशरीरास्ते स्मृता मन्वन्तरेष्विह ॥ ५ ॥
दर्शश्च पौर्णमासश्च बृहद्यच्च रथन्तरम् । चित्तिश्चैव विचित्तिश्च आकूतिः कूतिरेव च ॥ ६ ॥ विज्ञाता चैव विज्ञातो मनो यज्ञश्च ते स्मृताः । नामा
न्येतानि तेषां वै जयानां प्रथितानि च ॥ ७ ॥ ब्रह्मशापेन ते जाताः पुनः स्वायम्भुवे जिताः । स्वारोचिषे वै तुषिताः सत्याश्चैवोत्तमे पुनः ॥ ८ ॥
तामसे हरयो नाम वैकुण्ठा रैवतान्तरे । साध्याश्च चाक्षुषे नाम्ना छन्दजा जज्ञिरे सुराः ॥ ९ ॥ धर्मपुत्रा महाभागाः साध्या ये द्वादशामराः । पूर्वं स्म
अनुसूयन्ते चाक्षुषस्यान्तरे मनोः ॥ १० ॥ स्वारोचिषेऽन्तरेऽतीता देवा ये वै महौजसः । तुषिता नाम तेऽन्योन्यमूचुर्वै चाक्षुषेऽन्तरे ॥ ११ ॥ किञ्चि
च्छिष्टे तदा तस्मिन् देवा वै तुषिताऽब्रुवन् । इतरेतरं महाभागान् वयं साध्यान् प्रविश्य वै । मन्वन्तरे भविष्यामस्तन्नः श्रेयो भविष्यति ॥ १२ ॥
एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः । तस्माद्द्वादशसम्भूतान् धर्मान् स्वायम्भुवात् पुनः ॥ १३ ॥ नरनारायणौ तत्र जज्ञाते पुनरेव हि । विप
श्चिदिन्द्रो यश्चासीत्तथा सत्यो हरिश्च तौ । स्वारोचिषेऽन्तरे पूर्वमास्तान्तौ तुषितौ सुरौ ॥ १४ ॥ तुषितानान्तु साध्यत्वे नामान्येतानि वक्ष्यते ।
मनोऽनुमन्ता प्राणश्च नरो यानश्च वीर्यवान् ॥ १५ ॥ चित्तिर्हयो नयश्चैव हंसो नारायणस्तथा । प्रभवोऽथ विभुश्चैव साध्या द्वादश जज्ञिरे ॥ १६ ॥
स्वायम्भुवेऽन्तरे पूर्वं ततः स्वारोचिषे पुनः । नामान्यासन् पुनस्तानि तुषितानां निबोधत ॥ १७ ॥ प्राणोऽपानस्तथोदानः समानो व्यान एव च ।
चक्षुः श्रोत्रं तथा घ्राणः स्पर्शो बुद्धिर्मनस्तथा ॥ १८ ॥ प्राणापानावुदानश्च समानो व्यान एव च । नामान्येतानि पूर्वन्तु तुषितानां स्मृतानि ह ॥ १९ ॥
वसोस्तु दसवः पुत्राः साध्यानामनुजाः स्मृताः । धरो ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥ २० ॥
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा । ध्रुवपुत्रो भवो नाम्ना कालो लोकप्रकालनः ॥ २१ ॥ सोमस्य भगवान् वर्चा बुधश्च ग्रहबोधनः । रोहिण्यां
तौ समुत्पन्नौ त्रिषु लोकेषु विश्रुतौ ॥ २२ ॥ धारोर्मिकलिलाश्चैव त्रयश्चन्द्रमसः सुताः । आपस्य पुत्रो वैतण्डयः शमः शान्तस्तथैव च ॥ २३ ॥
स्कन्दः सनत्कुमारश्च जज्ञे पादेन तेजसः । अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत । तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः ॥ २४ ॥
अनिलस्य शिवा भार्या तस्याः पुत्रो मनोजवः । अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य च ॥ २५ ॥ प्रत्यूषस्य विदुः पुत्र ऋषिर्नाम्ना तु देवलः । द्वौ

पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ॥ २६ ॥ बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी। योगसिद्धा जगत्कृत्स्नमसक्ता विचरत्युत ॥ २७ ॥
प्रभासस्य तु या भार्या वसूनामष्टमस्य ह । विश्वकर्मा सुतस्तस्या जातः शिल्पिप्रजापतिः ॥ २८ ॥ स कर्त्ता सर्वशिल्पानां त्रिदशानाञ्च वर्द्धकिः ।
भूषणानाञ्च सर्वेषां कर्त्ता कारयिता च सः ॥ २९ ॥ सर्वेषाञ्च विमानानि दैवतानां करोति सः । मानुषाश्चोपजीवन्ति यस्य शिल्पानि शिल्पिनः ॥३०॥
विश्वेदेवास्तु विश्वाया जज्ञिरे दश विश्रुताः । क्रतुर्दक्षः श्रवः सत्यः कालः कामो धुनिस्तथा ॥३१ ॥ कुरुवान् प्रभवांश्चैव रोचमानश्च ते दश । धर्मपुत्राः
स्मृता ह्येते विश्वायां जज्ञिरे शुभाः ॥ ३२ ॥ मरुत्वत्यां मरुत्वन्तो भानवो भानुजाः स्मृताः । मुहूर्त्तांश्च मुहूर्त्तायां घोषं लम्बा व्यजायत ॥ ३३ ॥
सङ्कल्पायान्तु संजज्ञे विद्वान् सङ्कल्प एव च । नागवीथ्यस्तु जाम्याश्च पथत्रयसमाश्रिताः ॥ ३४ ॥ पृथिवीविषयं सर्वमरुन्धत्यां व्यजायत । एष
सर्गः समाख्यातो विद्वान् धर्मस्य शाश्वतः ॥ ३५ ॥ मुहूर्त्तांश्चैव तिथ्यश्च पतिभिः सह सुव्रताः । नामतः संप्रवक्ष्यामि ब्रुवतो मे निबोधत ॥ ३६ ॥
अहोरात्रविभागश्च नक्षत्राणि समासतः । मुहूर्त्ताः सर्वनक्षत्रा अहोरात्रविदस्तथा ॥ ३७ ॥ अहोरात्रकलानान्तु षट्शतीत्यधिका स्मृता । रवेर्गतिवि
शेषेण सर्वेषु ऋतुमिच्छतः॥३८॥ ततो वेदविदश्चैतां तिथिमिच्छन्ति पर्वसु । अविशेषेषु कालेषु योज्यः स पितृदानतः ॥ ३९ ॥ रौद्रः सार्वस्तथा मैत्रः
पिण्डयवासव एव च । आप्योऽथ वैश्वदेवश्च ब्राह्मो मध्याह्नसंश्रितः ॥४० ॥ प्राजापत्यस्तथा ऐन्द्रस्तथेन्द्रो निर्ऋतिस्तथा। वारुणश्च तथार्यम्णो भाग
श्चापि दिनाश्रिताः ॥४१॥ एते दिनमुहूर्त्तांश्च दिवाकरविनिर्मिताः । शङ्कुच्छायाविशेषेण वेदितव्याः प्रमाणतः ॥ ४२ ॥ अजास्तथाहिर्बुध्न्यश्च पूषा हि
यमदेवताः॥ आग्नेयश्चापि विज्ञेयः प्राजापत्यस्तथैव च ॥४३॥ ब्रह्मसौम्यस्तथादित्यो बार्हस्पत्योऽथ वैष्णवः । सावित्रोऽथ तथा त्वाष्ट्रो वायव्यश्चेति संग्रहः
॥ ४४ ॥ एकरात्रिमुहूर्त्ताः स्युः क्रमोक्ता दश पञ्च च । इन्दोर्गत्युदया ज्ञेया नालिकाः पादिकास्तथा । कालावस्थास्त्रि.ास्त्वेते मुहूर्ता देवताः स्मृताः
॥ ४५ ॥ सर्वग्रहाणां त्रीण्येव स्थानानि विहितानि च । दक्षिणोत्तरमध्यानि तानि विद्याद्यथाक्रमम् ॥ ४६ ॥ स्थानं जारद्गवं मध्ये तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः ॥ ४७ ॥ अश्विनी कृत्तिका याम्या नागवीथिरिति स्मृता । पुष्योऽश्लेषा पुनर्वसु वीथिरैरावती मता । तिस्रस्तु
वीथयो ह्येता उत्तरे मार्ग उच्यते ॥ ४८ ॥ पूर्वोत्तरे फाल्गुन्यौ च मघा चैवार्यमी स्मृता । हस्तचित्रे तथा स्वाती गोवीथीत्यभिशब्दिता ॥ ४९ ॥
ज्येष्ठा विशाखानुराधा वीथी जारद्गवी स्मृता। एतास्तु वीथयस्तिस्रो मध्यमे मार्ग उच्यते ॥ ५० ॥ मूलश्चाषाढे द्वे चापि अजवीथ्यभिशब्दिता । श्रवणञ्च
धनिष्ठा च गार्गी शतभिषक्तथा ॥५१ ॥ वैश्वानरी भाद्रपदे रेवती चैव कीर्त्तिता । स्मृता वीथ्यस्तु तिस्रस्ता मार्गे वै दक्षिणे बुधैः ॥ ५२ ॥ सप्तविंशत्तु याः

कन्या दक्षः सोमाय ता ददौ। सर्वा नक्षत्रनाम्न्यस्ता ज्योतिषे चैव कीर्त्तिताः। तासामपत्यान्यभवन् दीप्तान्यमिततेजसा ॥ ५३ ॥ यास्तु शेषास्तदा
कन्याः प्रतिजग्राह कश्यपः। चतुर्दश महाभागाः सर्वास्ता लोकमातरः ॥ ५४ ॥ अदितिर्दितिर्दनुः काला अरिष्टा सुरसा तथा। सुरभिर्विनता चैव
ताम्रा क्रोधवशा इरा। कद्रुर्मुनिश्च धर्मज्ञः प्रजास्तासां निबोधत ॥ ५५ ॥ चारिष्णवेऽन्तरेऽतीते ये द्वादश पुरोगमाः। वैकुण्ठा नाम ते सात्त्या बभूवु
श्चाक्षुषेऽन्तरे ॥ ५६ ॥ उपस्थितेऽन्तरे ह्यस्मिन् पुनर्वैवस्वतस्य ह। आराधिता ह्यदित्या ते समेत्याहुः परस्परम् ॥ ५७॥ एतामेव महाभागामदितिं
संप्रविश्य वै। वैवस्वतेऽन्तरे ह्यस्मिन् योगादर्द्धेन चेतसः ॥ ५८ ॥ गच्छामः पुत्रतामस्यास्तन्नः श्रेयो भविष्यति। अदित्यास्तु प्रसूतानामादि
त्यत्वं भविष्यति ॥ ५९ ॥ एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः। जज्ञिरे द्वादशादित्या मारीचात् कश्यपात्पुनः ॥ ६० ॥ शतक्रतुश्च विष्णुश्च
जज्ञाते पुनरेव हि। वैवस्वतेऽन्तरे ह्यस्मिन् नरनारायणौ सुरौ ॥ ६१ ॥ तेषामपि हि देवानां निधनोत्पत्तिरुच्यते। यथा सूर्यस्य लोकेऽस्मिन् उदया
स्तमयावुभौ। प्रजापतेश्च विष्णोश्च भवस्य च महात्मनः ॥ ६२ ॥ श्रेष्ठानुश्रविके यस्माच्छक्ताः शब्दादिलक्षणे। अष्टात्मकेऽणिमाद्ये च तस्मात्ते
जज्ञिरे सुराः ॥ ६३ ॥ इत्येष विषये रागः सम्भूत्याः कारणं स्मृतम्। ब्रह्मशापेन सम्भूता जयाः स्वायम्भुवे जिताः ॥ ६४ ॥ स्वारोचिषे वै तुषिताः
सत्याश्चैवोत्तमे पुनः। तामसे हरयो देवा जाताश्चारिष्णवे तु वै। वैकुण्ठाश्चाक्षुषे साध्या आदित्याः साम्प्रते पुनः ॥६५॥ धाताऽर्यमा च मित्रश्च वरुणों
ऽशो भगस्तथा। इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः॥६६॥ततस्त्वष्टा ततो विष्णुरजघन्योऽजघन्यजः। इत्येते द्वादशादित्याः कश्यपस्य
सुताः स्मृताः ॥ ६७ ॥ सुरभी कश्यपाद्रुद्रानेकादश विजज्ञिरे। महादेवप्रसादेन तपसा भाविता सती ॥ ६८ ॥ अङ्गारकं तथा सर्पं निर्ऋतिं सदस
स्पतिम्। अजैकपादहिर्बुध्न्यमूर्द्धकेतुं ज्वरं तथा ॥ ६९ ॥ भुवनञ्चेश्वरं मृत्युं कपालञ्चैव विश्रुतम्। देवानेकादशैतांस्तु रुद्रांस्त्रिभुवनेश्वरान्। तपसा
तेन महता सुरभी तानजीजनत् ॥ ७० ॥ ततो दुहितरावन्ये सुरभी द्वे व्यजायत। रोहिणी चैव रुद्राभा गान्धारी च यशस्विनी ॥ ७१ ॥ रोहिण्यां
जज्ञिरे कन्याश्चतस्रो लोकविश्रुताः। सुरूपा हंसकीला च भद्रा कामदुघा तथा। सुषुवे कामदुघा तु सुरूपा तनयद्वयम् ॥ ७२ ॥ हंसकीला नृप
मृषीन् भद्रायास्तु व्यजायत। विश्रुतास्तु महाभागा गन्धर्वा वाजिनः सुताः ॥ ७३ ॥ उच्चैःश्रवास्तदा जाताः खेचरास्ते मनोजवाः। श्वेताः श्येनाः
पिशङ्गाश्च सारङ्गा हरितार्जुनाः। रुद्रा देवोपवाह्यास्ते गन्धर्वयोनयो हयाः ॥ ७४ ॥ भूयो जज्ञे सुरभ्यास्तु श्रीमान् चन्द्राभसुप्रभः ॥ स्रग्वी
ककुद्मी द्युतिमानमृतालयसम्भवः। सुरभ्यनुमते दत्तो ध्वजो माहेश्वरस्तु सः ॥ ७५ ॥ इत्येते कश्यपसुता रुद्रादित्याः प्रकीर्त्तिताः। धर्मपुत्राः

स्मृताः साध्या विश्वे च वसवस्तथा ॥ ७६ ॥ अरिष्टनेमिपत्नीनामपत्यानीह षोडश । बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः । प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः ॥ ७७ ॥ कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः स्मृताः । एते युगसहस्रान्ते जायन्ते पुनरेव हि ॥७८॥ सर्वे देवगणा विप्रास्त्रयस्त्रिंशत्तु छन्दजाः । एतेषामपि देवानां निरोधोत्पत्तिरुच्यते ॥ ७९ ॥ यथा सूर्यस्य लोकेऽस्मिन् उदयास्तमयावुभौ । एते देवनिकायास्ते सम्भवन्ति युगे युगे ॥ ८० ॥ ऋषय ऊचुः ॥ साध्याश्च वसवो विश्वे रुद्रादित्यास्तथैव च । अभिजात्या प्रभावैश्च कर्मभिश्चैव विश्रुताः ॥ ८१ ॥ प्रजापतेश्च विष्णोश्च भवस्य च महात्मनः । अन्तरं ज्ञातुमिच्छामो यश्च यस्माद्विशिष्यते ॥ ८२ ॥ यश्च यस्मात् प्रभवति यश्च यस्मिन् प्रतिष्ठितः । ज्यायान्यो मध्यमश्चैव कनीयान् यश्च तेषु वै ॥ ८३ ॥ प्रधानभूतो यस्तेषां गुणभूतश्च तेषु यः । कर्मभिश्चाभिजात्या च प्रभावेण च यो महान् । एतत् प्रब्रूहि नः सर्वं त्वं हि वेत्थ यथायथम् ॥ ८४ ॥ सूत उवाच ॥ अत्र वो वर्णयिष्येहमन्तरन्तेषु यत् स्मृतम् । यद्ब्रह्मविष्णुरुद्राणां शृणुध्वं मे विवक्षतः ॥ ८५ ॥ राजसी तामसी चैव सात्त्विकी चैव ताः स्मृताः । तन्वः स्वयम्भुवः प्रोक्ताः काले काले भवन्ति याः ॥ ८६ ॥ एतासामन्तरं वक्तुं नैव शक्यं द्विजोत्तमाः । गुणवृद्धिनिबन्धत्वाद्विधानुग्रहबन्धतः ॥ ८७ ॥ प्रवृत्तिश्च निवृत्तिश्च गुणवृद्धिमिह द्विजाः । यथाशक्ति प्रवक्ष्यामि तनूनां तन्निबोधत ॥ ८८ ॥ एका तु कुरुते तासां राजसी सर्वतः प्रजाः । एका चैवार्णवस्था तु सानुगृह्णाति सात्त्विकी । एका सा क्षिपते काले तामसी ग्रसते प्रजाः ॥ ८९ ॥ रजसा तु समुद्रिक्तो ब्रह्मा सम्भवते यदा । पुरुषाख्या तदा तस्य सात्त्विकी विनिवर्त्तते ॥ ९० ॥ यदा भवति कालात्मा उद्रेकात्तमसस्तु सः । ब्रह्माख्या सा तदा त्वस्य राजसी विनिवर्त्तते ॥ ९१ ॥ सत्त्वोद्रेकात्तु पुरुषो यदा भवति स प्रभुः । कालाख्या सा तदा तस्य पुनर्न भवतीति वै ॥ ९२ ॥ क्रमात्तस्य निवर्त्तन्ते रूपं नाम च कर्म च । त्रैलोक्ये वर्त्तमानस्य सर्वानुग्रहनिग्रहैः ॥ ९३ ॥ यदा भवति ब्रह्मा च तदा चान्तरमुच्यते । यदा च पुरुषो ब्रह्मा न चैव पुरुषस्तु सः ॥९४॥ मणिर्विभजते वर्णान् विचित्रान् स्फटिके यथा । वैमल्यादाश्रयवशात्तद्वर्णः स्यात्तदञ्जनः ॥ ९५ ॥ तदा गुणवशात्तस्य स्वयम्भोरनुरञ्जनम् । एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनम् ॥ ९६ ॥ एको भूत्वा यथा मेघः पृथक्त्वेनावतिष्ठते । रूपतो वर्णतश्चैव तथा गुणवशात्तु सः ॥ ९७ ॥ भवत्येको द्विधा चैव त्रिधा मूर्तिविनाशनात् । एको ब्रह्मान्तकृच्चैव पुरुषश्चेति ते त्रयः ॥ ९८ ॥ एकस्यैताः स्मृतास्तिस्रस्तनवस्तु स्वयम्भुवः । ब्राह्मी च पौरुषी चैव अन्तकारी च ते त्रयः ॥ ९९ ॥ तत्र या राजसी तस्य तनुः सा वै प्रजाकरी । या तामसी तु कालाख्या प्रजाक्षयकरी तु सा । सात्त्विकी पौरुषी या तु सानुग्रहकरी स्मृता ॥ १०० ॥ राजस्या ब्रह्मणोंऽशेन मरीचिः कश्यपो

ऽभवत् । तामसी चान्तकृद्या तु तदंशेनाभवद्भवः ॥ १०१ ॥ सात्त्विकी पौरुषी या सा तस्याः शोचिष्णुरुच्यते । त्रैलोक्ये ताः स्मृतास्तिस्रस्तन
वस्तु स्वयम्भुवः ॥ १०२ ॥ नानाप्रयोजनार्थां हि कालोऽवस्थां करोति यः । ब्रह्मत्वेन प्रजाः सृष्ट्वा विष्णुत्वेनानुगृह्य च । वैष्णव्यानुगृहीता
स्ता रौद्यानुग्रसते पुनः ॥ १०३ ॥ एकः स्वयम्भुवः कालस्त्रिभिस्त्रीन् वै करोति सः । सृजते चानुगृह्णाति प्रजाः संहरते तथा ॥ १०४॥ इत्येताः कथिता
स्तिस्रस्तनवस्तु स्वयम्भुवः । प्राजापत्या च रौद्री च वैष्णवी चैव ताः स्मृताः ॥ १०५ ॥ एका तनुः स्मृता वेदे धर्मशास्त्रे पुरातने । साङ्ख्ययोगपरे
र्धीरैः पृथक्त्वैकत्वदर्शिभिः । अभिजातप्रभावज्ञैर्ऋषिभिस्तत्त्वदर्शिभिः॥१०६॥एकत्वे च पृथक्त्वे च तासु भिन्नाः प्रजास्त्विह । इदं परमिदं नेति ब्रुवतो
भिन्नदर्शनाः ॥१०७॥ ब्रह्माणं कारणं केचित् केचित् प्राहुः प्रजापतिम् । केचिच्छिवं परत्वेन प्राहुर्विष्णुं तथाऽपरे । अविज्ञानेन संसक्ताः सक्ता रत्यादिचे
तसा ॥१०८॥ तत्त्वं कालश्च देशश्च कार्याण्यावेक्ष्य तत्त्वतः । कारणञ्च स्मृता ह्येता नानार्थेष्विह देवताः ॥ १०९ ॥ एकं निन्दति यस्तेषां सर्वानेव स
निन्दति । एकं प्रशंसमानस्तु सर्वानेव प्रशंसति । एकं यो वेत्ति पुरुषं तमाहुर्ब्रह्मवादिनम् ॥ ११० ॥ अद्वेषस्तु सदा कार्यो देवतासु विजानता ।
न शक्यमीश्वरं ज्ञातुमैश्वर्येण व्यवस्थितम् ॥ १११ ॥ एकात्मा स त्रिधा भूत्वा संमोहयति यः प्रजाः । एतेषाञ्च त्रयाणान्तु विचरन्त्यन्तरं जनाः
॥ ११२ ॥ जिज्ञासन्तः परीक्षन्तः सक्ता रूपाविचेतसः । इदं परमिदं नेति वदन्ति भिन्नदर्शिनः ॥ ११३ ॥ यातुधानान् विशन्त्येताः पिशाचांश्चैव
तान्नरान् । एकत्वेन पृथक्त्वेन स्वयम्भूर्व्यवतिष्ठते ॥ ११४ ॥ गुणमात्रात्मिकाभिस्तु तनुभिर्मोहयन् प्रजाः । तेष्वेकं यजते यस्तु स तदा यजते
त्रयम् ॥ ११५ ॥ तस्मादेवास्त्रयो ह्येते नैरन्तर्ये व्यवस्थिताः । तस्मात् पृथक्त्वमेकत्वसङ्ख्या सङ्ख्यागतागतम् । एकत्वं वा बहुत्वं वा तेषु को
ज्ञातुमर्हति ॥ ११६ ॥ यस्मात् सृष्ट्वानुगृह्णीते ग्रसते चैव ते प्रजाः । गुणात्मकत्वात्त्रैकाल्ये तस्मादेकः स उच्यते ॥ ११७ ॥ रुद्रं ब्रह्माणमिन्द्रञ्च लोक
पालान् ऋषीन् दनून् । देवं तमेकं बहुधा प्राहुर्नारायणं द्विजाः ॥ ११८ ॥ प्राजापत्या तनुर्या च तनुर्या चैव वैष्णवी । मन्वन्तरे च कल्पे च आव
र्त्तन्ते पुनः पुनः ॥ ११९ ॥ तेजसा यशसा बुद्ध्या श्रुतेन च बलेन च । जायन्ते तत्समाश्चैव तानपीह निबोधत ॥ १२० ॥ राजस्या ब्राह्मणोंऽशेन
मरीचिः कश्यपोऽभवत् । तामस्यास्तस्य चांशेन कालात्मा रुद्र उच्यते । सात्त्विक्याः पुरुषांशेन यज्ञो विष्णुरभूत्तदा ॥ १२१ ॥ त्रिषु कालेषु
तस्यैता ब्रह्मणस्तनवोंऽशजाः । कालो भूत्वा पुनश्चासौ रुद्रः संहरते प्रजाः ॥ १२२ ॥ सम्प्राप्ते चैव कल्पान्ते सप्तरश्मिर्दिवाकरः । भूत्वा संवर्त्तका
दित्यो लोकांस्त्रीन् स तदादहत् ॥ १२३ ॥ विष्णुः प्रजानुगृह्णाति नामरूपविपर्यये । तस्यान्तस्यामवस्थायां तत्तदुत्पत्तिकारणम् ॥ १२४ ॥

सत्त्वोद्रिक्ता तु या प्रोक्ता ब्रह्मणः पौरुषी तनुः। तस्यांशेन विजज्ञे स इह स्वायम्भुवेऽन्तरे। आकूत्यां मनसो देव उत्पन्नः प्रथमे विभुः ॥ १२५ ॥
ततः पुनः स वै देवो प्राप्ते स्वारोचिषेऽन्तरे। तुषितायां समुत्पन्नो ह्यजितस्तुषितैः सह ॥ १२६ ॥ औत्तमे चान्तरे चैव तुषितस्तु विदुः स
वै। वशवर्त्तिभिरुत्पन्नो वशवर्त्ती हरिः पुनः ॥ १२७ ॥ सत्यायामभवत्सत्यः सत्यैः सह सुरोत्तमैः। तामसस्यान्तरे चापि सम्प्राप्ते पुनरेव
हि। भार्यायां हरिभिः सार्द्धं हरिरेव बभूव ह ॥ १२८ ॥ चारिष्णवेऽन्तरे चापि हरिर्देवः पुनस्तु सः। वैकुण्ठायामसौ जज्ञे ह्यभूतर
जसैः सह। वैकुण्ठः स पुनर्देवः सम्प्राप्ते चाक्षुषेऽन्तरे ॥ १२९ ॥ धर्मो नारायणः साध्यः साध्यैः सह सुरैरभूत्। स तु नारायणः
साध्यः प्राप्ते वैवस्वतेऽन्तरे ॥ १३० ॥ मारीचात् कश्यपाद्विष्णुरदित्यां सम्बभूव ह। त्रिभिः क्रमैरिमान् लोकान् जित्वा विष्णुरुरुक्रमम् ॥ १३१ ॥
प्रत्यपादयदिन्द्राय देवेभ्यश्चैव स प्रभुः। इत्येतास्तनवस्तस्य व्यतीताः सप्त सप्तसु। मन्वन्तरेष्वतीतेषु याभिः संरक्षिताः प्रजाः ॥ १३२ ॥ तस्माद्विष्ट
मिदं सर्वं वामनेनेह जायता। तस्मात्स वै स्मृतो विष्णुर्विशेर्धातोः प्रवेशनात् ॥ १३३ ॥ इत्येते ब्रह्मणश्चैव वामनस्य महात्मनः। एकत्वञ्च पृथक्त्वञ्च
विशिष्टत्वञ्च कीर्त्तितम् ॥ १३४ ॥ देवतानामिहांशेन जायन्ते यास्तु देवताः। तासान्तास्तेजसा बुद्ध्या श्रुतेन च बलेन च। जायन्ते तत्समाश्चैव
ता वै तेषामनुग्रहात् ॥ १३५ ॥ यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा। तत्तद्देवावगच्छध्वं विष्णोस्तेजोंऽशसम्भवम् ॥ १३६ ॥ स एवं जायतेंऽशेन
केचिदिच्छान्ति मानवाः। ततोऽपरे ब्रुवन्तीममन्योन्यांशेन जायते ॥ १३७ ॥ एवं विवदमानास्ते दृष्ट्वा तान्वै ब्रुवन्ति ह। यस्मान्न विद्यते भेदो
मनसश्चेतसश्च ह। तस्मादनुग्रहास्तेषां क्षेत्रज्ञास्ते भवन्त्युत ॥ १३८ ॥ एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः। भूत्वा यस्माच्च बहुधा भवत्येकः
पुनस्तु सः ॥ १३९ ॥ तस्मात्सुमनसो भेदाज्जायन्ते तेजसश्च ह। मन्वन्तरेषु सर्वेषु प्रजाः स्थावरजङ्गमाः। सर्गादौ सकृदुत्पन्नास्तिष्ठन्तीह प्रशं
सया ॥ १४० ॥ प्राप्ते प्राप्ते तु कल्पान्ते रुद्रः संहरति प्रजाः। जायन्ते मोहयन्तोऽन्यानीश्वरा योगमायया ॥ १४१ ॥ ऐश्वर्येण चरन्तस्ते मोहयन्ति
ह्यनीश्वराः। तस्माद्दोषप्रचारेषु युक्तायुक्तं न विद्यते ॥ १४२ ॥ भूतापवादिनो दुष्टा मध्यस्था भूतभाविनः। भूतापवादिनः शक्तास्त्रयो वेदाः प्रवादिनाम्
॥ १४३ ॥ दृढपूर्वश्रुतत्वाच्च प्रवादाच्चैव लौकिकात्। चतुर्भिः कारणैरेभिर्यथातत्त्वं न विन्दति ॥ १४४ ॥ पूर्वमर्थान्तरे न्यस्ताः कालान्तरगता अपि।
तेनान्यत् सन्तमप्यर्थं द्वेषान्न प्रतिपद्यते ॥ १४५ ॥ दर्शनां द्रव्यभूतो यो गुणभूतस्तु तेषु यः। कर्मणां मनसां कर्त्ता अभिजात्या च यो महान्।
श्रुतज्ञैः कारणैरेतैश्चतुर्भिः परिकीर्त्यते ॥ १४६ ॥ अशक्तरुष्टो जानाति देवताः प्रविभागशः। इमौ चोदाहरन्त्यत्र श्लोकौ योगेश्वरं प्रति ॥ १४७ ॥

आत्मनः प्रतिरूपाणि परेषाञ्च सहस्रशः । कुर्याद्योगवलम्प्राप्य तैश्च सर्वैः सहाचरेत् ॥ १४८ ॥ प्राप्नुयाद्विषयांश्चैव तथैवोग्रतपश्चरन् । संहरेच्च पुनः
सर्वान् सूर्यतेजो गुणानिव ॥ १४९॥ इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम पञ्चमोऽध्यायः ॥ ५ ॥ ७॥ ऋषय ऊचुः ॥ एतच्छ्रुत्वा
वचस्तस्य नैमिषेयास्तपस्विनः । पप्रच्छुर्ऋषयः श्रेष्ठं वचनस्य यथाक्रमम् ॥ १ ॥ सप्तस्विह कथं देवा जाता मन्वन्तरेष्विह । इन्द्रविष्णुप्रधानास्ते
आदित्यास्तु महौजसः । एतत् प्रब्रूहि नः सर्वं विस्तराद्रोमहर्षण ॥२॥ एवमुक्तस्तदा सूतो विनयी ब्रह्मवादिभिः। उवाच वदतां श्रेष्ठो यथा पृष्टो महर्षिभिः
॥ ३ ॥ सूत उवाच ॥ ब्रह्मणो वै मुखात् सृष्टा यथा देवाः प्रजेप्सया । सर्वे मन्त्रशरीरास्ते स्मृता मन्वन्तरेष्विह ॥ ४ ॥ दर्शश्च पौर्णमासश्च बृहद्यच्च रथ
न्तरम् । आकूतः प्रथमस्तेषां ततस्त्वाकूतिरेव च ॥ ५ ॥ वित्तिश्चैव सुवित्तिश्च आकूतिः कूतिरेव च । अधीष्टस्तु ततो ज्ञेयः अधीतिश्चैव तत्त्वतः ।
विज्ञातिश्चैव विज्ञातो मानवो ये च द्वादश ॥ ६ ॥ ज्ञेयो द्वादशपुत्रश्च यश्चाब्देन समाजयेत् । तं दृष्ट्वा चाब्रवीद्ब्रह्मा जया देवानसूयत ॥ ७ ॥ दारा
ग्निहोत्रसंयोगे मिथ्यामारभतेति च । एवमुक्त्वा तु तं ब्रह्मा तत्रैवान्तरधीयत ॥ ८॥ ततस्ते नाभ्यनन्दन्त तद्वाक्यं परमेष्ठिनः । सत्यस्येह तु कर्माणि
वाङ्मनःकर्मजानि तु ॥ ९ ॥ य एवाप्यवतिष्ठन्ते दोषं दृष्ट्वा तु कर्मसु । क्षयातिशययुक्तन्तु ते दृष्ट्वा कर्मणां फलम् ॥ १० ॥ जुगुप्सन्तः प्रसूतिञ्च
निस्तन्द्रा निर्ममाभवन् । अजस्रं कांक्षमाणास्ते विरक्ता दोषदर्शिनः ॥ ११ ॥ अर्थं धर्मञ्च कामञ्च हित्वा ते वै व्यवस्थिताः । पौरुषं ज्ञानमास्थाय तेजः
संक्षिप्य चास्थिताः ॥१२॥ तेषाञ्च तमभिप्रायं ज्ञात्वा ब्रह्मा चुकोप ह । तानब्रवीत्तदा ब्रह्मा निरुत्साहात् सुरानथ ॥१३॥ प्रजार्थमिह यूयं वै प्रजःस्रष्टा
ऽस्मि नान्यथा । प्रसूयध्वं जयध्वञ्चेत्युक्तवानस्मि यत् पुरा ॥१४॥ यस्माद्वाक्यमनादृत्य मम वैराग्यमास्थिताः । जुगुप्समानाः स्वं जन्म सन्ततिं नाभि
नन्दथ॥१५॥कर्मणाञ्च कृतो न्यासो ह्यमृतत्त्वाभिकांक्षया । तस्माद्यूयमनादृत्य सप्तकृत्वस्तु यास्यथ ॥१६॥ ते शप्ता ब्रह्मणा देवा जयास्तं वै प्रसादयन् ।
क्षमास्माकं महादेव यदज्ञानात् कृतं विभो ॥ १७ ॥ प्रणिपत्य सानुनयं ब्रह्मा तानब्रवीत् पुनः । लोके मयाननुज्ञातः कः स्वातन्त्र्यमिहार्हसि ॥ १८ ॥
मया परिगतं सर्वं कथमच्छन्दतो मम । प्रतिपत्स्यन्ति भूतानि शुभं वा यदि वाऽशुभम् ॥ १९ ॥ लोके यदस्ति किञ्चिद्धि सत्त्वासत्त्वव्यवस्थितम् ।
बुद्ध्यात्मना मया व्याप्तं को मां लोकेऽतिसन्धयेत् ॥ २० ॥ भूतानां तर्कितं यच्च यच्चाप्येषां विधारितम् । तथा विचारितं यच्च तत्सर्वं विदितं मम
॥ २१ ॥ मया स्थितमिदं सर्वं जगत् स्थावरजङ्गमम् । आशामयेन तत्त्वेन कथं छेत्तुमिहोत्सहे ॥२२ ॥ यस्माच्चाहं विवृत्तो वै सर्गार्थमिह नान्यथा ।
इह कर्माण्यनारभ्य को मे छन्दाद्विमोक्ष्यते ॥ २३ ॥ परिभाष्य ततो देवान् जयान् वै नष्टचेतसः । अब्रवीत्स पुनस्तान् वै धृतान् दण्डे

ापतिः ॥ २४ ॥ यस्मान्ममाभिसन्धाय सन्न्यासो वः कृतः पुरा । यस्मात्त विफलोऽयत्नो ह्यपारस्त्वेष यः कृतः । भविताऽतः सुखोदर्को देवा
षु जायताम् ॥ २५ ॥ आत्मच्छन्देन वो जन्म भविष्यति सुरोत्तमाः । मन्वन्तरेषु संमूढाः षट्सु सर्वे गमिष्यथ ॥ २६ ॥ वैवस्वतान्तेषु सुरास्तथा
यम्भुवादिषु । तान् ज्ञात्वा ब्रह्मणा तत्र श्लोको गीतः पुरातनः ॥ २७ ॥ त्रयीं विद्यां ब्रह्मचर्यं प्रसूतिं श्राद्धमेव च । यज्ञञ्चैव तु दानञ्च एषामेव
र्वताम् । स हि स्म विरजा भूत्वा वसतेऽन्यप्रशंसया ॥ २८ ॥ स एवं श्लोकं दृष्ट्वा तु जया देवानथाब्रवीत् । वैवस्वतेऽन्तरेऽतीते मत्समीपमिहे
॥ २९ ॥ ततो यूयं मया सार्द्धं सिद्धिं प्राप्स्यथ शाश्वतीम् । एवमुक्त्वा तु तान् ब्रह्मा तत्रैवान्तरधीयत ॥ ३० ॥ ततो देवास्तिरोभूते ईश्वरे ह्यकु
यम् । प्रपन्ना अणिमाद्यैश्च युक्ता योगबलान्विताः ॥ ३१ ॥ ततस्तेषान्तु यास्तन्वस्ताऽभवन् द्वादश ह्रदाः । जया इति समाख्याता जाता
धेसान्निभाः ॥ ३२ ॥ ततः स्वायम्भुवे तस्मिन् सर्गे ते जज्ञिरे सुराः । अजितायां रुचेः पुत्रा अजिता द्वादशात्मकः ॥ ३३ ॥ विधिश्च मुनयश्चैव
नन्दोऽव्ययस्तथा । प्राणोऽपानः सुधामा च क्रतुशक्तिव्यवस्थिताः । इत्येते मानसाः सर्वे अजिता द्वादश स्मृताः ॥ ३४ ॥ ते च यज्ञे सुरैः
यज्ञभाजस्तदा स्मृताः । स्वायम्भुवेऽन्तरे पूर्वं ततः स्वारोचिषे पुनः । तुषितायां समुत्पन्नाः पुनः पुत्राः स्वरोचिषः ॥ ३५ ॥ तुषिता नाम ते
प्राणाख्या याज्ञिकाः सुराः । पुनस्ते तुषिता देवा उत्तमे त्वन्तरे स्वयम् ॥ ३६ ॥ उत्तमस्य तु ते पुत्राः सत्यायां जज्ञिरे शुभाः । ततः सत्याः
देवा उत्तमे चान्तरे तदा ॥ ३७ ॥ अभजन् यज्ञभाजस्ते तृतीये द्वापरान्तरे । ते तु सत्याः पुनर्देवाः सम्प्राप्ते तामसेऽन्तरे ॥ ३८॥ हर्या ये
पुत्रा जज्ञिरे द्वादशैव तु । हरयो नाम ते देवा यज्ञभाजस्तथाऽभवन् ॥ ३९ ॥ ततस्ते हरयो देवाः प्राप्ते चारिष्णवेऽन्तरे । वैकुण्ठायां ततस्ते
ष्णोर्जज्ञिरे सुराः । वैकुण्ठा नाम ते देवाः पञ्चमस्यान्तरे मनोः ॥ ४० ॥ ततस्ते वै पुनर्देवा वैकुण्ठाः प्राप्य चाक्षुषम् । साध्यायां द्वादश सुता
धर्मसूनवः ॥ ४१ ॥ ततस्ते वै पुनः साध्याः संक्षीणे चाक्षुषेऽन्तरे । उपस्थिते मनोः सर्गे पुनर्वैवस्वतस्य ह ॥ ४२ ॥ आद्ये त्रेतायुगमुखे प्राप्ते
तस्य तु । अंशेन साध्यास्तेऽदित्यां मारीचात् कश्यपात् पुनः ॥ ४३ ॥ जज्ञिरे द्वादशादित्या वर्त्तमानेऽन्तरे पुनः । यदा त्वेते समुत्पन्नाश्चाक्षुष
रे मनोः ॥ ४४ ॥ ततः स्वायम्भुवे साध्या जज्ञिरे द्वादशामराः । एवमाद्या जयास्ते वै शापात्समभवंस्तदा ॥ ४५ ॥ य इमां सप्तसम्भूतिं
देवशासनात् । पठेद्यः श्रद्धया युक्तः प्रत्यवायं न गच्छति ॥ ४६ ॥ इत्येते भूतयः सप्त जयानां सप्तलक्षणाः । परिकान्ता मया चाद्य किम्भूयः
च्छथ ॥ ४७ ॥ ऋषय ऊचुः ॥ दैत्यानां दानवानाञ्च गन्धर्वोरगरक्षसाम् । सर्वभूतपिशाचानां पशूनां पक्षिवीरुधाम् । उत्पत्तिं

निधनञ्चैव विस्तरात् कथयस्व नः ॥ ४८ ॥ एवमुक्तस्तदा सूत उवाच ऋषिसत्तमान् । दितेः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ॥ ४९ ॥
कश्यपस्यात्मजौ तौ वै सर्वेभ्यः पूर्वजौ स्मृतौ । सुत्येऽहन्यतिरात्रस्य कश्यपस्याश्वमेधिके ॥ ५० ॥ हिरण्यकशिपुर्नाम प्रथमं ऋत्विगासनम् । दित्या
गर्भाद्विनिःसृत्य तत्रासीनोच्चसंसदि । हिरण्यकशिपुस्तस्मात् कर्मणा तेन स स्मृतः ॥ ५१ ॥ ऋषय ऊचुः ॥ हिरण्यकशिपोर्नाम जन्म चैव महात्मनः ।
प्रभावञ्चैव दैत्यस्य विस्तराद्ब्रूहि नः प्रभो ॥ ५२ ॥ सूत उवाच ॥ कश्यपस्याश्वमेधोऽभूत् पुण्यो वै पुष्करे पुरा । ऋषिभिर्दैवताभिश्च गन्धर्वै
रुपशोभितः॥५३॥ उत्कृष्टेनैव विधिना आख्यानादौ यथाविधि । आसनान्युपक्लृप्तानि काञ्चनानि तु पञ्च वै॥५४॥कुशपूतानि त्रीण्यत्र कूर्चफलकमेव च ।
मुख्यार्त्विजश्च चत्वारस्तेषान्तान्युपकल्पयेत् ॥५५॥ शुभं तत्रासनं यत्तु होतुरर्थे प्रकल्पितम् । हिरण्मयं तथा दिव्यं दिव्यास्तरणसंस्तृतम्॥५६॥ अन्तर्वत्नी
दितिश्चैव पत्नीत्वं समुपागता । दश वर्षसहस्राणि गर्भस्तस्या अवर्तत ॥ ५७॥ स तु गर्भाद्विनिःसृत्य मातुर्वै उदरात्तदा । उपक्लृप्तासनं यत्तु होतुरर्थे हिरण्म
यम् । निषसाद सगर्भोऽत्र तत्रासीनः शशंस च ॥५८॥ आख्यानपञ्चमान् वेदान् महर्षिः काश्यपो यथा । तं दृष्ट्वा मुनयस्तस्य नामाकुर्वंस्तु तद्विधम्॥५९॥
हिरण्यकशिपुस्तस्मात् कर्मणा तेन विश्रुतः । हिरण्याक्षोऽनुजस्तस्य सिंहिका तस्य चानुजा । राहोः सा जननी देवी विप्रचित्तेः परिग्रहात् ॥ ६० ॥
हिरण्यकशिपुर्दैत्यश्चचार परमं तपः । शतं वर्षसहस्राणां निराहारो ह्यधःशिराः ॥ ६१ ॥ तं ब्रह्मा छन्दयामास दैत्यं तुष्टो वरेण तु । सर्वामरत्वं
विप्रेभ्यः सर्वभूतेभ्य एव च । योगाद्देवान् विनिर्जित्य सर्वदेवत्वमास्थितः ॥ ६२ ॥ दानवाश्चासुराश्चैव देवाः समा भवन्तु वै । मारुतेर्यन्महैश्वर्यमेष मे
दीयतां वरः ॥ ६३ ॥ एवमुक्तोऽथ ब्रह्मा तु तस्मै दत्त्वा यथेप्सितम् । दत्त्वा तस्मै वरान् दिव्यान् तत्रैवान्तरधीयत । हिरण्यकशिपुर्दैत्यः श्लोकैर्गीतः
पुरातनैः ॥ ६४ ॥ राजा हिरण्यकशिपुर्यां यामाशां निषेवते । तस्यास्तस्या दिशो देवा नमश्चक्रुर्महर्षिभिः ॥ ६५ ॥ एवंप्रभावो दैत्येन्द्रो हिरण्यकशिपु
र्द्विजाः । तस्यासीन्नरसिंहः स विष्णुर्मृत्युः पुरा किल । नखैस्तु तेन निर्भिन्नस्ततः शुद्धा नखाः स्मृताः ॥ ६६ ॥ हिरण्याक्षसुताः पञ्च विक्रान्ताः सुमहा
बलाः । उत्कुरः शकुनिश्चैव कालनाभस्तथैव च ॥ ६७ ॥ महानाभश्च विक्रान्तो भूतसन्तापनस्तथा । हिरण्याक्षसुता ह्येते देवैरपि दुरासदाः ॥ ६८ ॥
तेषां पुत्राश्च पौत्राश्च वाडेयः सगणः स्मृतः । शतन्तानि सहस्राणि निहतास्तारकामये ॥ ६९ ॥ हिरण्यकशिपोः पुत्राश्चत्वारस्तु महाबलाः । प्रह्लादः
पूर्वजस्तेषामनुह्लादस्तथैव च । संह्लादश्च ह्रदश्चैव ह्रदपुत्रान्निबोधत ॥ ७० ॥ ह्रादो निसुन्दश्च तथा ह्रदपुत्रौ बभूवतुः । सुन्दोपसुन्दौ विक्रान्तौ निसुन्दतन
यावुभौ ॥ ७१ ॥ ब्रह्मघ्नस्तु महावीर्यो मूकस्तु ह्रददायिनः । मारीचः सुन्दपुत्रस्तु ताडकायामुपपद्यते ॥७२॥ ताडका निहता साऽथ राघवेण बलीयसा ।

मूको विनिहतश्चापि किराते सव्यसाचिना ॥ ७३ ॥ उत्पन्ना महता चैव तपसा भाविताः स्वयम् । तिस्रः कोटयस्तु तेषां वै मणिवर्त्तनिवासिनाम् । अवध्या देवतानां वै निहताः सव्यसाचिना ॥७४॥ अनुह्लादसुतो वायुः शिनीवाली तथैव च । तेषान्तु शतसाहस्रो गणो हालाहलः स्मृतः ॥७५॥ वैरोचनस्तु प्राह्लादिः पञ्च तस्यात्मजाः स्मृताः । गवेष्ठी कालनेमिश्च जम्भो बाष्कल एव च । शम्भुस्तु अनुजस्तेषां स्मृताः प्राह्लादिसूनवः ॥ ७६ ॥ यथाप्रधानं वक्ष्यामि तेषां पुत्रान् दुरासदान् । शुम्भश्चैव निशुम्भश्च विष्वक्सेनो महौजसः ॥ ७७ ॥ गवेष्ठिनः सुता ह्येते जम्भस्य शतदुन्दुभिः । तथा दक्षश्च खण्डश्च त्रयस्तु जम्भसूनवः ॥ ७८ ॥ विरोधश्च मनुश्चैव वृक्षायुः कुशलीमुखः । बाष्कलस्य सुता ह्येते कालनेमिसुतान् शृणु ॥ ७९ ॥ ब्रह्मजित् क्षत्रजिच्चैव देवान्तकनरान्तकौ । कालनेमिसुता ह्येते शम्भोस्तु शृणुत प्रजाः ॥ ८० ॥ धनुको ह्यसिलोमा च नाबलश्च सगोमुखः । गवाक्षश्चैव गोमांश्च शम्भोः पुत्राः प्रकीर्त्तिताः ॥ ८१ ॥ विरोचनस्य पुत्रस्तु बलिरेकः प्रतापवान् । बलेः पुत्रशतं जज्ञे राजानः सर्व एव ते ॥ ८२ ॥ तेषां प्रधानाश्चत्वारो विक्रान्ताः सुमहाबलाः । सहस्रबाहुर्ज्येष्ठस्तु बाणो द्रविणसम्मतः । कुम्भनाभो गर्दभाक्षः कुशिरित्येवमादयः ॥ ८३ ॥ शकुनी पूतना चैव कन्ये द्वे तु बलेः सुते । बलेः पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ॥ ८४ ॥ बलियों नामविख्यातो गणो विक्रान्तपौरुषः । बाणस्य चन्द्रमनसो लौहित्यमुपपद्यते ॥ ८५ ॥ दितिर्विनष्टपुत्रा वै तोषयामास कश्यपम् । स कश्यपः प्रसन्नात्मा सम्यगाराधितस्तया । वरेण च्छन्दयामास सा च वव्रे वरं ततः ॥ ८६ ॥ स तु तस्यै वरं प्रादात् प्रार्थितं भगवन् प्रभुः । किमिच्छसि मयि शुभे मारीचस्तामभाषत ॥ ८७ ॥ मारीचं कश्यपं तुष्टं भर्तारं प्राञ्जलिस्तथा । हतपुत्रास्मि भगवान् आदित्यैस्तव सूनुभिः ॥ ८८ ॥ शक्रहन्तारमिच्छेयं पुत्रं दीर्घतपोऽन्वितम् । अहं तपश्चरिष्यामि गर्भमाधातुमर्हसि ॥ ८९ ॥ तस्यास्तद्वचनं श्रुत्वा मारीचः कश्यपस्तथा । प्रत्युवाच महातेजा दितिं परमदुःखिताम् ॥ ९० ॥ एवं भवतु भद्रन्ते शुचिर्भव तपोधने । जनयिष्यसि सत्पुत्रं शक्रहन्तारमाहवे ॥ ९१ ॥ पूर्णं वर्षशतं तावत् शुचिर्यदि भविष्यसि । पुत्रं त्रिलोकप्रचरमथ त्वं जनयिष्यसि ॥ ९२ ॥ एवमुक्त्वा महातेजास्तया समवसत् प्रभुः । तामालिङ्ग्य त्रिभुवनं जगाम भगवानृषिः ॥ ९३ ॥ गते भर्त्तारि सा देवी दितिः परमहर्षिता । कुशलं वनमासाद्य तपस्तेपे सुदारुणम् ॥ ९४ ॥ तपस्तस्यान्तु कुर्वन्त्यां परिचर्यांचकार ह । सहस्राक्षः सुरश्रेष्ठः परया गुणसम्पदा ॥ ९५ ॥ अग्निं समित्कुशं काष्ठं फलं मूलं तथैव च । न्यवेदयत् सहस्राक्षो यच्चान्यदपि किञ्चन ॥ ९६ ॥ गात्रसंवाहनैश्चैव श्रमापनयनैस्तथा । शक्रः सर्वेषु (लोकेषु) कालेषु दितिं परिचचार ह । एवमाराधिता शक्रमुवाचाथ दितिस्तदा ॥ ९७ ॥

दितिरुवाच ॥ प्रीता तेऽहं सुरश्रेष्ठ दशवर्षाणि पुत्रक । अवशिष्टानि भद्रन्ते भ्रातरं द्रक्ष्यसे ततः ॥ ९८ ॥ जयलिप्सां समाधास्ये लब्ध्वाहं
तादृशं सुतम् । त्रैलोक्यविजयं पुत्र प्राप्स्यामि सह तेन वै ॥ ९९ ॥ एवमुक्त्वा दितिः शक्रं मध्यं प्राप्ते दिवाकरे । निद्रयापहृता देवी जान्वोः
कृत्वा शिरस्तदा ॥ १०० ॥ दृष्ट्वा तामशुचिं शक्रः पादयोर्गतमूर्द्धजाम् । तस्यास्तदन्तरं लब्ध्वा जहास च मुमोद च ॥ १०१ ॥ तस्याः शरीरं विवृतं
विवेशाथ पुरन्दरः । प्रविश्य चामितं दृष्ट्वा गर्भमिन्द्रो महौजसम् । अभिनत्स प्रधानन्तु कुलिशेन महायशाः ॥ १०२ ॥ भिद्यमानस्तदा गर्भो
वज्रेण शतपर्वणा । रुरोद सस्वरं भीमं वेपमानः पुनः पुनः । मारोदीरिति तं गर्भं शक्रः पुनरभाषत ॥ १०३ ॥ तं गर्भं सप्तधाभूतं ह्येकैकं सप्तधा
पुनः । कुलिशेन विभेदेन्द्रस्ततो दितिरबुध्यत ॥ १०४ ॥ न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् । निष्पपातोदराद्वज्री मातुर्वचनगौरवात् ।
प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत ॥ १०५ ॥ अशुचिर्देवि सुप्तासि पादयोर्गतमूर्द्धजा । तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे ।
भिन्नवान् गर्भमेतन्ते बहुधा क्षन्तुमर्हसि ॥ १०६ ॥ तस्मिंस्तु विफले गर्भे दितिः परमदुःखिता । सहस्राक्षं ततो वाक्यं मातुर्नयनम
ब्रवीत् ॥ १०७ ॥ ममापराधाद्गर्भोऽयं यदि ते विफलीकृतः । नापराधोऽस्ति देवेश ऋषिपुत्र महाबल ॥ १०८ ॥ शत्रोर्वधे न दोषोऽस्ति
तेन त्वां न शपामि भोः । प्रियन्तु कर्त्तुमिच्छामि श्रेयो गर्भस्य मे कुरु ॥ १०९ ॥ भवन्तु मम पुत्राणां सप्त स्थानानि वै दिवि ।
वातस्कन्धानिमान् सप्त चरन्तु मम पुत्रकाः । मरुतश्चेति विख्याता गणास्ते सप्त सप्तकाः ॥ ११० ॥ पृथिव्यां प्रथमस्कन्धो द्वितीयश्चैव भास्करे ।
सोमे तृतीयो विज्ञेयश्चतुर्थो ज्योतिषां गणे ॥ १११ ॥ ग्रहेषु पञ्चमश्चैव षष्ठः सप्तर्षिमण्डले । ध्रुवे तु सप्तमश्चैव वातस्कन्धः परस्तु सः ॥ ११२ ॥
तान्येते विचरन्त्वद्य काले काले ममात्मजाः । वातस्कन्धानिमान् भूत्वा चरन्तु मम पुत्रकाः ॥ ११३ ॥ पृथिव्यां प्रथमस्कन्धो अमेध्येभ्यो य आवहः ।
चरन्तु मम पुत्रास्ते प्रथमश्चरताङ्गणः ॥ ११४ ॥ द्वितीयश्चापि मेघेभ्य आसूर्यात् प्रवहस्तु यः । वातस्कन्धं द्वितीयन्तु द्वितीयश्चरताङ्गणः
॥ ११५ ॥ सूर्योर्द्धन्तु ततः सोमादुद्वहो यस्तु वै स्मृतः । वातस्कन्धन्तु तं प्राहुस्तृतीयश्चरताङ्गणः ॥ ११६ ॥ सोमादूर्द्धं तथर्क्षेभ्यश्चतुर्थः सुवहस्तु
यः । चतुर्थो मम पुत्राणां गणस्तु चरतां विभो ॥ ११७ ॥ ऋक्षेभ्यश्च तथैवोर्द्ध्वमाग्रहाद्विवहस्तु यः । पञ्चमं पञ्चमः सौम्यः स्कन्धस्तु चरताङ्गणः ॥ ११८ ॥
ऊर्द्ध्वं ग्रहादृषिभ्यस्तु षष्ठो यो वै परावहः । चरन्तु मम पुत्रास्तु तत्र षष्ठे गणे तु ये ॥ ११९ ॥ सप्तर्षयस्तथैवोर्द्ध्वमाध्रुवात् सप्तमस्तु यः । वात
स्कन्धः परिवहस्तत्र तिष्ठन्तु मे सुताः ॥ १२० ॥ एतत् सर्वं चरन्त्वेते काले काले ममात्मजाः । तत्र तेन च नाम्ना वै भवन्तु मरुतस्त्विमे ॥ १२१ ॥

ततस्तेषान्तु नामानि मातापुत्रौ प्रचक्रतुः । तत्कृते कर्मभिश्चैव मरुतो वै पृथक् पृथक् ॥ १२२ ॥ सत्त्वज्योतिस्तथादित्यः सत्यज्योतिस्तथाऽपरः । तिर्यग्ज्योतिश्च सज्योतिर्ज्योतिष्मानपरस्तथा ॥ १२३ ॥ प्रथमस्तु गणः प्रोक्तो द्वितीयं मे निबोधत । ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा ॥१२४॥ सत्यमित्रोऽभिमित्रश्च हरिमित्रस्तथाऽपरः । गण एष द्वितीयस्तु तृतीयं मे निबोधत ॥ १२५ ॥ कृतः सत्यो ❋ ❋ ❋ ❋ ध्रुवो धर्त्ता विधारयः । ध्वान्तश्चैव धुनिश्चैव ह्युग्रो भीमस्तथैव च । अभियुः साक्षिपश्चैवमाह्वयश्च गणः स्मृतः ॥ १२६ ॥ ईदृक् चैव तथान्यादृक् यादृक् च प्रतिकृत्तथा । (?)समितिश्चैव संरम्भश्च तथा गणः ॥१२७॥ ईदृक् च पुरुषश्चैव अन्यादृक्षाच्च चेतसः । समितासमितदृक्षाश्च प्रतिदृक्षाश्च वै गुणाः ॥ १२८॥ एते ह्येकोनपञ्चाशन्मरुतो नामतः स्मृताः । प्रसंख्यातास्तथा ताभ्यां दित्या चन्द्रेण चैव हि ॥ १२९ ॥ श्रुत्वा तेषान्तु नामानि दितिरिन्द्रमुवाच ह । वातस्कन्धं चरन्त्वेते मम पुत्राश्च पुत्रक । विचरन्तु च भद्रन्ते देवैः सह ममात्मजाः ॥ १३० ॥ तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरन्दरः । उवाच प्राञ्जलिर्भूत्वा मातर्भवतु तत्तथा ॥ १३१ ॥ सर्वमेतद्यथोक्तन्ते भविष्यति न संशयः । देवभूता महात्मानः कुमारा देवसंमताः । देवैः सह भविष्यन्ति यज्ञभाजस्तथात्मजाः ॥ १३२ ॥ तस्मात्ते मरुतो देवाः सर्वे चेन्द्रानुजामराः । विज्ञेयाश्चामराः सर्वे दितिपुत्रास्तपस्विनः ॥ १३३ ॥ एवं तौ निश्चयं ज्ञात्वा मातापुत्रौ तपोधनौ । जग्मतुस्त्रिदिवं हृष्टौ शक्रोऽपि त्रिदिवं गतः ॥१३४॥ मरुतां हि शुभं जन्म शृणुयाद्यः पठेत वा । नावृष्टिभयमाप्नोति बह्वायुश्च भवेत्ततः ॥ १३५ ॥ इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम षष्ठोऽध्यायः ॥ ६ ॥ ७ ॥ सूत उवाच ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि दनुपुत्रान्निबोधत । अभवन् दनुपुत्रास्तु वंशे ख्याता महासुराः ॥ १ ॥ विप्रचित्तिप्रधानास्ते शतं तीव्रपराक्रमाः । सर्वे लब्धवराश्चैव सुतप्ततपसस्तथा ॥ २ ॥ सत्यसन्धाः पराक्रान्ताः क्रूरा मायाविनश्च ते । महाबला अयज्वानो ह्यब्रह्मण्याश्च दानवाः । कीर्त्यमानान्मया सर्वान् प्राधान्येन निबोधत ॥ ३ ॥ द्विमूर्द्धा शङ्कुवर्णश्च तथा शङ्कुनिरामयः । शङ्कुकर्णो महाविश्वो गवेष्टिर्दुन्दुभिस्तथा ॥ ४ ॥ अजामुखोऽथ भगवान् शिलोवामनसस्तथा । मरीचिरक्षकश्चैव महागार्ग्योऽङ्गिरावृतः ॥ ५ ॥ विक्षोभ्यश्च सुकेतुश्च सुवीर्यः सुहृदस्तथा । इन्द्रजिद्विश्वजिच्चैव तथा सुरविमर्दनः ॥ ६ ॥ एकचक्रः सुबाहुश्च तारकश्च महाबलः । वैश्वानरः पुलोमा च प्रवीणोऽथ महाशिराः ॥ ७ ॥ स्वर्भानुर्वृषपर्वा च मुण्डकश्च महासुरः । धृतराष्ट्रश्च सूर्यश्च चन्द्र इन्द्रश्च तापिनः ॥ ८ ॥ सूक्ष्मश्चैव निचन्द्रश्च ऊर्णनाभो महागिरिः । असिलोमा सुकेशश्च सदश्च बलको दश ॥ ९ ॥ तथा गगनमूर्द्धा च कुम्भनाभा महोदरः । प्रमोदाह्श्च कुपथो हयग्रीवश्च वीर्यवान् ॥ १० ॥ असुरश्च विरूपाक्षः सुपथोऽथ महासुरः । अजो हिरण्मयश्चैव

शतमायुश्च शम्बरः ॥ ११ ॥ शरभः शलभश्चैव सूर्याचन्द्रमसावुभौ । असुराणां सुरावेतौ सुराणां साम्प्रताविमौ ॥ १२ ॥ इति पुत्रा दनोर्वंशाः प्रधानाः परिकीर्त्तिताः । तेषामपरिसङ्ख्येयं पुत्रपौत्राद्यनन्तकम् ॥ १३ ॥ इत्येते त्वसुराः प्रोक्ता दैतेया दानवाश्च ये । स्वर्भानुस्तु स्मृतो दैत्यो ह्यनुभानुर्दनोः सुतः । इमे तु वंशानुगता दनोः पुत्रास्तु ये स्मृताः ॥ १४ ॥ एकाक्ष ऋषभोऽरिष्टः प्रवन्धनरकावपि । इन्द्रवाधनकेशी च मेरुः शम्बोऽथ धेनुकः ॥ १५ ॥ गवेष्ठिश्च गवाक्षश्च तालकेतुश्च वीर्यवान् । एते मनुष्यधर्मास्तु दनोः पुत्रा मया स्मृताः ॥ १६ ॥ दैत्यदानवसंहर्षे जाता भीमपराक्रमाः । सिंहिकायामथोत्पन्ना विप्रचित्तिसुतास्त्विमे ॥ १७ ॥ सैंहिकेया इति ख्याताश्चतुर्दश महासुराः । शतगालश्च वलवान्व्यासः शाम्बरस्तथैव च ॥ १८ ॥ अनुलोमः शुचिश्चैव वातापिश्च सितांशुकः । हरः कल्पः कालनाभो भौमश्च नरकस्तथा ॥ १९ ॥ राहुर्ज्येष्ठस्तु तेषां वै चन्द्रसूर्यप्रमर्दनः । इत्येते सिंहिकापुत्रा देवैरपि दुरासदाः ॥ २० ॥ दारुणाभिजनाः क्रूराः सर्वे ब्रह्मद्विषश्च ते । दशान्यानि सहस्राणि सैंहिकेयो गणः स्मृतः ॥ २१ ॥ निहतो जामदग्न्येन भार्गवेण वलीयसा । स्वर्भानोस्तु प्रभा कन्या पुलोम्नोऽथ शची तथा ॥ २२ ॥ उपदानवी यमस्यापि शर्मिष्ठा वार्षपर्वणी । पुलोमा कालिका चैव वैश्वानरसुते उभे ॥ २३ ॥ प्रभाया नहुषः पुत्रो जयन्तश्च शचीसुतः । पुरुं जज्ञेऽथ शर्मिष्ठा दुष्मन्तमुपदानवी ॥ २४ ॥ वैश्वानरसुते ह्येते पुलोमा कालिका उभे । उभे ह्यपि तु ते कन्ये मारीचस्य परिग्रहे ॥ २५ ॥ ताभ्यां पुत्रसहस्राणि षष्टिर्दानवपुङ्गवाः । चतुर्दश तथान्यानि हिरण्यपुरवासिनाम् ॥ २६ ॥ पौलोमाः कालकेयाश्च दानवाः सुमहावलाः । अवध्या दानवानां ते निहताः सव्यसाचिना ॥ २७ ॥ मयस्य जाता ये पुत्राः सर्वे वीरपराक्रमाः । मायावी दुन्दुभिश्चैव वृषश्च महिषस्तथा ॥ २८ ॥ वालिको वज्रकर्णश्च कन्या मन्दोदरी तथा । दैत्यानां दानवानाञ्च सर्ग एष प्रकीर्त्तितः ॥ २९ ॥ दनायुषायाः पुत्रास्तु स्मृताः पञ्च महावलाः । अरूरुर्वलिजम्भौ च विरक्षश्च विपस्तथा ॥ ३० ॥ अरूरोस्तनयः क्रूरो धुन्धुर्नाम महासुरः । निहतः कुवलाश्वेन उत्तङ्कवचनात् किल ॥ ३१ ॥ वलेः पुत्रौ महावीर्यौ तेजसाप्रतिमावुभौ । कुम्भिलश्च वर्मा च स कर्णः पूर्वजन्मनि ॥ ३२ ॥ विरक्षस्यापि पुत्रौ द्वौ कालकश्च वरश्च तौ । विपस्य त्वभवन् पुत्राश्चत्वारः क्रूरकर्मणः । श्राद्धहा यज्ञहा चैव ब्रह्महा पशुहा तथा ॥ ३३ ॥ क्रान्ता दनायुषापुत्रा वृत्रस्यापि निवोधत । जज्ञिरे श्वसनाद्घोराद्वृत्रस्येन्द्रेण युध्यतः ॥ ३४ ॥ भर्त्तारो मनसा ख्याता राक्षसाः सुमहावलाः । शतं तानि सहस्राणि महेन्द्रानुचराः स्मृताः ॥ ३५ ॥ सर्वे ब्रह्मविदः सौम्या धार्मिकाः सूक्ष्ममूर्त्तयः । प्रजास्वन्तर्गताः सर्वे निवसन्ति सुधार्मिकाः ॥ ३६ ॥ दैत्यानां दानवानाञ्च सर्ग एष प्रकीर्त्तितः । प्रवाह्यजनयत् पुत्रान् यज्ञे वै गायनोत्तमान् ॥ ३७ ॥ सत्त्वनः सत्त्वात्मकश्चैव

कलापश्चैव वीर्यवान् । कृतवीर्यो ब्रह्मचारी सुपाण्डुश्चैव सप्तमः ॥ ३८ ॥ पनश्चैव तरण्यश्च सुचन्द्रो दशमस्तथा । इत्येते देवगन्धर्वा विज्ञेयाः परिकीर्त्तिताः ॥ ३९ ॥ इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम सप्तमोऽध्यायः ॥ ७ ॥ ७ ॥ सूत उवाच ॥ गन्धर्वाप्सरसः पुण्या मौनेयाः परिकीर्त्तिताः । चित्रसेनोग्रसेनश्च ऊर्णायुरनघस्तथा ॥ १ ॥ धृतराष्ट्रः पुलोमा च सूर्यवर्चास्तथैव च । युगपत्तृणपत्कालिर्दितिश्चित्ररथस्तथा ॥ २ ॥ त्रयोदशो भ्रमिशिराः पर्जन्यश्च चतुर्दशः । कलिः पञ्चदशश्चैव नारदश्चैव षोडशः । इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिता ॥ ३ ॥ चतुस्त्रिंशद्यवीयस्यस्तेषामप्सरसः शुभाः । अन्तरा दारवत्या च प्रियमुख्या सुरोत्तमा ॥ ४ ॥ मिश्रकेशी तथा शाची पर्णिनी वाप्यलम्बुषा । मारीची पुत्रिका चैव विद्युद्वर्णा तिलोत्तमा ॥ ५ ॥ अद्रिका लक्षणा चैव देवी रम्भा मनोरमा । सुवरा च सुबाहुश्च पूर्णिता सुप्रतिष्ठिता ॥ ६ ॥ पुण्डरीका सुगन्धा च सुदन्ता सुरसा तथा । हेमसारा सुती चैव सुवृत्ता कमला च या ॥ ७ ॥ सुभुजा हंसपादा च लौकिक्योऽप्सरसस्तथा । गन्धर्वाप्सरसो ह्येता मौनेयाः परिकीर्त्तिताः ॥ ८ ॥ गन्धर्वाणां दुहितरो मया याः परिकीर्त्तिताः । तासां नामानि सर्वासां कीर्त्त्यमानानि मे शृणु ॥ ९ ॥ सुयशा प्रथमा तासां गान्धर्वी तदनन्तरम् । विद्यावती चारुमुखी सुमुखी च वरानना ॥ १० ॥ तत्रेमे सुयशापुत्रा महाबलपराक्रमाः । प्रचेतसः सुता यक्षास्तेषां नामानि मे शृणु ॥ ११ ॥ कम्बलो हरिकेशश्च कपिलः काञ्चनस्तथा । मेघमाली तु यक्षाणां गण एष उदाहृतः ॥ १२ ॥ सुयशाया दुहितरश्चतस्रोऽप्सरसः स्मृताः । तासां नामानि वै सम्यग् ब्रुवतो मे निबोधत ॥ १३ ॥ लोहेयी त्वभवज्ज्येष्ठा भरता तदनन्तरम् । कृशाङ्गी च विशाला च रूपेणाप्रतिमा तथा ॥ १४ ॥ ताभ्योऽपरे यक्षगणाश्चत्वारः परिकीर्त्तिताः । उत्पादिता विशालेन विक्रान्तेन महात्मना ॥ १५ ॥ लोहेयो भरतेयश्च कृशाङ्गेयश्च विश्रुतः । विशालेयश्च यक्षाणां पुराणे प्रथिता गणाः ॥ १६ ॥ इत्येतैरसुरैर्घोरैर्महाबलपराक्रमैः । लोकैर्यक्षगणैर्व्याप्ता लोकालोकविदांवराः ॥ १७॥ गन्धर्वाश्चाथ वालेया विक्रान्तेन महात्मना । उत्पादिता महावीर्या महागन्धर्वनायकाः ॥१८॥ विक्रमौदार्यसम्पन्ना महाबलपराक्रमाः । तेषां नामानि वक्ष्यामि यथावदनुपूर्वशः ॥ १९ ॥ चित्राङ्गदो महावीर्यश्चित्रवर्मा तथैव च । चित्रकेतुर्महाभागः सोमदत्तोऽथ वीर्यवान् । तिस्रो दुहितरश्चैव तासां नामानि वक्ष्यते ॥ २० ॥ प्रथमा त्वाग्निका नाम कम्बला तदनन्तरम् । तथा वसुमती नाम रूपेणाप्रतिमौजसः ॥ २१ ॥ ताभ्यः परे कुमारेण गणा उत्पादितास्त्विमे । त्रयो गन्धर्वमुख्यानां विक्रान्ता युद्धदुर्मदाः ॥ २२ ॥ आग्नेयाः काम्बलेयाश्च तथा वसुमतीसुताः । तैर्गणैर्विविधैर्व्याप्तमिदं लोकचराचरम् ॥ २३ ॥ विद्यावन्तश्च तेनैव विक्रान्तेन महात्मना । उत्पादिता महाभागा रूपविद्याधनेश्वराः ॥ २४ ॥ तेषामुदीर्ण

वीर्याणां गन्धर्वाणां महात्मनाम् । नामानि कीर्त्यमानानि शृणुध्वं मे विवक्षतः ॥ २५ ॥ हिरण्यरोमा कपिलः सुलोमा मागधस्तथा । चन्द्रकेतुश्च वै गाङ्गो गोदश्चैव महाबलः ॥ २६ ॥ महाविद्यावदातानां विक्रान्तानां तपस्विनाम् । इत्येवमादिर्हि गणो द्वे चान्ये च सुलोचने ॥ २७ ॥ शिवा च सुमनाश्चैव ताभ्यामपि महात्मना । उत्पादिता विश्रवसा विद्याचरणगोचराः ॥ २८ ॥ शैवेयाश्चैव विक्रान्तास्तथा सौमनसो गणाः । एतैर्व्याप्तमिदं लोकं विद्याधरगणैस्त्रिभिः ॥ २९ ॥ एभ्योऽनेकानि जातानि अम्बरान्तरचारिणाम् । लोके गणशतान्येव विद्याधरविचेष्टितात् ॥ ३० ॥ अश्वमुखाश्च तेनैव विक्रान्तेन महात्मना । उत्पादिता ह्यश्वमुखाः किन्नरांस्तान्निबोधत ॥ ३१ ॥ समुद्रः सेनः कालिन्दो महानेत्रो महाबलः । सुवर्णघोषः सुग्रीवो महाघोषश्च वीर्यवान् ॥ ३२ ॥ इत्येवमादिर्हि गणः किन्नराणां महात्मनाम् । हयाननानां विद्वद्भिर्विस्तीर्णः परिकीर्त्यते ॥ ३३ ॥ तथासमुत्थितेनैव विक्रान्तेन महात्मना । उत्पादिता नरमुखाः किन्नराः शांशपायनाः ॥ ३४ ॥ हारिषेणः सुषेणश्च वारिषेणश्च वीर्यवान् । रुद्रदत्तेन्द्रदत्तौ च चन्द्रद्रुममहाद्रुमौ ॥ ३५ ॥ बिन्दुश्च बिन्दुसारश्च चन्द्रवंशाश्च किन्नराः । इत्येते किन्नराः श्रेष्ठा लोके ख्याताः सुशोभनाः ॥ ३६ ॥ नृत्यगीतप्रगल्भानामेतेषां द्विजसत्तमाः । लोके गणशतान्येव किन्नराणां महात्मनाम् ॥ ३७ ॥ यक्षा यक्षोपशान्तश्च लौहेया रूपशालिनी । दुहिता सुरविन्देति प्रकाशा सिद्धसम्मता ॥ ३८ ॥ उपायाकेतनस्याहि; स्वयमुत्पादितो गणः । करालकेन भूतानां तेषां नामानि मे शृणु ॥ ३९ ॥ भूता भूतगणैर्ज्ञेया आवेशकानिवेशकाः । इत्येवमादिर्हि गणो भूमिगोचरकः स्मृतः ॥ ४० ॥ विज्ञेय इह लोकेऽस्मिन् भूतानां भूतनायकः । ये उत्कृष्टा भवन्त्येषामम्बरान्तरचारिणाम् । वृक्षाग्रमात्रमाकाशं ते चरन्ति न संशयः ॥ ४१ ॥ तत्रेमे देवगन्धर्वाः प्रायेण कथिता मया । देवोपस्थाननिरता विज्ञेयास्ते यशस्विनः ॥ ४२ ॥ नारायणं सुरगुरुं विरजं पुष्करेक्षणम् । हिरण्यगर्भञ्च तथा चतुर्वक्त्रं स्वयम्भुवम् ॥ ४३ ॥ शङ्करञ्च महादेवमीशानञ्च जगत्प्रभुम् । इन्द्रपूर्वास्तथादित्यान् रुद्रांश्च वसुभिः सह ॥ ४४ ॥ उपतस्थुः सगन्धर्वा नृत्यगीतविशारदाः । त्रिदशाः सर्वलोकस्था निपुणा गीतवादिनः ॥ ४५ ॥ हंसो ज्येष्टः कनिष्ठोऽन्यो मध्यमौ च हहा हुहूः । चतुर्थो धिषणश्चैव ततो वासिरुचिस्तथा ॥ ४६ ॥ षष्टस्तु तुम्बुरुस्तेषां ततो विश्वावसुः स्मृतः । इमाश्चाप्सरसो दिव्या विहिताः पुण्यलक्षणाः ॥ ४७ ॥ सुषुवेऽष्टौ महाभागा वरिष्ठा देवपूजिताः । अनवद्यामनवशामन्वतां मदनप्रियाम् । अरूपां सुभगां भासीमरिष्टाऽष्टौ व्यजायत ॥ ४८ ॥ मनोवती सुकेशा च तुम्बुरोस्तु सुते उभे । पञ्चचूडास्त्विमा दिव्या दैविक्योऽप्सरसो दश ॥ ४९ ॥ मेनका सहजन्या च पर्णिनी पुञ्जिकस्थला । घृतस्थला घृताची च विश्वाची पूर्वचीत्यपि । प्रम्लोचेत्यभिविख्यातानुम्लोचन्ती तथैव च ॥ ५० ॥ अनादिनिधनस्याथ

जज्ञे नारायणस्य या । ऊरोः सर्वानवद्याङ्गी उर्वश्येकादशी स्मृता ॥ ५१ ॥ मेनस्य मेनका कन्या ब्रह्मणो हृष्टचेतसः । सर्वाश्च ब्रह्म
वादिन्यो महायोगाश्च ताः स्मृताः ॥ ५२ ॥ गणा अप्सरसाङ्ख्याताः पुण्यास्ते वै चतुर्दश । आहूताः शोभयन्तश्च गणा ह्येते चतुर्दश ॥ ५३ ॥
ब्रह्मणो मानसाः कन्याः शोभयन्त्यो मनोः सुताः । वेगवन्त्यस्त्वरिष्टाया ऊर्जायाश्चाग्निसम्भवाः ॥ ५४ ॥ आयुष्मन्त्यश्च सूर्यस्य रश्मिजाताः सुभ
स्वराः । वारिजा ह्यमृतोत्पन्ना अमृता नामतः स्मृताः ॥ ५५ ॥ वायूत्पन्ना मुदा नाम भूमिजाता भवास्तु वै । विद्युतश्च रुचो नाम मृत्योः कन्याश्च
भैरवाः ॥ ५६ ॥ शोभयन्त्यः कामगुणा गणाः प्रोक्ताश्चतुर्दश । सेन्द्रोपेन्द्रैः सुरगणैः रूपातिशयनिर्मिताः ॥ ५७ ॥ शुभरूपा महाभागा दिव्या नारी
तिलोत्तमा । ब्रह्मणश्चाग्निकुण्डाच्च देवनारी प्रभावती । रूपयौवनसम्पन्ना उत्पन्ना लोकविश्रुता ॥ ५८ ॥ वेदीतलसमुत्पन्ना चतुर्वक्त्रस्य धीमतः । नाम्ना
वेदवती नाम सुरनारी महाप्रभा ॥ ५९ ॥ तथा यमस्य दुहिता रूपयौवनशालिनी । वरहेमविभा हेमा देवनारी सुलोचना ॥ ६० ॥ इत्येते बहुसाहस्रं
भास्वरा ह्यप्सरोगणाः । देवतानामृषीणाञ्च पत्न्यस्ता मातरश्च ह ॥ ६१ ॥ सुगन्धाश्चम्पवर्णाश्च सर्वाश्चाप्सरसः समाः । सम्प्रयोगे तु कान्तेन माद्यन्ति
मदिरां विना । तासामाप्यायते स्पर्शादानन्दश्च विवर्द्धते ॥ ६२ ॥ विनतायास्तु पुत्रौ द्वावरुणो गरुडश्च ह । षट्त्रिंशत्तु स्वसारश्च यवीयस्यस्तु
ताः स्मृताः ॥ ६३ ॥ गायत्र्यादीनि च्छन्दांसि सौपर्णेयाश्च पक्षिणः । इत्येवाहानि सर्वाणि दिक्षु सन्निहितानि च ॥ ६४ ॥ कद्रूर्नागसहस्रं वै चरा
चरमजीजनत् । अनेकशिरसां तेषां खेचराणां महात्मनाम् । बहुधानामधेयानां प्रायशस्तु निबोधत ॥ ६५ ॥ तेषां प्रधाननागाश्च शेषवासुकित
क्षकाः । सकर्णीरश्च जम्भश्च अञ्जनो वामनस्तथा ॥ ६६ ॥ ऐरावतमहापद्मौ कम्बलाश्वतरावुभौ । ऐलपत्रश्च शङ्खश्च कर्कोटकधनञ्जयौ ॥ ६७ ॥ महाकर्णो
महानीलो धृतराष्ट्रबलाहकौ । कुमारः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा ॥ ६८ ॥ शिलीमुखो दधिमुखः कालीयः शालिपिण्डकः । विन्दुपादः पुण्ड
रीको नागश्चापूरणस्तथा ॥ ६९ ॥ कपिलश्चाम्बरीषश्च धृतपादश्च कच्छपः । प्रह्लादः पद्मचित्रश्च गन्धर्वोऽथ नमस्तिकः ॥ ७० ॥ नहुषः खररोमा
च मणिरित्येवमादयः । काद्रवेया मया ख्याताः खशायांस्तु निबोधत ॥ ७१ ॥ खशा विजज्ञे पुत्रौ द्वौ विश्रुतौ पुरुषादकौ । ज्येष्ठं पश्चिमसन्ध्या
यां पूर्वस्यां मनुजास्तथा ॥ ७२ ॥ विलोहितं विकर्णञ्च पूर्वं साऽजनयत् सुतम् । चतुर्भुजं चतुष्पादं द्विमूर्द्धानं द्विधागतिम् ॥ ७३ ॥ सर्वाङ्गकेशं
स्थूलाङ्गं तुङ्गनासं महोदरम् । स्थूलशीर्षं महाकर्णं मुञ्जाकेशं मनोरथम् ॥ ७४ ॥ हस्त्योष्ठं दीर्घजङ्घञ्च अश्वदंष्ट्रं महाहनुम् । रक्तजिह्वं जटाक्षञ्च
स्थूलास्यं दीर्घनासिकम् ॥ ७५ ॥ गुह्यकं शितिकर्णञ्च महानन्दं महामुखम् । एवंविधं खशापुत्रं विजज्ञे साऽतिभीषणम् ॥ ७६ ॥ तस्यानुजं

ीयन्तु खशा चैव व्यजायत । त्रिशीर्षञ्च त्रिपादञ्च त्रिहस्तं कृष्णलोचनम् ॥ ७७ ॥ ऊर्द्ध्वकेशं हरिच्छ्मश्रुं शिलासंहननं दृढम् । ह्रस्व
यं सुबाहुञ्च महाकायं महाबलम् ॥ ७८ ॥ आकर्णदारितास्यञ्च लम्बभ्रूं स्थूलनासिकम् । स्थूलोष्ठमष्टदंष्ट्रञ्च द्विजिह्वं शङ्कुकर्णकम् ॥ ७९ ॥ पिङ्ग
दवृत्तनयनं जटिलं पिङ्गलं तथा । महाकर्णं महोरस्कं कटिहीनं कृशोदरम् । नखिनं लोहितग्रीवं सा कनिष्ठं प्रसूयते ॥ ८० ॥ सद्यः प्रसूयमात्रौ
विवृद्धौ च प्रमाणतः । उपभोगसमर्थाभ्यां शरीराभ्यामुपस्थितौ । सद्योजातविवृद्धाङ्गौ मातरं पर्यभूष्यताम् ॥ ८१ ॥ ज्यायांस्तयोस्तु यः क्रूरो
तरं सोऽभ्यकर्षत । अब्रवीन्मातरायाहि भक्षार्थे क्षुधयार्दितः ॥ ८२ ॥ न्यषेधयत् पुनर्ह्येनं ज्यायांसन्तु कनिष्ठकः । अब्रवीत् सोऽसकृत्तं वै रक्षेमां
तरं स्वशाम् । बाहुभ्यां परिगृह्यैनं मातरं तां व्यमोचयत् ॥ ८३ ॥ एतस्मिन्नेव काले तु प्रादुर्भूतस्तयोः पिता । तौ दृष्ट्वा विकृताकारौ वसतां हीत्य
पत॥८४॥ तौ तु तं पितरं दृष्ट्वा बलवन्तौ त्वरान्वितौ । मातुरेव पुनश्चाङ्के प्रलपेतां स्वमायया ॥८५॥ अथाऽब्रवीद्दपि भार्यामावाभ्यामुक्तवत्यसि । पूर्व
वक्ष्व तत्त्वेन तथैवाभ्यां व्यतिक्रमम् ॥८६॥ मातुलं भजते पुत्रः पितॄन् भजति कन्यका । यथाशीला भवेन्माता तथाशीलो भवेत् सुतः ॥८७॥ यद्वर्णा
भवेद्भूमिस्तद्वर्णं सलिलं ध्रुवम् । मातॄणां शीलदोषेण तथा शीलगुणैः पुनः । विभिन्नास्तु प्रजाः सर्वास्तथा ख्यातिवशेन च ॥ ८८ ॥ बलशीला
भेस्तासामदितिर्धर्मतत्परा । धर्मशीलादिभिश्चैव प्रबोधबलशालिनी ॥ ८९ ॥ गीतशीला तथाऽरिष्टा मायाशीला दनुः स्मृता । विनता तु पुनर्देवी
ायसगतिप्रिया ॥ ९० ॥ तपोमयेन शीलेन सुरभिः समलंकृता । क्रोधशीला तथा कद्रूः क्रोधनासुलशीलका ॥९१॥ दनायुपायाः शीलं वै वैरानुग्रह
ुणम् । त्वञ्च देवि महाभागे क्रोधशीला मतासि मे ॥ ९२ ॥ इत्येतानि सशीलानि स्वभावाल्लोकनान्नृणाम् । कर्मतो यत्नतो बुद्धया रूपतो बल
त्तथा । क्षमातश्चैव भिन्नानि भावितार्थबलेन च ॥ ९३ ॥ रजःसत्त्वतमोवृत्तेर्विश्वरूपाः स्वभावतः । मातुलन्त्वनुयातास्ते पुत्रका गुणवृत्तिभिः॥९४॥
येवमुक्त्वा भगवान् खशामप्रतिमां तदा । पुत्रावाहूय साम्ना वै चक्रे सोममभीतयः ॥ ९५ ॥ ताभ्याञ्च यत् कृतं तस्यास्तदाचष्ट तदा खशा ।
ना यथा समाख्यातं कर्म ताभ्यां पृथक् पृथक् । तेन धात्वर्थयोगेन तत्त्वदर्शी चकार ह ॥ ९६ ॥ यक्ष इत्येष धातुर्वै खादने कृपणे च सः ।
्षयेत्युक्तवान् यस्मात् तस्माद्यक्षो भवत्वयम् ॥ ९७ ॥ रक्ष इत्येष धातुर्यः पालने स विभाव्यते । उक्तवांश्चैव यस्मात्तु रक्ष मे मातरं खशाम् ।
ाऽयं राक्षसस्तस्मात् भविष्यति तवात्मजः ॥ ९८ ॥ स तदा तद्विधान् दृष्ट्वा विस्मितः परिमृग्य च । तयोः प्रादिशदाहारं प्रजापतिरसृग्वसे ।
९९ ॥ पिता तौ क्षुधितौ दृष्ट्वा वरञ्चेमं तयोर्ददौ । युवयोर्हस्तसंस्पर्शो नक्तमेव तु सर्वशः ॥ १०० ॥ नक्ताहारविहारौ च दिवा स्वप्नोपभोगिनौ ।

नक्तञ्चैव बलीयांसौ दिवा सुप्तावुभौ युवाम् ॥ १०१ ॥ मातरं रक्षतञ्चैव धर्मश्चैवानुशिष्यताम् । इत्युक्त्वा कश्यपः पुत्रौ तत्रैवान्तरधीयत ॥ १०२ ॥
गते पितरि तौ वीरौ निसर्गादेव दारुणौ । विपर्ययेण वर्त्तन्तौ क्रिम्भक्षौ प्राणिहिंसकौ ॥ १०२ ॥ महाबलौ महासत्त्वौ महाकायौ दुरासदौ । माया
विनौ च दृश्यौ तावन्तर्द्धानगतावुभौ ॥ १०४ ॥ तौ कामरूपिणौ घोरौ विकृताङ्गौ स्वभावतः । रूपानुरूपैराहारैः प्रभवेतामुभावपि ॥ १०५ ॥ देवा
सुरानृषींश्चैव गन्धर्वान् किन्नरानपि । पिशाचांश्च मनुष्यांश्च पन्नगान् पक्षिणः पशून् ॥ १०६॥ भक्षार्थमपि लिप्सन्तौ सर्वतस्तौ निशाचरौ । इन्द्रेण तु
वरौ चैव धृतौ दत्त्वा सुवध्यताम् ॥ १०७ ॥ यक्षस्तु न कदाचिद्वै निशीथे ह्येककश्चिरम् । आहारं स परीप्सन् वै शब्देनानुचचार ह ॥ १०८ ॥
आससाद पिशाचौ द्वौ जन्तुचण्डो च तावुभौ । पिङ्गाक्षावूर्द्धरोमाणौ वृत्ताक्षौ तु सुदारुणौ ॥ १०९ ॥ असृङ्मांसवसाहारौ पुरुषादौ महाबलौ ।
कन्याभ्यां सहितौ तौ तु ताभ्यां प्रियचिकीर्षया ॥११०॥ द्वे कन्ये कामरूपिण्यौ तदाचारे च ते शुभे । आहारार्थमटन्तौ तौ कन्याभ्यां गृहितावुभौ ।
॥ १११ ॥ तेऽपश्यन् राक्षसं तत्र कामरूपं महाबलम् । सहसा सन्निपाते तु दृष्ट्वा चैव परस्परम् ॥११२॥ रक्षमाणौ ततोऽन्योन्यं परस्परजिघृक्षवः ।
पितरावूचतुः कन्ये युवामानयत द्रुतम् ॥ ११३ ॥ जीवग्राहं विगृह्यैनं विस्फुरन्तं पदे पदे । ततः समभिसृत्यैनं कन्ये जगृहतुस्तदा । गृहीत्वा
हस्तयोस्ताभ्यामानीते पितृसंसदि ॥ ११४ ॥ ताभ्यां करे गृहीतं तं पिशाचमथ राक्षसम् । पृच्छतां कोऽसि कस्य त्वं स च सर्वमभाषत
॥ ११५ ॥ तस्य कर्माभिविज्ञातं ज्ञात्वा तौ राक्षसर्षभौ । अजश्च खण्डं तस्यैते प्रत्यपादयतां सुते । तौ तुष्टौ कर्मणा तस्य कन्ये द्वे ददतुः सुते
॥ ११६ ॥ पैशाचेन विवाहेन सुदत्या बुद्धवाहनः । अजः खण्डश्च ताभ्यां तौ तदाश्रावयतां धनम् ॥ ११७ ॥ इयं ब्रह्मधना नाम मम कन्या
ह्यलोमिका । ब्रह्मसत्त्वधनाहारा इति खण्डोऽभ्यभाषत ॥ ११८ ॥ इयं जन्तुधना नाम कन्या सर्वाङ्गसुन्दरी । जन्तवोऽस्या धनाहारास्तानश्राव
यतां धनम् ॥ ११९ ॥ सर्वाङ्गकेशी नाम्ना च कन्या जन्तुधना तथा । अकर्णान्ताप्यरोमा च कन्या ब्रह्मधना तु या ॥ १२० ॥ ब्रह्मधनं प्रसूता सा
घनानाञ्चैव कन्यका । एवं पिशाचकन्ये ते मिथुने द्वे प्रसूयताम् । तयोः प्रजाविसर्गञ्च ब्रुवतो मे निबोधत ॥ १२१ ॥ हेतिः प्रहेतिरुग्रश्च पौरुषेयो
वधस्तथा । विस्फूर्जिश्चैव वातश्च आपो व्याघ्रस्तथैव च ॥ १२२ ॥ सर्पश्च राक्षसा ह्येते यातुधानात्मजा दश । सूर्यस्यानुचरा ह्येते सह
तेन भ्रमन्ति च ॥ १२३ ॥ हेतिपुत्रस्तथा लङ्कुर्लङ्कोद्धविव चात्मजौ । माल्यवांश्च सुमाली च प्रहेतितनयान् शृणु । प्रहेतितनयः श्रीमान् पुलोमा नाम
विश्रुतः ॥ १२४ ॥ वधपुत्रो निकुम्भश्च क्रूरो वै ब्रह्मराक्षसः । वातपुत्रो विरागस्तु आपपुत्रस्तु जम्बुकः ॥ १२५ ॥ व्याघ्रपुत्रो निरानन्दो जन्तूनां

विघ्नकारकः । इत्येते वै परिक्रान्ताः क्रूराः सर्वे तु राक्षसाः ॥ १२६ ॥ कीर्तिता यातुधानास्तु ब्रह्मधानान् निबोधत । यज्ञः पिता धुनिः क्षेमो
ब्रह्मा पापोऽथ यज्ञहा ॥ १२७ ॥ स्वाकोटकः कलिः सर्पो ब्रह्मधानात्मजा दश । स्वसारो ब्रह्मराक्षस्यस्तेषाञ्चेमाः सुदारुणाः ॥ १२८ ॥ रक्तकर्णा
महाजिह्वाऽक्षया चैवोपहारिणी । एतासामन्वये जाताः पृथिव्यां ब्रह्मराक्षसाः ॥ १२९ ॥ श्लेष्मातकतरुष्वेते प्रायशस्तु कृतालयाः । इत्येते राक्षसाः
क्रान्ता यक्षस्यापि निबोधत ॥ १३० ॥ चकमेऽप्सरसं यक्षः पञ्चस्थूलां क्रतुस्थलीम् । तां लिप्सुश्चिन्तमानश्च नन्दनं स चचार ह ॥ १३१ ॥ वैभ्राजं
सुरभिञ्चैव तथा चैत्ररथञ्च यत् । दृष्टवान् नन्दने तस्मिन्नप्सरोभिः सहासतीम् ॥ १३२ ॥ नोपायं विन्दते तत्र तस्या लाभाय चिन्त
यन् । दूषितः स्वेन रूपेण कर्म्मणा तेन दूषितः ॥ १३३ ॥ ममोद्विजन्ते भूतानि भयावृत्तस्य सर्वशः । तत्कथं नाम चार्वङ्गीं प्राप्नुयामहमङ्ग
नाम् ॥ १३४ ॥ दृष्टोपायं ततः सोऽथ शीघ्रकारी व्यवर्त्तत । कृत्वा रूपं वहुमतं गन्धर्वस्य तु गुह्यकः । ततः सोऽप्सरसां मध्ये तां जग्राह
क्रतुस्थलीम् ॥ १३५ ॥ बुद्धा च सुरुचिं तं सा भावेनैवाभ्यवर्त्तत । संवृतः स तया सार्द्धं दृश्यमानोऽप्सरोगणैः ॥ १३६ ॥ स तत्र सिद्ध
करणः सद्यो जातः सुतोऽस्य वै । परिणाहोच्छ्रयैर्युक्तः सद्यो वृत्तो ज्वलन् श्रिया ॥ १३७॥ राजाहमिति नाभिर्हि पितरं सोऽभ्यभाषत । तवात्र जाते
न भीतिः पिता तं प्रत्युवाच ह ॥१३८॥ मात्रानुरूपो रूपेण पितुर्वीर्येण जायते । जाते स तस्मिन् हर्षेण स्वरूपं प्रत्यपद्यत ॥ १३९ ॥ स्वभावं
प्रतिपद्यन्ते बृहन्तो यक्षराक्षसाः । म्रियमाणाः प्रसुप्ताश्च क्रुद्धा भीताः प्रहर्षिताः ॥ १४० ॥ ततोऽब्रवीदप्सरसः स्मयमानः स गुह्यकः । गृहं मे गच्छ
सुश्रोणि सपुत्रा वरवर्णिनी ॥ १४१ ॥इत्युक्त्वा सहसा तच्च दृष्ट्वा स्वं रूपमास्थितम् । विभ्रान्ताः प्राद्रवन् भीताः क्रोशमानाऽप्सरोगणाः ॥ १४२ ॥
गच्छन्तीरन्वगच्छद्या पुत्रस्तां सान्त्वयन् गिरा । गन्धर्वाप्सरसां मध्ये तां नीत्वा स न्यवर्त्तत ॥ १४३ ॥ताश्च दृष्ट्वा समुत्पत्तिं यक्षस्याप्सरसां गणाः ।
यक्षाणां त्वं जनित्रीति प्रोचुस्तां वै क्रतुस्थलीम् ॥ १४४ ॥ जगाम सह पुत्रेण ततो यक्षः स्वमालयम् । न्यग्रोधरोहिणं नाम गुह्यका यत्र शेरते ।
तस्मान्निवासो यक्षाणां न्यग्रोधः सर्वतः प्रियः ॥१४५॥ यक्षो रजतनाभस्तु गुह्यकानां पितामहः । अनुह्लादस्य दैत्यस्य भद्रामतिवरां सुताम् । उपयेमे
स भद्रायां यस्यां मणिवरो वशी ॥ १४६ ॥ जज्ञे सा मणिभद्रश्च शक्रतुल्यपराक्रमम् । तयोः पत्न्यौ भगिन्यौ तु क्रतुस्थल्यात्मजे शुभे ॥ १४७ ॥
नाम्ना पुण्यजनी चैव तथा देवजनी च या । विजज्ञे मणिभद्रात्तु पुत्रान् पुण्यजनी शुभान् ॥ १४८ ॥ सिद्धार्थं सूर्यतेजञ्च सुमन्तं नन्दनं तथा ।
कन्यकं यविकञ्चैव मणिदत्तं वसुं तथा ॥ १४९ ॥ सर्वानुभूतं शङ्खञ्च पिङ्गाक्षं भीरुमेव च । तथा मन्दरशोभिञ्च पद्मं चन्द्रप्रभं तथा ॥ १५० ॥ मघपूर्णं

सुभद्रश्च प्रद्योतश्च महौजसम् । द्युतिमत्केतुमन्तौ च मित्रं मौलिसुदर्शनौ ॥१५१॥ चत्वारो विंशतिश्चैव पुत्राः पुण्यजनाः शुभाः । जज्ञिरे मणिभद्रस्य
सर्वे पुण्यलक्षणाः । तेषां पुत्राश्च पौत्राश्च यक्षाः पुण्यजनाः शुभाः॥ १५२ ॥ विजज्ञे देवजननी पुत्रान् मणिवरात्मजात् । पूर्णभद्रं हेमरथं मणिमन्त्रि
वर्द्धनौ ॥ १५३ ॥ कुस्तुम्बुरुं पिशङ्गाभं स्थूलकर्णं महाजयम् । श्वेतश्च विपुलश्चैव पुष्पवन्तं भयावहम् ॥ १५४ ॥ पद्मवर्णं सुनेत्रश्च यक्षं वालं ब
तथा । कुमुदं क्षेमकश्चैव वर्द्धमानं तथा दमम् ॥ १५५ ॥ पद्मनाभं वराङ्गश्च सुवीरं विजयं कृतिम् । पूर्णमासं हिरण्याक्षं सुरूपश्चैवमादयः ॥ १५६
पुत्रा मणिवरस्यैते यक्षा वै गुह्यकाः स्मृताः । सुरूपाश्च विरूपाश्च स्रग्विणः प्रियदर्शनाः । तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ॥ १५७
खशायास्त्वपरे पुत्रा राक्षसाः कामरूपिणः । तेषां यथा प्रधानान् वै वर्ण्यमानान्निबोधत ॥ १५८ ॥ लालाविः कुथनो भीमः सुमाली मधुरे
च । विस्फूर्जितो विद्युज्जिह्वो मातङ्गो धूम्रितस्तथा ॥ १५९ ॥ चन्द्रार्कः सुकरो बुध्नः कपिलोमा प्रहासकः । क्रीडः परशुनाभश्च चक्राक्षः
निशाचरः ॥ १६० ॥ त्रिशिराः शतदंष्ट्रश्च तुण्डकेशश्च राक्षसः । यक्षश्चाकम्पनश्चैव दुर्मुखश्च शिलीमुखः ॥ १६१ ॥ इत्येते राक्षसवरा विक्रान्त
गणरूपिणः । सर्वलोकचरास्ते तु त्रिदशानां समक्रमाः ॥ १६२ ॥ सप्त चान्या दुहितरस्ताः शृणुध्वं यथाक्रमम् । तासाञ्च यः प्रजासर्गो ये
चोत्पादिता गणाः॥१६३॥ आलम्बा उत्कचा कृष्णा निर्ऋता कपिला शिवा । केशिनी च महाभागा भगिन्यः सप्त याः स्मृताः ॥ १६४ ॥ ताभ्
लोकामिषादश्च हन्तारो युद्धदुर्मदाः । उदीर्णा राक्षसगणा इमे उत्पादिताः शुभाः ॥ १६५ ॥ आलम्बेयो गणः क्रूर उत्कचेयो गणस्तथा । त
कार्ष्णेयश्शैवेया राक्षसा ह्युत्तमा गणाः ॥ १६६ ॥ तथैव नैर्ऋतो नाम त्र्यम्बकानुचरेण ह । उत्पादितः प्रजासर्गो गणेश्वरचरेण तु ॥ १६७
उत्पादिता बलवता उदीर्णा यक्षराक्षसाः । विक्रान्ताः शौर्यसम्पन्ना नैर्ऋता देवराक्षसाः । येषामधिपतिर्युक्तो नाम्ना ख्यातो विरूपकः ॥ १६८
तेषां गणशतानेका उद्धतानां महात्मनाम् । प्रायेणानुचरन्त्येते शङ्करं जगतः प्रभुम् ॥ १६९ ॥ दैत्यराजेन कुम्भेन महाकाया महात्मना ॥ उत्पादि
महावीर्या महाबलपराक्रमाः ॥ १७० ॥ कापिलेया महावीर्या उदीर्णा दैत्यराक्षसाः । कम्पनेन च यक्षेण केशिन्यास्ते परे जनाः ॥ १७१ ॥ उत्
दिता महावाता उदीर्णा यक्षराक्षसाः । केशिनीदुहितुश्चैव नीलायाः क्षुद्रमानसाः ॥ १७२ ॥ आलम्बेयेन जनिता नैकाः सुरासिकेन हि । नैत
इति समाख्याता दुर्जया घोरविक्रमाः ॥ १७३ ॥ चरन्ति पृथिवीं कृत्स्नां तत्र ते देवलौकिकाः । बहुत्वाच्चैव सर्गस्य तेषां वक्तुं न शक्यते ॥ १७४
तस्यास्त्वपि च नीलाया विकचा नाम राक्षसी । दुहिता स्वभावविकचा मन्दसत्त्वपराक्रमा ॥ १७५ ॥ तस्या अपि विरूपेण नैर्ऋतेनेह च प्रजाः

उत्पादिताः सुरा घोराः शृणु तास्त्वनुपूर्वशः ॥ १७६ ॥ दंष्ट्राकरालविकृता महाकर्णा महोदराः । हारका भीषकाश्चैव तथैव क्रामकाः परे ॥ १७७
वैनकाश्च पिशाचाश्च वाहकाः प्राशकाः परे । भूमिराक्षसका ह्येते मन्दाः पुरुषविक्रमाः ॥ १७८ ॥ चरन्त्यदृष्टपूर्वाश्च नानाकारा ह्यनेकशः । उत्
वलसत्त्वा ये ते च वै खेचराः स्मृताः ॥ १७९ ॥ लक्षमात्रेण चाकाशं स्वल्पाः स्वल्पं चरन्ति वै । एतैर्व्याप्तमिमं लोकं शतशोऽथ सहस्रशः ॥१८
भूमी राक्षसकैः सर्वैरनेकैः क्षुद्रराक्षसैः । नानाप्रकारैराक्रान्ता नानादेशाः समन्ततः ॥ १८१ ॥ समासाभिहताश्चैव ह्यष्टौ राक्षसमातरः । अष्टौ विभा
ह्येषां हि विख्याता अनुपूर्वशः ॥ १८२ ॥ भद्रका निकराः केचिद्यज्ञनिष्पत्तिहेतुकाः । सहस्रशतसङ्ख्याता मर्त्यलोकविचारिणः ॥ १८३ ॥ पूत
मातृसामान्यास्तथा भूतभयङ्कराः । बालानां मानुषे लोके ग्रहा वैमानहेतुकाः ॥ १८४ ॥ स्कन्दग्रहादयश्चैव आपकात्रासकादयः । कौमारास्ते
विज्ञेया बालानां ग्रहवृत्तयः ॥ १८५ ॥ स्कन्दग्रहविशेषाणां मायिकानां तथैव च । पूतनानामभूतानां ये च लोकविनायकाः ॥ १८६ ॥ सहस्र
सङ्ख्यानां मर्त्यलोकविचारिणाम् । एवं गणशतान्येव चरन्ति पृथिवीमिमाम् ॥ १८७ ॥ यक्षाः पुण्यतमा नाम तथा ये केऽपि गुह्यकाः । यक्षा देवज
श्चैव तथा पुण्यजनाश्च ये ॥ १८८ ॥ गुह्यकानाञ्च सर्वेषामगस्त्या ये च राक्षसाः । पौलस्त्या राक्षसा ये च विश्वामित्राश्च ये स्मृताः ॥ १८९ ॥ यक्षा
राक्षसानाञ्च पौलस्त्यागस्त्ययश्च ये । तेषां राजा महाराजः कुवेरो ह्यलकाधिपः ॥ १९० ॥ यक्षा दृष्ट्वा पिबन्तीह नृणां मांसमसृग्वसाम् । रक्षांस्यनु
शेन पिशाचाः परिपीडनैः ॥ १९१ ॥ सर्वलक्षणसम्पन्नाः समक्षेत्राश्च दैवतैः । भास्वरा बलवन्तश्च ईश्वराः कामरूपिणः ॥१९२॥ अनाभिभक्षा विक्रान्त
सर्वलोकनमस्कृताः । सूक्ष्माश्चौजस्विनो मेध्या वरदा यज्ञियाश्च ये ॥१९३॥ देवानां तुल्यधर्माणां ह्यसुराः सर्वशः स्मृताः । त्रिभिः पादैस्तु गन्धर्वा
हीनाः प्रभावतः ॥ १९४ ॥ गन्धर्वेभ्यस्त्रिभिः पादैर्हीना वै सर्वगुह्यकाः । प्रभावतुल्या यक्षाणां विज्ञेयाः सर्वराक्षसाः । ऐश्वर्यहीना यक्षेभ्यः पिशाचा
गुणं पुनः ॥ १९५ ॥ एवं धनेन रूपेण आयुषा च बलेन च । धर्मैश्वर्येण बुद्ध्या च तपःश्रुतपराक्रमैः ॥ १९६ ॥ देवासुरेभ्यो हीयन्ते त्रीन् पादान्
परस्परम् । गन्धर्वाद्याः पिशाचान्ताश्चतस्रो देवयोनयः ॥ १९७ ॥ सूत उवाच ॥ अतः शृणुत भद्रं वः प्रजाः क्रोधवशात्मकाः । क्रोधायां कन्यका ज
द्वादश ह्यात्मसम्भवाः । ता भार्याः पुलहस्यासन्नामतस्ता निबोधत ॥ १९८ ॥ मृगी च मृगमन्दा च हरिभद्रा इरावती । भूता च कपिशा दंष्ट्रा नि
तिर्या तथैव च । श्वेता चैव स्वरा चैव सुरसा चेति विश्रुताः ॥ १९९ ॥ मृग्यास्तु हरिणाः पुत्रा मृगाश्चान्ये शशास्तथा । न्यङ्कवः शरभा ये
रुरवः पृषताश्च ये ॥ २०० ॥ मृगराजा मृगमन्दाया गवयाश्चापरे तथा । महिषोष्ट्रवराहाश्च खड्गगौरमुखास्तथा ॥ २०१ ॥ हरेस्तु हरयः प्

गोलाङ्गूलतरक्षवः । वानराः किन्नराश्चैव व्यालाः किम्पुरुषास्तथा । इत्येवमादयोऽन्येऽपि इरावत्या निबोधत ॥ २०२ ॥ सूर्यस्याण्डकपाले द्वे समानीय तु भौवनः । हस्ताभ्यां परिगृह्याथ रथन्तरमगायत ॥ २०३ ॥ साम्ना प्रसूयमानेन सद्य एव गजोऽभवत् । स प्रायच्छदिरावत्यै पुत्रार्थं स तु भौवनः ॥ २०४ ॥ इरावत्याः सुतो यस्मात्तस्मादैरावतः स्मृतः । देवराजोपवाह्यत्वात् प्रथमः स मतङ्गराट् । शुभ्राभ्रभाश्चतुर्दंष्ट्रः श्रीमानैरावतो गजः ॥ २०५ ॥ अभ्रमुजस्यैकमूलस्य सुवर्णाभस्य हस्तिनः । षड्दन्तस्य हि भद्रस्य औपवाह्यश्च वै बलः ॥ २०६ ॥ तस्य पुत्रोऽञ्जनश्चैव सुप्रतीकोऽथ वामनः । पद्मश्चैव चतुर्थोऽभूद्धस्तिनी चाभ्रमुस्तथा ॥ २०७ ॥ दिग्गजांस्तांश्च चत्वारः श्वेताऽजनयताशुगान् । भद्रं मृगञ्च मन्दं च सङ्कीर्णं चतुरः सुतान् ॥ २०८ ॥ सङ्कीर्णोऽप्यञ्जनो यस्तु उपवाह्यो यमस्य तु । भद्रो यः सुप्रतीकस्तु हरितः स ह्यपाम्पतेः ॥ २०९ ॥ पद्मो मन्दस्तु यो गौरो द्विपो ह्यैलविलस्य सः । मृगः श्यामस्तु यो हस्ती उपवाह्यः स पावकेः ॥ २१० ॥ पद्मोत्तरस्तु यः पद्मौ गजो वै वरुणो गणः । उपलेपनमेषश्च तस्याष्टौ जज्ञिरे सुताः ॥ २११ ॥ उदग्रभावेनोपेता जायन्ते तस्य चान्वये । श्वेतवालनखाः पिङ्गा वर्ष्मवन्तो मतङ्गजाः । मतङ्गजान् प्रवक्ष्यामि नागानन्यानपि क्रमात् ॥ २१२ ॥ कपिलः पुण्डरीकश्च सुमनाभो रथान्तरः । जातौ नाम्ना सुतौ ताभ्यां सुप्रतिष्ठप्रमर्दनौ ॥ २१३ ॥ शूलाः स्थूलाः शिरोदान्ताः शुद्धवालनखास्तथा । बलिनः शक्तिनश्चैव स्मृतास्त्वाकुलिका गजाः ॥ २१४ ॥ पुष्पदन्तो बृहत्सामा षड्दन्तो दन्तपुष्पवान् । ताम्रवर्णश्च तत्पुत्रः सहचारिविषाणितः ॥ २१५ ॥ अन्वये चास्य जायन्ते लम्बोष्ठाश्चारुदर्शिनः । श्यामाः सुदर्शनाश्चण्डा नानापीडायताननाः ॥ २१६ ॥ वामदेवोऽञ्जनश्यामः साम्नो जज्ञेऽथ वामनः । भार्या चैवाङ्गदा तस्य नीलवल्लक्षणौ सुतौ ॥ २१७ ॥ चण्डाश्चात्राशिरोग्रीवा व्यूढोरस्कास्तरास्विनः । नैर्बद्धाः कुले तेषां जायन्ते विकृता गजाः ॥ २१८ ॥ सुप्रतीकस्तु रूपेण नास्त्यस्य सदृशो गजः । तस्य प्रहारी सम्पाती पृथुश्चित्तिसुतास्त्रयः ॥ २१९ ॥ पशवो दीर्घताल्वोष्ठाः सुविभक्तशिरोदराः । जायन्ते मृदुसम्भूता वंशे तस्य मतङ्गजाः ॥ २२० ॥ अञ्जनादञ्जना साम्नो विजज्ञे चाञ्जनावती । एवं माता तयोश्चापि प्रथितायुरजःसुतौ ॥ २२१ ॥ महाविभक्तशिरसः स्निग्धजीमूतसन्निभाः । सुदर्शनाः सुवर्ष्माणः पद्माभाः परिमण्डलाः । शूनाः पीतायतमुखा गजास्तस्यान्वयेऽभवन् ॥ २२२ ॥ जज्ञे चन्द्रमसः साम्नः पिङ्गला कुमुदद्युतिः । ॥१२०४
पिङ्गलायाः सुतौ तस्या महापद्मोर्मिमालिनौ ॥ २२३ ॥ समायवरदांश्चण्डान् प्रवृद्धवालिनोदरान् । हस्तियुद्धे प्रियान्नागान् विद्धि तस्य कुलोद्भवान् ॥ २२४ ॥ एतान् देवासुरे युद्धे जयार्थं जगृहुः सुराः । कृतार्थैश्च विसृष्टास्तैः पूर्वोक्ताः प्रययुर्दिशः ॥ २२५ ॥ एतेषामन्वये जातान् विनीतांस्त्रिदशा

ददुः। अङ्गाय लोमपादाय सूत्रकाराय वै द्विपान् ॥ २२६ ॥ द्विरदो द्विरदाभ्याञ्च हस्ताद्धस्ती करात्करी। वरणाद्वारणो दन्ती दन्ताभ्यां गर्जनाद्गजः ॥ २२७ ॥ कुञ्जरः कुञ्जचारित्वान्नागो नगविरोधतः। मतङ्गादिति मातङ्गो द्विपो द्वाभ्यामपि स्मृतः । सामजः सामजातत्वादिति निर्वचनक्रमः ॥ २२८ ॥ एषां जिह्वापरावृत्तिरिवाक्तं ह्यग्निशापजम्। बलस्यानवतो या तु या चैषां गूढमुष्कता । उभयं दन्तिनामेतत्स्वयम्भूसुरशापजम् ॥ २२९ ॥ देवदानवगन्धर्वाः पिशाचोरगराक्षसाः। कन्यासु जाता दिङ्नागैर्नानासत्त्वास्ततो गजाः ॥ २३० ॥ सम्भूतिश्च प्रभूतिश्च नामनिर्वचनं तथा। एतद्गजानां विज्ञेयं येषां राजा विभावसुः ॥२३१॥ कौशिकायाः समुद्रात्तु गङ्गायास्तदनन्तरम्। अञ्जनस्यैकमूलस्य प्राच्यान्नागवनन्तु तत् ॥२३२॥ उत्तरातस्य विन्ध्यस्य गङ्गाया दक्षिणश्च यत्। गङ्गोद्भेदात्करूषेभ्यः सुप्रतीकस्य तद्वनम् ॥ २३३ ॥ अपरेणोत्कलाच्चैव ह्यावेदिभ्यश्च पश्चिमम् । एकभूतात्मनोस्यैतद्वामनस्य वनं स्मृतम् ॥२३४॥ अपरेण तु लौहित्यमासिन्धोः पश्चिमेन तु। यमस्यैतद्वनं प्रोक्तमनुपर्वतमेव तत् ॥२३५॥ भूतिर्विजज्ञे भूतांश्च रुद्रस्यानुचरान् प्रभोः। स्थूलान् कृशांश्च दीर्घांश्च वामनान् ह्रस्वकान् समान् ॥ २३६॥ लम्बकर्णान् प्रलम्बोष्ठान् लम्बजिह्वास्तनोदरान्। एकरूपान् द्विरूपांश्च लम्बस्फिक्स्थूलपिण्डिकान्॥२३७॥ सरोवरसमुद्रादिनदीपुलिनवासिनः। कृष्णान् गौरांश्च नीलांश्च श्वेतांश्च लोहितारुणान् ॥२३८॥ बभ्रून् वै शवलान् धूम्रान् कद्रून् रासभदारुणान्। मुञ्जकेशान् हृषीकेशान् सर्पयज्ञोपवीतिनः ॥ २३९ ॥ विसृष्टाक्षान् विरूपाक्षान् कृशाक्षानेकलोचनान्। बहुशीर्षान् विशीर्षांश्च एकशीर्षांश्च शीर्षकान् ॥ २४० ॥ चण्डांश्च विकटांश्चैव विरोमान् रोमशांस्तथा। अन्धांश्च जटिलांश्चैव कुब्जान् ह्रेपकवामनान् ॥ २४१ ॥ सरोवरसमुद्रादिनदीपुलिनसेविनः। एककर्णान् महाकर्णान् शङ्कुकर्णानकर्णिकान् ॥ २४२ ॥ दंष्ट्रिणो नाखिनश्चैव निर्दन्तांश्च द्विजिह्वकान्। एकहस्तान् द्विहस्तांश्च त्रिहस्तांश्चाप्यहस्तकान् ॥ २४३ ॥ एकपादान् द्विपादांश्च त्रिपादान् बहुपादकान्। महायोगान् महासत्त्वान् सुतपस्कान् महाबलान् ॥ २४४ ॥ सर्वत्रगानप्रतिघान् ब्रह्मज्ञान् कामरूपिणः। घोरान् क्रूरांश्च मेध्यांश्च शिवान् पुण्यान् सवादिनः ॥ २४५ ॥ कुशहस्तान् महाजिह्वान् महाकर्णान्महाननान्। हस्तादांश्च मुखादांश्च शिरोदांश्च कपालिनः ॥२४६॥ धन्विनो मुद्गरधरानसिशूलधरांस्तथा। दीप्तास्यान् दीप्तनेत्रांश्च चित्रमाल्यानुलेपनान् ॥ २४७ ॥ अन्नादान् पिशितादांश्च बहुरूपान् सुरूपकान् । रात्रिसन्ध्याचरान् घोरान् कांश्चित्सौम्यान् दिवाचरान्। नक्तञ्चरान् सुदुष्प्रेक्ष्यान् घोरांस्तान् वै निशाचरान् ॥ २४८॥ परत्वे च भयं दैवं सर्वे ते गतमानसाः। नैषां भार्याऽस्ति पुत्रो वा सर्वे ते ह्यूर्ध्वरेतसः ॥ २४९ ॥ शतन्तानि सहस्राणि भूतानामात्मयोगिनाम्। एते सर्वे महात्मानो भूत्याः पुत्राः प्रकीर्त्तिताः ॥२५०॥ कपिशा चैव कूष्माण्डी कूष्माण्डाञ्जज्ञिरे पुनः । मिथुनानि

पिशाचानां वर्णेन कपिशेन च । कपिशत्वात् पिशाचास्ते सर्वे च पिशिताशनाः ॥ २५१ ॥ युग्मानि षोडशान्यानि वर्त्तमानास्तदन्वयाः । नामतस्तान् प्रवक्ष्यामि पुरुषादांस्तदन्वयान् ॥ २५२ ॥ छगलश्छगली चैव वक्रो वक्रमुखी तथा । षोडशानां गणाश्चैव सूची सूचीमुखस्तथा ॥ २५३ ॥ कुम्भपात्रश्च कुम्भी च वज्रदंष्ट्रश्च दुन्दुभिः । उपचारोपचारश्च उलूखल उलूखली ॥२५४ ॥ अनर्कश्च अनर्का च कुखण्डश्च कुखण्डिका । पाणिपात्रः पाणिपात्री पांशुः पांशुमती तथा ॥ २५५ ॥ नितुण्डश्च नितुण्डी च निपुणा निपुणस्तथा । छलादोच्छेषणा चैव प्रस्कन्दः स्कन्दिका तथा । षोडशानां पिशाचानां गणाः प्रोक्तास्तु षोडश ॥ २५६ ॥ अजामुखा वक्रमुखाः पूरिणः स्कन्दिनस्तथा । विपादाङ्गारिकाश्चैव कुम्भपात्राः प्रकुन्दकाः ॥ २५७ ॥ उपचारोलूखलिका ह्यनर्काश्च कुखण्डिकाः । पाणिपात्राश्च नैतुण्डा ऊर्णाशा निपुणास्तथा ॥ २५८ ॥ सूचीमुखोच्छेषणादाः कुलान्येतानि षोडश । इत्येता ह्यभिजातास्तु कूष्माण्डानां प्रकीर्तिताः ॥ २५९ ॥ पिशाचास्ते तु विज्ञेयाः सुकल्पा इति जज्ञिरे । बीभत्सं विकृताचारं पुत्रपौत्रमनन्तकम् । अतस्तेषां पिशाचानां लक्षणञ्च निबोधत ॥ २६० ॥ सर्वाङ्गकेशा वृत्ताख्या दंष्ट्रिणो नखिनस्तथा । तिर्यङ्गाः पुरुषादाश्च पिशाचास्ते ह्यधोमुखाः ॥ २६१ ॥ अकेशका ह्यरोमाणस्त्वग्वसाश्चर्मवाससः । कूष्माण्डिकाः पिशाचास्ते तिलभक्षाः सदामिषाः ॥ २६२ ॥ वक्राङ्गहस्तपादाश्च वक्रशीलागतास्तथा । ज्ञेया वक्रपिशाचास्ते वक्रगाः कामरूपिणः ॥ २६३ ॥ लम्बोदरास्तुण्डनाशा ह्रस्वकायशिरोभुजाः । नितुन्दकाः पिशाचास्ते तिलतक्षाः प्रियश्रवाः ॥ २६४ ॥ वामनाकृतयश्चैव वाचालाः प्लुतगामिनः । पिशाचानर्कमर्कास्ते वृक्षवासादनप्रियाः ॥ २६५ ॥ ऊर्द्ध्वबाहूर्द्ध्वरोमाण ऊर्द्ध्ववृक्षास्तथालयाः । मुञ्चन्ति पांशूनङ्गेभ्यः पिशाचाः पांशवश्च ते ॥ २६६ ॥ धमनीमतकाः शुष्काः श्मश्रुलाश्चीरवाससः । उपवीराः पिशाचाश्च श्मशानायतनास्तथा ॥ २६७ ॥ विषण्धाक्षा महाजिह्वा लेलिहाना ह्युदूखलाः । हस्त्युग्रस्थूलशिरसो विरता बद्धपिण्डकाः ॥ २६८ ॥ पिशाचाः कुम्भपात्रास्ते अदृष्टान्नानि भुञ्जते । सूक्ष्मास्तु रोमशाः पिङ्गा दृष्टादृष्टाश्चरन्ति वै ॥ २६९ ॥ अयुक्ताश्च विशन्तीह निपुणास्ते पिशाचकाः । आकर्णदारितास्याश्च लम्बभ्रूस्थूलनासिकाः ॥ २७० ॥ हस्तपादाक्रान्तगणा ह्रस्वकाः क्षितिदृष्टयः । बालादास्ते पिशाचा वै सूतिकागृहसेविनः ॥ २७१ ॥ पृष्ठतः पाणिपादाश्च ह्रस्वका वातरंहसः । पिशितादाः पिशाचास्ते संग्रामे रुधिराशिनः ॥ २७२ ॥ नग्नका ह्यनिकेताश्च लम्बकेशाश्च पिण्डकाः । पिशाचाः स्कन्दिनस्ते वै अन्या उच्छ्वसनाशिनः । षोडश जातयस्तेषां पिशाचानां प्रकीर्तिताः ॥ २७३ ॥ एवंविधान्पिशाचांस्तु दीनान्दृष्ट्वानुकम्पया । तेभ्यो ब्रह्मा वरं प्रादात्कारुण्यादल्पचेतसः । अन्तर्द्धानं प्रजास्तेषां कामरूपत्वमेव च ॥ २७४ ॥ उभयोः सन्ध्ययोश्चारं

स्थानान्याजीवमेव च । गृहाणि यानि भग्नानि शून्यान्यल्पजनानि च ॥ २७५ ॥ विध्वस्तानि च यानि स्युरनाचारोपितानि च । असंस्पृष्टोप
लिप्तानि संस्कारैर्वर्जितानि च ॥ २७६ ॥ राजमार्गोपरथ्याश्च निष्कुण्ठाश्चत्वराणि च । द्वाराण्यट्टालकाश्चैव निर्ममान्संक्रमांस्तथा ॥ २७७ ॥
पथो नद्योऽथ तीर्थानि चैत्यवृक्षान्महापथान् । पिशाचा विनिविष्टा वै स्थानेष्वेतेषु सर्वशः ॥ २७८ ॥ अधार्मिका जनास्ते वै आजीवा विहिताः सुरैः ।
वर्णाश्रमाः सङ्करिकाः कारुशिल्पिजनास्तथा ॥ २७९ ॥ अमृतोपमसत्त्वानां चौरविश्वासघातिनाम् । एतैरन्यैश्च बहुभिरन्यायोपार्जितैर्धनैः । आरभन्ते
क्रिया यास्तु पिशाचास्तत्र देवताः ॥ २८० ॥ मधुमांसौदनैर्दध्ना तिलचूर्णसुरासवैः । धूपैर्हारिद्रकृशरैस्तैलभद्रगुडौदनैः ॥ २८१ ॥ कृष्णानि चैव
वासांसि धूपाः सुमनसस्तथा । एवं युक्ताः सुबलयस्तेषां वै पर्वसन्धिषु । पिशाचानामनुज्ञाय ब्रह्मा सोऽधिपतिर्ददौ ॥ २८२ ॥ सर्वभूतपिशाचानां
गिरिशं शूलपाणिनम् । दृष्ट्वा त्वजनयत्पुत्रान्व्याघ्रान्सिंहांश्च भामिनी ॥ २८३ ॥ द्विपिनश्च सुतास्तस्या व्यालेयाश्चामिषाशिनः । ऋषयश्चापि
कात्स्न्र्येन प्रजासर्गं निबोधत । तस्या दुहितरः पञ्च तासां नामानि मे शृणु ॥ २८४ ॥ मीना माता तथा वृत्ता परिवृत्ता तथैव च । अनुवृत्ता तु
विज्ञेया तासां वै शृणुत प्रजाः ॥ २८५ ॥ सहस्रदन्ता मकराः पाठीनास्तामरोहिताः । इत्येवमादिर्हि गणो मैनो विस्तीर्ण उच्यते ॥ २८६ ॥
ग्राहाश्चतुर्विधा ज्ञेयास्तथानुज्येष्ठका अपि । निष्कांश्च शिशुमारांश्च माता व्यजनयत्प्रजाः ॥ २८७ ॥ वृत्ता कूर्मविकाराणि नैकानि जलचारिणाम् ।
तथा शङ्खविकाराणि जनयामास नैकशः ॥ २८८ ॥ मण्डूकानां विकाराणि अनुवृत्ता व्यजायत । ऐणेयानां विकाराणि शम्बूकानां तथैव च ॥ २८९ ॥
तथा शुक्तिविकाराणि वराटककृतानि च । तथा शङ्खविकाराणि परिवृत्ता व्यजायत ॥ २९० ॥ कालकूटविकाराणि जलौकाविहितानि च ॥ इत्येष
हि ऋषेर्वंशः पञ्चशाखाः प्रकीर्तिताः ॥ २९१ ॥ तिर्यग् हेतुकमाद्याहुर्बहुलं वंशविस्तरम् । संस्वेदजविकाराणि यथा येभ्यो भवन्ति ह ॥ २९२ ॥
स्वस्तिपिकशरीरेभ्यो जायन्त्युत्पादका द्विजाः । मनुष्याः स्वेदमलजाः उशना नाम जन्तवः । नानापिपीलिकगणाः कीटका बद्धपादकाः ॥ २९३ ॥
शङ्खोपलविकाराणि कीलकाचारकाणि च । इत्येवमादिबहुलाः स्वेदजाः पार्थिवा गणाः ॥ २९४ ॥ तथा घर्मादितप्ताभ्यस्त्वद्भ्यो वृष्टिभ्य एव च ।
नैका मृगशरीरेभ्यो जायन्ते जन्तवस्त्विमे ॥ २९५ ॥ मीनकाः पिप्पला दंशास्तथा तित्तिरपुत्रिकाः । नीलचित्राश्च जायन्ते ह्यलका बहुविस्तराः ॥ २९६ ॥
जलजाः स्वेदजाश्चैव जायन्ते जन्तवस्त्विमे । काशतो यज्ञकाः कीटनलदा बहुपादकाः ॥ २९७ ॥ सिंहला रोमलाश्चैव पिच्छलाः परिकीर्तिताः ।
इत्येमादिर्हि गणो जलजः स्वेदजः स्मृतः ॥ २९८ ॥ सर्पिभ्यो मापमुद्गानां जायन्ते क्रमशस्तथा । जम्बुबिल्वाम्रपूगेभ्यः फलेभ्यश्चैव जन्तवः ॥२९९॥

मुद्गेभ्यः पनसेभ्यश्च तण्डुलेभ्यस्तथैव च । तथा कोटरशुष्केभ्यो निहितेभ्यो भवन्ति हि ॥ ३०० ॥ अन्येभ्योऽपि च जायन्ते न हि तेभ्यश्चिरं सदा ।
जन्तवस्तुरगादिभ्यो विषादिभ्यस्तथैव च ॥ ३०१ ॥ बहून्यहानि निःक्षिप्ते सम्भवन्ति च गोमये । जायन्ते कृमयो विप्रा काष्ठेभ्यश्च घुणादयः ॥३०२॥
क्रमाद् द्रुमाणां जायन्ते विविधा नीलमक्षिकाः । तथा शुष्कविकारेभ्यः पुत्रिकाः प्रभवन्ति च ॥ ३०३ ॥ कालिका शतिकेभ्यश्च सर्पा जायन्ति सर्वशः ।
संस्वेदजाश्च जायन्ते वृश्चिकाः शुष्कगोमयात् ॥ ३०४ ॥ गोभ्यो हि महिषेभ्यश्च जायन्ते जन्तवः प्रभो । मत्स्यादयश्च विविधा अण्डकुक्षौ विशेषतः
॥ ३०५ ॥ चैवीरिकाश्च जायन्ते तथा गोजाकुलानि च । तथान्यानि च सूक्ष्माणि जलौकादीनि जातयः ॥ ३०६ ॥ मक्षिकाणां विकाराणि जायन्ते जात
योऽपरे । प्रायेण तु वसन्त्यस्मिन्नुच्छिष्टोदककर्दमे ॥ ३०७ ॥ मशकानां विकाराणि भ्रमराणां तथैव च । तृणेभ्यश्चैव जायन्ते पुत्रिका पुत्रभासकाः ॥३०८॥
मणिच्छेदास्तथा व्यालाः पोतजाः परिकीर्त्तिताः । शतवेरीविकाराणि करीषेभ्यो भवन्ति ह ॥३०९॥ एवमादिरसङ्ख्यातो गणः संस्वेदजो मया । समासाभि
हितो ह्येष प्राक्कर्मवशजः स्मृतः ॥ ३१० ॥ तथाऽन्ये नैर्ऋताः सत्त्वास्ते स्मृता उपसर्गजाः । पूतास्तु योनिजाः केचित्केचिदौत्पत्तिकाः स्मृताः ॥ ३११ ॥
प्रायेण देवाः सर्वे वै विज्ञेया ह्युपपत्तिजाः । केचित्तु योनिजा देवाः केचिद्देवानिमित्ततः ॥ ३१२ ॥ तूलालाघश्च कोलश्च शिवा कन्या तथैव च । अपत्यं
सरमायास्तु गणा वै सरमादयः ॥ ३१३ ॥ श्यामश्च शबलश्चैव अर्जुनो हरितस्तथा । कृष्णो धूम्रारुणश्चैव तूलालाघश्च कद्रुकाः ॥ ३१४ ॥ सुरसाथ
विजज्ञे तु शतमेकं शिरो मतम् । सर्पाणां तक्षको राजा नागानाञ्चापि वासुकिः । तमोबहुल इत्येष गणः क्रोधवशात्मकः ॥ ३१५ ॥ पुलहस्यात्मजा
सर्गस्ताम्रायास्तान्निबोधत । बह्वन्यास्त्वभिविख्यातास्ताम्रायाश्च विजज्ञिरे ॥ ३१६ ॥ श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा । अरुणस्य भार्या
श्येनी तु वीर्यवन्तौ महाबलौ । सम्पातिश्च जटायुश्च प्रसूता पक्षिसत्तमौ ॥३१७॥ सम्पातिरजनत् पुत्रं कन्यामेकां तथैव च । जटायुपश्च ये पुत्राः काक
गृध्राश्वकर्णिनः॥३१८॥ भार्या गरुत्मतश्चापि भासी क्रौञ्ची तथा शुकी । धृतराष्ट्री च भद्रा च तास्त्वपत्यानि वक्ष्यते॥३१९॥ शुकी गरुत्मतः पुत्रान् सुषुवे
षट् परिश्रुतान् । त्रिशिरं सुमुखश्चैव बलं पृष्ठं महाबलम् ॥३२०॥ त्रिशङ्कुनेत्रं सुमुखं सुरूपं सुरसं बलम् । एषां पुत्राश्च पौत्राश्च गरुडानां महात्मनाम्
॥ ३२१ ॥ चतुर्दश सहस्राणि क्रूराणां पन्नगाशिनाम् । पुत्रपौत्रविसर्गाच्च तेषां वै वंशविस्तरः॥ ३२२ ॥ व्याप्तानि यानि देशानि तानि वक्ष्ये यथाक्रमम् ।
शाल्मलिद्वीपमखिलं देवकूटञ्च पर्वतम् ॥ ३२३ ॥ मणिमन्तञ्च शैलेन्द्रं सहस्रशिखरं तथा । पर्णमालं सुकेशञ्च शतशृङ्गं तथाचलम् ॥ ३२४ ॥
कौरजं पञ्चशिखरं हेमकूटञ्च पर्वतम् । प्रचण्डवायुप्रभवैर्दीपितैः पद्मरागिभिः ॥ ३२५ ॥ शैलजालानि व्याप्तानि गारुडैस्तैर्महात्मभिः । भासीपुत्राः

स्मृता भासा उलूकाः काककुक्कुटाः ॥ ३२६ ॥ मयूराः कलविङ्काश्च कपोता लावतित्तिराः । क्रौञ्ची वार्द्धीणसान् श्येनी कुररान्सारसान्बकान्॥३२७॥
इत्येवमादयोन्येऽपि क्रव्यादा ये च पक्षिणः । धृतराष्ट्री च हंसांश्च कलहंसांश्च भामिनी ॥ ३२८ ॥ चक्रवाकांश्च विहगान्सर्वांश्चैवादकान् द्विजान् । एता
नेव विजज्ञेऽथ पुत्रपौत्रमनन्तकम् ॥ ३२९ ॥ गरुडस्यात्मजाः प्रोक्ता इरायाः शृणुत प्रजाः । इरा प्रजज्ञे कन्या वै तिस्रः कमललोचनाः ॥ ३३० ॥ वन
स्पतीनां वृक्षाणां वीरुधाञ्चैव मातरः । लता चैवाथ वल्ली च वीरुधा चेति तास्तु वै ॥३३१॥ लता वनस्पतीञ्जज्ञे ह्यपुष्पान् पुलिनस्थितान् । युक्तान्पु
ष्पफलैर्वृक्षान् लता वै सम्प्रसूयते ॥ ३३२ ॥ अथ वल्ली तु गुल्मांश्च त्वक्सारास्तृणजातयः । वीरुधा तदपत्यानि वंशश्चात्र समाप्यते ॥ ३३३ ॥ एते
कश्यपदायादा व्याख्याताः स्थाणुजङ्गमाः । तेषां पुत्राश्च पौत्राश्च यैरिदं पूरितं जगत्॥३३४॥इति सर्गैकदेशस्य कीर्तितोऽन्वयो मया । मारीचोऽयं प्रजा
सर्गः समासेन प्रकीर्तितः । न शक्यं व्यासतो वक्तुमपि वर्षशतैर्द्विजाः ॥ ३३५ ॥ अदितिर्धर्मशीला तु बलशीला दितिः स्मृता । तपःशीला तु सुरभि
र्मायाशीला दनुः स्मृता ॥ ३३६ ॥ क्रूरशीला तथा कद्रुः क्रौञ्च्यथ श्रुतिशालिनी । इरा ग्रहणशीला तु दनायुर्भक्षणे रता ॥ ३३७ ॥ वाहशीला तु
विनता ताम्रा वै पाशशालिनी । स्वभावा लोकमातृणां शीलान्येतानि सर्वशः ॥ ३३८ ॥ धर्मतः शीलतो बुद्ध्या क्षमया बलरूपतः । रजःसत्त्वतमो
वृत्ता धार्मिकाधार्मिकास्तु वै ॥ ३३९ ॥ मातृतुल्याश्चाभिजाताः कश्यपस्यात्मजाः प्रजाः । देवतासुरगन्धर्वा यक्षराक्षसपन्नगाः । पिशाचाः पशवश्चैव
मृगाः पतङ्गवीरुधः ॥ ३४० ॥ यस्माद्दाक्षायणीष्वेते जज्ञिरे मानुषीष्विह । मन्वन्तरेषु सर्वेषु तस्माच्छ्रेष्ठास्तु मानुषाः ॥ ३४१ ॥ धर्मार्थकाममोक्षाणां
मानुषाः साधकास्तु वै । ततोऽधः स्रोतसस्ते वै उत्पद्यन्ते सुरासुराः ॥ ३४२ ॥ जायन्ते कार्यसिद्ध्यर्थं मानुषेषु पुनः पुनः । इत्येवं वंशप्रभवः प्रसङ्ख्या
तस्तपस्विनाम् ॥ ३४३ ॥ सुराणामसुराणाञ्च गन्धर्वाप्सरसां तथा । यक्षरक्षःपिशाचानां सुपर्णोरगपक्षिणाम् ॥ ३४४ ॥ व्यालानां शिखिनाञ्चैव
ओषधीनाञ्च सर्वशः । कृमिकीटपतङ्गानां क्षुद्राणां जलजाश्च ये । पशूनां ब्राह्मणानाञ्च श्रीमतां पुण्यलक्षणम् ॥ ३४५ ॥ आयुष्यश्चैव धन्यश्च
श्रीमान् हितसुखावहः । श्रोतव्यश्चैव सततं ग्राह्यश्चैवानुसूयता ॥ ३४६ ॥ इमन्तु वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणवैद्यसंसदि । अपत्यलाभं
हि लभेत्सुपुष्कलं श्रियं धनं प्रेत्य च शोभनां गतिम् ॥ ३४७ ॥ इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नामाष्टमोऽध्यायः ॥ ८ ॥ ७ ॥
सूत उवाच ॥ एवं प्रजासु सृष्टासु कश्यपेन महात्मना । प्रतिष्ठितासु सर्वासु स्थावरासु चरासु च ॥ १ ॥ अभिषिच्याधिपत्येषु तेषां मुख्यः
प्रजापतिः । ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ॥ २ ॥ द्विजातीनां वीरुधाञ्च नक्षत्राणां ग्रहैः सह । यज्ञानां तपसाञ्चैव सोमं राज्येऽभ्यषेचयत ॥३॥

बृहस्पतिं तु विश्वेषां ददावङ्गिरसां पतिम् । भृगूणामधिपञ्चैव काव्यं राज्येऽभ्यषेचयत् ॥ ४ ॥ आदित्यानां पुनर्विष्णुं वसूनामथ पावकम् । प्रजाप
तीनां दक्षञ्च मरुतामथ वासवम् ॥ ५ ॥ दैत्यानामथ राजानं प्रह्लादं दितिनन्दनम् । नारायणं तु साध्यानां रुद्राणां वृषभध्वजम् ॥ ६ ॥ विप्रचित्तिञ्च
राजानं दानवानामथादिशत् । अपां तु वरुणं राज्ये राज्ञां वैश्रवणं पतिम् । यक्षाणां राक्षसानाञ्च पार्थिवानां धनस्य च ॥ ७ ॥ वैवस्वतं पितॄणाञ्च यमं
राज्येऽभ्यषेचयत् । सर्वभूतपिशाचानां गिरिशं शूलपाणिनम् ॥ ८ ॥ शैलानां हिमवन्तञ्च नदीनामथ सागरम् । गन्धर्वाणामधिपतिं चक्रे चित्ररथं तदा
॥ ९ ॥ उच्चैःश्रवसमश्वानां राजानञ्चाभ्यषेचयत् । मृगाणामथ शार्दूलं गोवृषञ्च चतुष्पदाम् ॥ १० ॥ पक्षिणामथ सर्वेषां गरुडं पततां वरम् । गन्धानां
मातुलञ्चैव भूतानामशरीरिणाम् ॥ ११ ॥ शब्दाकाशबलानाञ्च वायुं बलवतां वरम् । सर्वेषां दंष्ट्रिणां शेषं नागानामथ वासुकिम् ॥ १२ ॥ सरीसृपाणां
सर्पाणां नागानाञ्चैव तक्षकम् । सागराणां नदीनाञ्च मेघानां वर्षितस्य च । आदित्यानामन्यतमं पर्जन्यमभिषिक्तवान् ॥ १३ ॥ सर्वाप्सरोगणानाञ्च
कामदेवं तथैव च । ऋतूनामथ मासानामार्त्तवानां तथैव च ॥ १४ ॥ पक्षाणाञ्च विपक्षाणां मुहूर्त्तानाञ्च पर्वणाम् । कलाकाष्ठाप्रमाणानां गत्य
रयनयोस्तथा । गणितस्याथ योगस्य चक्रे संवत्सरं प्रभुम् ॥ १५ ॥ प्रजापतिर्वै रजसः पूर्वस्यान्दिशि विश्रुतम् । पुत्रं नाम्ना सुधामानं
राजानं सोऽभ्यषेचयत् ॥ १६ ॥ पश्चिमायां दिशि तथा रजसः पुत्रमच्युतम् । केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् ॥ १७ ॥ मनु
ष्याणामधिपतिं चक्रे चैव सुतं मनुम् । तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना । यथाप्रदेशमद्यापि धर्मेण परिपाल्यते ॥ १८ ॥ स्वायम्भुवेऽन्तरे
पूर्वं ब्रह्मणा तेऽभिषेचिताः । नृपा ह्येतेऽभिषिच्यन्ते मनवो ये भवन्ति वै ॥ १९ ॥ मन्वन्तरेष्वतीतेषु गता ह्येतेषु पार्थिवाः । एवमन्येऽभिषिच्यन्ते
प्राप्ते मन्वन्तरे पुनः । अतीतानागताः सर्वे स्मृता मन्वन्तरेश्वराः ॥ २० ॥ राजसूयेऽभिषिक्तश्च पृथुरेभिर्नरोत्तमैः । वेददृष्टेन विधिना कृतो राजा
प्रतापवान् ॥ २१ ॥ एतानुत्पाद्य पुत्रांस्तु प्रजासन्तानकारणात् । पुनरेव महाभागः प्रजानां पतिरीश्वरः ॥ २२ ॥ कश्यपो गोत्रकामस्तु चचार परमं
तपः । पुत्रौ गोत्रकरौ मह्यं भवेतामित्यचिन्तयत् ॥ २३ ॥ तस्य प्रध्यायमानस्य कश्यपस्य महात्मनः । ब्रह्मणोऽंशौ सुतौ पश्चात् प्रादुर्भूतौ
महौजसौ ॥ २४ ॥ वत्सारश्चासितश्चैव तावुभौ ब्रह्मवादिनौ । वत्सारान्निध्रुवो जज्ञे रैभ्यश्च स महायशाः ॥ २५ ॥ रैभ्यस्य रैभ्या विज्ञेया निध्रुवस्य
निबोधत । च्यवनस्य सुकन्यायां सुमेधाः समपद्यत ॥२६॥ निध्रुवस्य तु या पत्नी माता वै कुण्डपायिनाम् । असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत ।
॥ २७ ॥ शाण्डिल्यानां वचः श्रुत्वा देवलः सुमहायशाः । निध्रुवाः शाण्डिल्या रैभ्यास्त्रयः पश्चात्तु कश्यपाः ॥ २८ ॥ नरप्रभृतयो देवा देवलस्य

प्रजास्त्विमाः । चतुर्युगे त्वतिक्रान्ते मनोरेकादशे प्रजाः । अथावशिष्टे तस्मिंस्तु द्वापरे सम्प्रवर्तते ॥ २९ ॥ मानसस्य चारिष्यन्तस्तस्य पुत्रो दमः किल । मानसस्तस्य दायादस्तृणबिन्दुरिति श्रुतः ॥ ३० ॥ त्रेतायुगमुखे राजा तृतीये सम्बभूव ह । तस्य कन्या त्विडविडा रूपेणाप्रतिमाभवत् । पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ॥ ३१ ॥ ऋषिरिडविडायान्तु विश्रवाः समपद्यत । तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्द्धनाः ॥ ३२ ॥ बृहस्पतेर्बृहत्कीर्तिर्देवाचार्यस्य कीर्त्तितः । कन्यां तस्योपयेमे स नाम्ना वै देववर्णिनीम् ॥ ३३ ॥ पुष्पोत्कटाञ्च वाकाञ्च सुते माल्यवतः स्थितौ । कैकसीं मालिनः कन्यां तासान्तु शृणुत प्रजाः ॥ ३४ ॥ ज्येष्ठं वैश्रवणं तस्य सुषुवे देववर्णिनी । दिव्येन विधिना युक्तमार्षेणैव श्रुतेन च । राक्षसेन च रूपेण आसुरेण बलेन च ॥ ३५ ॥ त्रिपादं सुमहाकायं स्थूलशीर्षं महातनुम् । अष्टदंष्ट्रं हरिच्छ्मश्रुं शङ्कुकर्णं विलोहितम् ॥ ३६ ॥ ह्रस्वबाहुं प्रबाहुञ्च पिङ्गलं सुविभीषणम् । वैवर्तज्ञानसम्पन्नं सम्बुद्धं ज्ञानसम्पदा ॥ ३७ ॥ एवंविधं सुतं दृष्ट्वा विश्वरूपधरं तथा । पिता दृष्ट्वाब्रवीत्तत्र कुबेरोऽयमिति स्वयम् ॥ ३८ ॥ कुत्सायां क्वितिशब्दोऽयं शरीरं बेरमुच्यते । कुबेरः कुशरीरत्वान्नाम्ना तेन च सोऽङ्कितः ॥ ३९ ॥ यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव । तस्माद्वैश्रवणो नाम नाम्ना लोके भविष्यति ॥ ४० ॥ ऋद्ध्यां कुबेरोऽजनयद्विश्रुतं नलकूबरम् । रावणं कुम्भकर्णञ्च कन्यां शूर्पणखान्तथा । विभीषणं चतुर्थांस्तान्कैकस्यजनयेत्सुतान् ॥ ४१ ॥ शङ्कुकर्णो दशग्रीवः पिङ्गलो रक्तमूर्द्धजः । चतुष्पाद्विंशतिभुजो महाकायो महाबलः ॥ ४२ ॥ जात्याञ्जननिभो दंष्ट्री लोहितग्रीव एव च । राजसेनो जययुक्तो रूपेण च बलेन च ॥ ४३ ॥ सत्त्वबुद्धिर्दृढतनू राक्षसैरेव रावणः । निसर्गदारुणः क्रूरो रावणाद्रावणस्तु सः ॥ ४४ ॥ हिरण्यकशिपुस्त्वासीत्स राजा पूर्वजन्मनि । चतुर्युगानि राजात्र त्रयोदश स राक्षसः ॥ ४५ ॥ ताः पञ्चकोट्यो वर्षाणामाख्याताः सङ्ख्यया द्विजैः । नियुतान्येकषष्टिश्च सङ्ख्याविद्भिरुदाहृता ॥ ४६ ॥ षष्टिशतसहस्राणि वर्षाणान्तु स रावणः । देवतानां ऋषीणाञ्च घोरं कृत्वा प्रजागरम् ॥ ४७ ॥ त्रेतायुगे चतुर्विंशे रावणस्तपसः क्षयात् । रामं दाशरथिं प्राप्य सगणः क्षयमीयिवान् ॥ ४८ ॥ महोदयः प्रहस्तश्च महापार्श्वखरस्तथा । पुष्पोत्कटायाः पुत्रास्ते कन्या कुम्भीनसी तथा ॥ ४९ ॥ त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः । कन्या श्यसलिका चैव वाकायाः प्रसवाः स्मृताः ॥ ५० ॥ इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा दश । दारुणाभिजनाः सर्वे देवैरपि दुरासदाः ॥ ५१ ॥ सर्वे लब्धवराश्चैव पुत्रपौत्रसमन्विताः । यक्षाणाञ्चैव सर्वेषां पौलस्त्या ये च राक्षसाः ॥ ५२ ॥ आगस्त्यवैश्वामित्राणां क्रूराणां ब्रह्मरक्षसाम् । वेदाध्ययनशीलानां तपोव्रतनिषेविणाम् ॥ ५३ ॥ तेषामैडविडो राजा पौलस्त्यः सत्यपिङ्गलः । इतरे वै यज्ञमुखास्तेन रक्षोगणास्त्रयः ॥ ५४ ॥ यातु

धाना ब्रह्मधाना वार्त्ताश्चैव दिवाचराः । निशाचरगणास्तेषां चत्वारः कविभिः स्मृताः॥५५॥पौलस्त्या नैर्ऋताश्चैव आगस्त्याः कौशिकास्तथा । इत्येताः
सप्त तेषां वै जातयो राक्षसाः स्मृताः ॥ ५६ ॥ तेषां रूपं प्रवक्ष्यामि स्वभावेन व्यवस्थितम् । वृत्ताक्षाः पिङ्गलाश्चैव महाकाया महोदराः ॥ ५७ ॥
अष्टदंष्ट्रा शङ्कुकर्णा ऊर्द्धरोमाण एव च । आकर्णदारितास्याश्च मुञ्जधूमोर्द्धमूर्द्धजाः ॥५८॥ स्थूलशीर्षाः सिताभाश्च ह्रस्वकाश्च प्रबाहुकाः । ताम्रास्या
लम्बजिह्वौष्ठा लम्बभ्रूस्थूलनासिकाः ॥ ५९ ॥ नीलाङ्गा लोहितग्रीवा गम्भीराक्षा विभीषणाः । महाघोरस्वराश्चैव विकटा बद्धपिण्डिकाः ॥ ६० ॥
स्थूलाश्च तुङ्गनासाश्च शिलासंहनना दृढाः । दारुणाभिजनाः क्रूराः प्रायशः क्लिष्टकर्मिणः ॥ ६१ ॥ सकुण्डलाङ्गदापीडा मुकुटोष्णीषधारिणः । विचित्र
वस्त्राभरणाश्चित्रस्रगनुलेपनाः ॥ ६२ ॥ अन्नादाः पिशितादाश्च पुरुषादाश्च ते स्मृताः । इत्येतद्रूपसाधर्म्यं राक्षसानां बुधैः स्मृतम् । न समस्तबलं बुद्धं
यतो मायाकृतं हि तत् ॥ ६३ ॥ पुलहस्य मृगाः पुत्राः सर्वे व्यालाश्च दंष्ट्रिणः । भूताः पिशाचाः सर्पाश्च भ्रमरा हस्तिनस्तथा॥६४॥वानराः किन्नराश्चैव
यमकिम्पुरुषास्तथा । येऽन्ये चैव परिक्रान्ता मायाक्रोधवशानुगाः ॥ ६५ ॥ अनपत्यः क्रतुस्तस्मिन् स्मृतो वैवस्वतेऽन्तरे । न तस्य पुत्रः पौत्रो वा
तेजः संक्षिप्य वा स्थितः ॥ ६६ ॥ अत्रेर्वंशं प्रवक्ष्यामि तृतीयस्य प्रजापतेः । तस्य पत्न्यश्च सुन्दर्यो दशैवासन्पतिव्रताः ॥ ६७ ॥ भद्राश्वस्य
घृताच्यां वै दशाप्सरसि सूनवः । भद्रा शूद्रा च मद्रा च शलदा मलदा तथा ॥ ६८ ॥ वेला खला च सप्तैता या च गोचपला स्मृता । तथा मानरसा
चैव रत्नकूटा च ता दश ॥ ६९ ॥ आत्रेयवंशकृत्तासां भर्त्ता नाम्ना प्रभाकरः । भद्रायां जनयामास सोमं पुत्रं यशस्विनम् ॥ ७० ॥ स्वर्भानुना हते
सूर्ये पतमानो दिवो महीम् । तमोऽभिभूते लोकेऽस्मिन् प्रभा येन प्रवर्त्तिता ॥ ७१ ॥ स्वस्ति तेऽस्त्विति चोक्तः स पतन्निह दिवाकरः ।
ब्रह्मर्षेर्वचनात्तस्य न पपात दिवो महीम् ॥ ७२ ॥ अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः । यज्ञेष्वत्रिधनश्चैव सुरैर्यश्च प्रवर्त्तितः
॥ ७३ ॥ स तास्वजनयत् पुत्रानात्मतुल्याननामकान् । दश तास्वेव महता तपसा भावितप्रभाः ॥ ७४ ॥ स्वस्त्यात्रेया इति ख्याता ऋषयो
वेदपारगाः । तेषां विख्यातयशसौ ब्रह्मिष्ठौ सुमहौजसौ ॥ ७५ ॥ दत्तात्रेयस्तस्य ज्येष्ठो दुर्वासास्तस्य चानुजः । यवीयसी सुता तस्या
मवला ब्रह्मवादिनी । अत्राप्युदाहरन्तीमं श्लोकं पौराणिकाः पुरा ॥ ७६ ॥ अत्रेः पुत्रं महात्मानं शान्तात्मानमकल्मषम् । दत्तात्रेयं
तनुं विष्णोः पुराणज्ञाः प्रचक्षते ॥ ७७ ॥ तस्य गोत्रान्वये जाताश्चत्वारः प्रथिता भुवि । श्यामाश्च मुद्गलाश्चैव वलारकगविष्ठिराः । एते नृणान्तु
चत्वारः स्मृताः पक्षा महौजसाम् ॥ ७८ ॥ कश्यपान्नारदश्चैव पर्वतोऽरुन्धती तथा । जज्ञिरे च त्वरुन्धत्यास्तान्निबोधत सत्तमाः ॥ ७९ ॥

नारदस्तु वसिष्ठायारुन्धतीं प्रत्यपादयत् । ऊर्द्ध्वरेता महातेजा दक्षशापात्तु नारदः ॥ ८० ॥ पुरा देवासुरे तस्मिन्संग्रामे तारकामये । अनावृष्ट्या हते लोके व्यग्रे शक्रे सुरैः सह । वसिष्ठस्तपसा धीमान्धारयामास वै प्रजाः ॥ ८१ ॥ अन्नौषधं मूलफलमोषधीश्च प्रवर्त्तयन् । तांस्तेन जीवयामास कारुण्यादोषधेन तु ॥ ८२ ॥ अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पादयद्द्विजाः । सागरञ्जनयच्छक्तेरदृश्यन्ती पराशरम् ॥ ८३ ॥ काली पराशराज्जज्ञे कृष्णद्वैपायनं प्रभुम् । द्वैपायनादरण्यां वै शुको जज्ञे गुणान्वितः ॥ ८४ ॥ उत्पद्यन्ते च पीवर्यां षडिमे शुकसूनवः । भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः ॥ ८५ ॥ कन्या कीर्तिमती चैव योगमाता दृढव्रता । जननी ब्रह्मदत्तस्य पत्नी स त्वणुहस्य च ॥ ८६ ॥ श्वेताः कृष्णाश्च गौराश्च श्यामा धूम्राः समूलिकाः । ऊष्मपा दारकाश्चैव नीलाश्चैव पराशराः । पराशराणामष्टौ ते पक्षाः प्रोक्ता महात्मनाम् ॥ ८७ ॥ अत ऊर्द्ध्वं निबोधध्वमिन्द्रप्रतिमसम्भवम् । वसिष्ठस्य कपिञ्जल्यां घृताच्यां समपद्यत । कुशीतियः समाख्यात इन्द्रप्रतिम उच्यते ॥ ८८ ॥ पृथोः सुतायाः सम्भूतः पुत्रस्तस्याभवद्वसुः । उपमन्युः सुतस्तस्य यस्येमे उपमन्यवः ॥ ८९ ॥ मित्रावरुणयोश्चैव कुण्डिनो ये परिश्रुताः । एकार्षेयास्तथैवान्ये वसिष्ठा नाम विश्रुताः । एते पक्षा वसिष्ठानां स्मृता एकादशैव तु ॥ ९० ॥ इत्येते ब्रह्मणः पुत्रा मानसा ह्यष्ट विश्रुताः । भ्रातरः सुमहाभागा तेषां वंशाः प्रतिष्ठिताः ॥ ९१ ॥ त्रींल्लोकान्धारयन्तीमान्देवर्षिगणसङ्कुलान् । तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः । यैर्व्याप्ता पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥ ९२ ॥ इति श्रीमहापुराणे वायुप्रोक्ते ऋषिवंशानुकीर्त्तनं नाम नवमोऽध्यायः ॥ ९ ॥ ॐ ॥ एतच्छ्रुत्वा वचस्तस्य सूतस्य विदितात्मनः । उत्तरं परिपप्रच्छुः सूतपुत्रं द्विजातयः ॥ १ ॥ शांशपायन उवाच ॥ कथं द्वितीयमुत्पन्ना भवानी प्राक्सती तु या । आसीद्दाक्षायणी पूर्वमुमा कथमजायत ॥ २ ॥ मेनायां पितृकन्यायां जनयामास शैलराट् । के चैते पितरश्चैव येषां मेना तु मानसी ॥ ३ ॥ मैनाकश्चैव दौहित्रो दौहित्री च तथा ह्युमा । एकपर्णा तथा चैव तथा या चैकपाटला ॥ ४ ॥ गङ्गा चैव सरिच्छ्रेष्ठा सर्वासां पूर्वजा तथा । पूर्वमेव मयोद्दिष्टं शृणुध्वं मम सर्वशः ॥ ५ ॥ अनेके पितरश्चैव वर्त्तन्ते क्व च वा पुनः । श्रोतुमिच्छामि भद्रन्ते श्राद्धस्य च परं विधिम् ॥ ६ ॥ पुत्राश्च ते स्मृताः केषां कथञ्च पितरस्तु ते । पितरः कथमुत्पन्नाः कस्य पुत्राः किमात्मकाः ॥ ७ ॥ स्वर्गे तु पितरोऽन्ये ये देवानामपि देवताः । एवं वै श्रोतुमिच्छामि पितॄणां सर्गमुत्तमम् । यथावद्दत्तमस्माभिः श्राद्धं प्रीणाति वै पितॄन् ॥ ८ ॥ यदर्थं ते न दृश्यन्ते तत्र किं कारणं स्मृतम् । स्वर्गे हि के तु वर्त्तन्ते पितरो नरके तु के ॥ ९ ॥ अभिसन्धाय पितरं पितुश्च पितरं तथा । पितुः पितामहश्चैव त्रिषु पिण्डेषु नामतः ॥ १० ॥ कानि श्राद्धानि देयानि कथं गच्छन्ति वै पितॄन् । कथञ्च शक्तास्ते दातुं नरकस्थाः फलं पुनः ॥ ११ ॥

के चेह पितरो नाम कान् यजामो वयं पुनः। देवा अपि पितॄन् स्वर्गे यजन्तीति हि नः श्रुतम् ॥ १२ ॥ एतदिच्छामि वै श्रोतुं विस्तरेण बहुश्रुत।
स्पष्टाभिधानमर्थं वै तद्भवान्वक्तुमर्हति ॥ १३ ॥ ऋषीणान्तु वचः श्रुत्वा सूतस्तत्त्वार्थदर्शिवान्। आचचक्षे यथाप्रश्नं ऋषीणां मानसं ततः ॥ १४ ॥
सूत उवाच ॥ अत्र वो वर्णयिष्यामि यथाप्रज्ञं यथाश्रुतम्। मन्वन्तरेषु जायन्ते पितरो देवसूनवः ॥ १५ ॥ अतीतानागते ज्येष्ठाः कनिष्ठाः क्रमशस्तु
ते। देवैः सार्द्धं पुरातीताः पितरो येऽन्तरेषु वै। वर्त्तन्ते साम्प्रतं ये तु तान्वै वक्ष्यामि निश्चयात् ॥ १६ ॥ श्राद्धश्चैषां मनुष्याणां श्राद्धमेव प्रवर्त्तते।
देवानसृजत ब्रह्मा मायक्षन्निति वै पुनः। तमुत्सृज्य तदात्मानमसृजंस्ते फलार्थिनः ॥ १७ ॥ ते शप्ता ब्रह्मणा मूढा नष्टसंज्ञा भविष्यथ।
न स्म किञ्चिद्विजानन्ति ततो लोको ह्यमुह्यत ॥१८॥ ते भूयः प्रणताः सर्वे याचन्ति स्म पितामहम्। अनुग्रहाय लोकानां पुनस्तानब्रवीत्प्रभुः ॥१९॥
प्रायश्चित्तं चरध्वं वै व्यभिचारो हि यः कृतः। पुत्रान्स्वान्परिपृच्छध्वं ततो ज्ञानमवाप्स्यथ ॥ २० ॥ ततस्ते स्वान्सुतांश्चैव प्रायश्चित्तजिघृक्षवः।
अपृच्छन् संयतात्मानो विधिवच्च मिथो मिथः ॥२१॥ तेभ्यस्ते नियतात्मानः पुत्राः शंसुरनेकधा। प्रायश्चित्तानि धर्मज्ञा वाङ्मनःकर्म्मजानि तु ॥ २२॥
ते पुत्रानब्रुवन्प्रीता लब्धसंज्ञा दिवौकसः। यूयं वै पितरोऽस्माकं ये वयं प्रतिबोधिताः। धर्मज्ञानञ्च कामश्च को वरो वः प्रदीयताम् ॥ २३ ॥
पुनस्तानब्रवीद्ब्रह्मा यूयं वै सत्यवादिनः। तस्माद्यदुक्तं युष्माभिस्तत्तथा न तदन्यथा ॥ २४ ॥ उक्तश्च पितरोऽस्माकमिति वै तनयाः स्वकाः। पित
रस्ते भविष्यन्ति तेभ्योऽयं दीयतां वरः ॥ २५ ॥ तेनैव वचसा पुत्रा ब्रह्मणः परमेष्ठिनः। पुत्राः पितृत्वमाजग्मुः पुत्रत्वं पितरः पुनः ॥ २६ ॥
तस्मात्ते पितरः पुत्राः पितृत्वे तेषु तत्स्मृतम्। एवं स्मृत्वा पितॄन् पुत्रान्पुत्रांश्च पितरस्तथा। व्याजहार पुनर्ब्रह्मा पितॄनात्मविवृद्धये ॥ २७ ॥ यो
ह्यनिष्ट्वा पितॄन्श्राद्धे क्रियां काञ्चित्करिष्यति। राक्षसा दानवाश्चैव फलं प्राप्स्यन्ति तस्य तत् ॥ २८ ॥ श्राद्धैराप्यायिताश्चैव पितरः सोममव्ययम्।
आप्याय्यमाना युष्माभिर्वर्द्धयिष्यन्ति नित्यशः ॥ २९ ॥ श्राद्धैराप्यायितः सोमो लोकानाप्याययिष्यति। कृत्स्नं सपर्वतवनं जङ्गमाजङ्गमैर्वृतम्।
॥ ३० ॥ श्राद्धानि पुष्टिकामाश्च ये करिष्यन्ति मानवाः। तेभ्यः पुष्टिं प्रजाश्चैव दास्यन्ति पितरः सदा ॥३१॥ श्राद्धे येभ्यः प्रदास्यन्ति त्रीन् पिण्डान्
नामगोत्रतः। सर्वत्र वर्त्तमानास्ते पितरः प्रपितामहम्। तेषामाप्याययिष्यन्ति श्राद्धदानेन वै प्रजाः ॥ ३२ ॥ एवमाज्ञा कृता पूर्वं ब्रह्मणा परमेष्ठिना।
तेनैतत्सर्वथा सिद्धं दानमध्ययनं तपः ॥ ३३ ॥ ते तु ज्ञानप्रदातारः पितरो वो न संशयः। इत्येते पितरो देवा देवाश्च पितरः पुनः। अन्योन्यं
पितरो ह्येते देवाश्च पितरश्च ह ॥ ३४ ॥ एतद्ब्रह्मवचः श्रुत्वा सूतस्य विहितात्मनः। पप्रच्छुर्मुनयो भूयः सूतं तस्माद्यदुत्तरम् ॥ ३५ ॥

ऋषय ऊचुः ॥ कियन्तो वै पितृगणाः कस्मिन्काले च ते गणाः । वर्त्तन्ते देवप्रवरा देवानां सोमवर्द्धनाः ॥ ३६ ॥ सूत उवाच ॥ एतद्वोऽहं प्रव
क्ष्यामि पितृसर्गमनुत्तमम् । शंयुः पप्रच्छ यत्पूर्वं पितरं वै बृहस्पतिम् ॥ ३७ ॥ बृहस्पतिमुपासीनं सर्वज्ञानार्थकोविदम् । पुत्रः शंयुरिमं प्रश्नं
पप्रच्छ विनयान्वितः ॥ ३८ ॥ क एते पितरो नाम कियन्तः के च नामतः । समुद्भूताः कथञ्चैते पितृत्वं समुपागताः ॥ ३९ ॥ कस्माच्च पितरं
पूर्वं यज्ञे युज्यन्ति नित्यशः । क्रियाश्च सर्वा वर्त्तन्ते श्राद्धपूर्वा महात्मनाम् ॥४०॥ कस्मै श्राद्धानि देयानि किञ्च दत्तं महाफलम् । केषु वाप्यक्षयं श्राद्धं
तीर्थेषु च नदीषु च ॥ ४१ ॥ केषु वै सर्वमाप्नोति श्राद्धं कृत्वा द्विजोत्तमः । कश्च कालो भवेच्छ्राद्धे विधिः कश्चानुवर्त्तते ॥ ४२ ॥ एतदिच्छामि
भगवन् विस्तरेण यथातथम् । व्याख्यातुमानुपूर्व्येण यत्र चोदाहृतं मया ॥ ४३ ॥ बृहस्पतिरिदं सम्यगेवं पृष्टो महामतिः । व्याजहारानुपूर्व्येण
प्रश्नं प्रश्नविदां वरः ॥ ४४ ॥ बृहस्पतिरुवाच ॥ कथयिष्यामि ते तात यन्मां त्वं परिपृच्छसि । विनयेन यथान्यायं गम्भीरं प्रश्नमुत्तमम् ॥ ४५ ॥
द्यौरन्तरिक्षं पृथिवी नक्षत्राणि दिशस्तथा । सूर्याचन्द्रमसौ चैव तथाहोरात्रमेव च ॥ ४६ ॥ न बभूवुस्तदा तात तमोभूतमिदं जगत् । ब्रह्मैको
दुश्चरं तत्र चचार परमं तपः ॥ ४७ ॥ शंयुस्तमब्रवीद्भूयः पितरं ब्रह्मवित्तमम् । सर्वदैव व्रतस्नातं सर्वज्ञानविदांवरम् ॥ ४८ ॥ कीदृशं सर्वभूते
शस्तपस्तेपे प्रजापतिः । एवमुक्तो बृहत्तेजा बृहस्पतिरुवाच तम् ॥ ४९ ॥ सर्वेषां तपसां युक्तिस्तपोयोगमनुत्तमम् । ध्यायंस्तदा तद्भगवांस्तेन
लोकनवासृजत् ॥ ५० ॥ भूतभव्यानि ज्ञानानि लोकान्वेदांश्च कृत्स्नशः । योगमाविश्य तत्सृष्टं ब्रह्मणा योगचक्षुषा ॥ ५१ ॥ लोकाः सान्तानिका
नाम यत्र तिष्ठन्ति भास्वराः । ते वैराजा इति ख्याता देवानां दिवि देवताः ॥ ५२ ॥ योगेन तपसा युक्तः पूर्वमेव तदा प्रभुः । देवानसृजत ब्रह्मा योगं
युक्त्वा सनातनम् ॥ ५३ ॥ आदिदेवा इति ख्याता महासत्त्वा महौजसः । सर्वकामप्रदाः पूज्या देवदानवमानवैः ॥ ५४ ॥ तेषां सप्त समाख्याता
गणास्त्रैलोक्यपूजिताः । अमूर्त्तयस्त्रयस्तेषां चत्वारस्तु सुमूर्त्तयः ॥ ५५ ॥ उपरिष्टात्त्रयस्तेषां वर्त्तन्ते भावमूर्त्तयः । तेषामधस्ताद्वर्त्तन्ते चत्वारः
सूक्ष्ममूर्त्तयः ॥ ५६ ॥ ततो देवास्ततो भूमिरेषा लोकपरम्परा । लोके वर्त्तन्ति ते ह्यस्मिंस्तेभ्यः पर्जन्यसम्भवः । वृष्टिर्भवति तैर्वृष्ट्या
लोकानां सम्भवः पुनः ॥ ५७ ॥ आप्याययन्ति ते यस्मात्सोमश्चान्नश्च योगतः । ऊचुस्तान्वै पितॄंस्तस्माल्लोकानां लोकसत्तमाः ॥ ५८ ॥
मनोजवाः स्वधाभक्षाः सर्वकामपरिच्छदाः । लोभमोहभयापेता निश्चिताः शोकवर्जिताः ॥ ५९ ॥ एते योगं परित्यज्य प्राप्ता लोकान्सुदर्शनान् ।
दिव्याः पुण्या महात्मानो विपाप्मानो भवन्त्युत ॥ ६० ॥ ततो युगसहस्रान्ते जायन्ते ब्रह्मवादिनः । प्रतिलभ्य पुनर्योगं मोक्षं गच्छन्त्यमूर्त्तयः ॥ ६१ ॥

व्यक्ताव्यक्तं परित्यज्य महायोगबलेन वा। नश्यन्त्युल्केव गगने क्षीणविद्युत्प्रभेव च ॥ ६२ ॥ उत्सृज्य देहजातानि महायोगबलेन च। निराख्योपा
ख्यतां यान्ति सरितः सागरे यथा ॥ ६३ ॥ क्रियया गुरुपूजाभिर्यं च कुर्वन्ति नित्यशः। ताभिराप्याययन्त्येते पितरो योगवर्द्धनाः ॥ ६४ ॥ श्राद्धे
प्रीताः पुनः सोमं पितरो योगमास्थिताः। आप्याययन्ति योगेन त्रैलोक्यं येन जीवति ॥ ६५ ॥ तस्माच्छ्राद्धानि देयानि योगिभ्यो यत्नतः सदा।
पितॄणां हि बलं योगो योगात्सोमः प्रवर्त्तते ॥ ६६ ॥ सहस्रशस्तु विप्रान्वै भोजयेद्यावदागतान्। एकस्तु योगवित्प्रीतः सर्वानर्हति तच्छृणु ॥ ६७ ॥
काल्पितानां सहस्रेण स्नातकानां शतेन च। योगाचार्येण यद्भुक्तं त्रायते महतो भयात् ॥ ६८ ॥ गृहस्थानां सहस्रेण वानप्रस्थशतेन च। ब्रह्मचारिसह
स्रेण योगी ह्येको विशिष्यते ॥ ६९ ॥ नास्तिको वा विकर्मा वा सङ्कीर्णस्तस्करोऽपि वा। नान्यत्र कारणं दानं, योगेष्वाह प्रजापतिः ॥ ७० ॥ पितर
स्तस्य तुष्यन्ति सुवृष्टेनेव कर्षकाः। पुत्रो वाप्यथ वा पौत्रो ध्यानिनं भोजयिष्यति ॥ ७१ ॥ अलाभे ध्यानिभिक्षूणां भोजयेद्ब्रह्मचारिणौ। तद
लाभेप्युदासीनं गृहस्थमपि भोजयेत् ॥ ७२ ॥ यस्तिष्ठेदेकपादेन वायुभक्षः शतं समाः। ध्यानयोगी परस्तस्मादिति ब्रह्मानुशासनम् ॥ ७३ ॥
सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमाम्। तस्मादतिथिमायान्तमभिगच्छेत्कृताञ्जलिः ॥ ७४ ॥ पूजयेच्चार्घ्यपात्रेण वेश्मना भोजनेन च। ऊर्वीं
सागरपर्यन्तां देवा योगेश्वराः सदा। नानारूपैश्चरन्त्येते प्रजा धर्मेण पालयन् ॥ ७५ ॥ तस्माद्द्याच्च वै दानं विप्रायातिथये नरः। प्रदानानि
प्रवक्ष्यामि फलञ्चैषां तथैव च ॥ ७६ ॥ अश्वमेधसहस्रेण राजसूयशतेन च। पुण्डरीकसहस्रेण योगिष्वावसथो वरम् ॥ ७७ ॥ आद्य एष गणः प्रोक्तः
पितॄणाममितौजसाम्। भावयन्सप्तकालान्वै स्थित एष गणस्तदा ॥ ७८ ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि सर्वान् पितृगणान्पुनः। सन्ततिं संस्थितिञ्चैव
भावनाञ्च यथाक्रमम् ॥ ७९ ॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धप्रक्रियारम्भो नाम दशमोऽध्यायः ॥ १० ॥ ७॥ सूत उवाच ॥ सप्त मेधावतां
श्रेष्ठाः स्वर्गे पितृगणाः स्मृताः। चत्वारो मूर्तिमन्तश्च त्रयस्तेषाममूर्त्तयः। तेषां लोकविसर्गन्तु कीर्त्तयिष्ये निबोधत ॥ १ ॥ या वै दुहितरस्तेषां
दौहित्राश्चैव ये स्मृताः। धर्ममूर्त्तिधरास्तेषां ये त्रयः परमा गणाः ॥ २ ॥ नामानि लोकसर्गञ्च तेषां वक्ष्ये समासतः। लोका विरजसो नाम्ना यत्र
तिष्ठन्ति भास्वराः ॥ ३ ॥ अमूर्त्तयः पितृगणाः पुत्रास्ते वै प्रजापतेः। विरजस्य द्विजाः श्रेष्ठा वैराजा इति विश्रुताः। एष वै प्रथमः कल्पो वैराजानां
प्रकीर्त्तितः ॥ ४ ॥ तेषान्तु मानसी कन्या मेना नाम महागिरेः। पत्नी हिमवतः शुभ्रा यस्यां मैनाक उच्यते ॥ ५ ॥ जातः सर्वौषधिधरः सर्वरत्नाकरात्म
वान्। पर्वतः प्रवरः पुण्यः क्रौञ्चस्तस्यात्मजोऽभवत् ॥ ६ ॥ तिस्रः कन्यास्तु मेनायां जनयामास शैलराट्। अपर्णामेकपर्णाञ्च तृतीयामेकपाटलाम् ॥ ७ ॥

आश्रिते द्वे ह्यपर्णा तु अनिकेता तपोऽचरत् । न्यग्रोधमेकपर्णा तु पाटलामेकपाटला । शतं वर्षसहस्राणि दुश्चरं देवदानवैः ॥ ८ ॥ आहारमेकपर्णे
एकपर्णा समाचरत् । पाटलेनैव चैकेन विदध्यादेकपाटला ॥ ९ ॥ पूर्णे पूर्णे सहस्रे द्वे आहारं वै प्रचक्रतुः । एका तत्र निराहारा तां माता प्रत्य
पत ॥ १० ॥ निषेधयन्ती ह्युमेति माता स्नेहेन दुःखिता । सा तथोक्ततया देवी मात्रा दुश्चरचारिणी ॥ ११ ॥ उमेति सा महाभागा त्रिषु लोके
विश्रुता । तथैति नाम्ना तेनासौ निरुक्ता कर्मणा शुभा ॥ १२ ॥ एतत्तु त्रिकुमारीकं जगत्स्यास्यति शाश्वतम् । एतासां तपसा दत्तं यावद्भूमि
रिष्यति ॥ १३ ॥ तपःशरीरास्ताः सर्वास्तिस्रो योगबलान्विताः । देव्यस्ताः सुमहाभागाः सर्वाश्च स्थिरयौवनाः ॥ १४ ॥ सर्वाश्च ब्रह्मवादिन्यः स
र्वाश्चैवोर्द्ध्वरेतसः । उमा तासां वरिष्ठा च श्रेष्ठा च वरवर्णिनी ॥ १५ ॥ महायोगबलोपेता महादेवमुपस्थिता । दन्तकाण्वोशना तस्याः पुत्रो वै भृ
नन्दनः ॥ १६ ॥ असितस्यैकपर्णा तु पत्नी साध्वी दृढव्रता । दत्ता हिमवता तस्मै योगाचार्याय धीमते । देवलं सुषुवे सा तु ब्रह्मिष्ठं मानसं सुत
॥ १७ ॥ या चैतासां कुमारीणां तृतीया त्वेकपाटला । पुत्रं शतशिलाकस्य जैगीषव्यमुपस्थिता ॥ १८ ॥ तस्यापि शङ्खलिखितौ स्मृतौ पुत्रावयो
जौ । इत्येता [illegible] महाभागाः कन्या हिमवतः शुभाः ॥ १९ ॥ रुद्राणी सा तु प्रवरा स्वगुणैरतिरिच्यते ॥ अन्योन्यप्रीतिरनयोरुमाशङ्करयोर्यथा ॥ २०
श्लेषं संसक्तयोर्ज्ञात्वा शङ्कितः किल वृत्रहा । ताभ्यां मैथुनसक्ताभ्यामपत्योद्भवभीरुणा । तयोः सकाशमिन्द्रेण प्रेषितो हव्यवाहनः ॥ २१ ॥
नयो रतिविघ्नञ्च त्वमाचर हुताशन । सर्वत्र गत एव त्वं न दोषो विद्यते तदा ॥ २२ ॥ इत्येवमुक्ते तु तथा वह्निना च तथा कृतम् । उमा
समुत्सृज्य शुक्रं भूमौ विसर्जितम् ॥ २३ ॥ ततो रुषितया देव्या शप्तोऽग्निः शांशपायन । इदं चोक्तवती वह्निं रोषगद्गदया गिरा ॥ २४
यस्मान्मय्यवितृप्तायां रतिविघ्नं हुताशन । कृतवानस्यकर्त्तव्यं तस्मात्त्वमसि दुर्मते ॥ २५ ॥ यदेवं विभृतं गर्भे रौद्रं शुक्रं महाप्रभम्
गर्भं त्वं धारयस्वैवमेषा ते दण्डधारणा ॥ २६ ॥ स शापरोषाद्रुद्राण्या अन्तर्गर्भो हुताशनः । बहून्वर्षगणान् गर्भं धारयामास वै द्विजाः ॥ २७ ॥
गङ्गामुपगम्याह श्रूयतां सरिदुत्तमे । सुमहान् परिखेदो मे गर्भधारणकारणात् ॥ २८ ॥ मद्धितार्थमिमं गर्भमतो धारय निम्नगे । मत्प्रसादाच्च खेदो
मन्दस्तव भविष्यति ॥ २९ ॥ तथेत्युक्त्वा तदा सा तु सम्प्रहृष्टा महानदी । तं गर्भं धारयामास दह्यमानेन चेतसा ॥ ३० ॥ सापि कृच्छ्रेण मह
खिद्यमाना महानदी । कालं प्रकृष्टं सुमहद्गर्भधारणतत्परा ॥ ३१ ॥ तया परिगतं गर्भं कुक्षौ हिमवतः शुभे । शुभं शरवणं नाम चित्रं पुष्पितपादपः
तत्र तं व्यसृजद्गर्भं दीप्यमानमिवानलम् ॥ ३२ ॥ रुद्राग्निगङ्गातनयस्तत्र जातोऽरुणप्रभः । आदित्यशतसङ्काशो महातेजाः प्रतापवान् ॥ ३३

तस्मिञ्जाते महाभागे कुमारे जाह्नवीसुते । विमानयानैराकाशं पतत्रिभिरिवावृतम् ॥ ३४ ॥ देवदुन्दुभयो नेदुराकाशे मधुरस्वराः । मुमुचुः पुष्पवर्षञ्च खचराः सिद्धचारणाः ॥ ३५ ॥ जगुर्गन्धर्वमुख्याश्च सर्वशस्तत्र तत्र ह । यक्षा विद्याधराः सिद्धाः किन्नराश्चैव सर्वशः ॥ ३६ ॥ महानागसहस्राणि प्रवराश्च पतत्रिणः । उपतस्थुर्महाभागमाग्नेयं शङ्करात्मजम् । प्रभावेण तदा तेन दैत्यदानवराक्षसाः ॥ ३७ ॥ सह सप्तर्षिभार्याभिरादावेवाग्निसम्भवः । अभिषेकप्रयाताभिर्दृष्टो वर्ज्यं त्वरुन्धतीम् ॥ ३८ ॥ ताभिः स बालार्कनिभो रौद्रः परिवृतः प्रभुः । स्निह्यमानाभिरत्यर्थं स्वकाभिरिव मातृभिः ॥ ३९ ॥ युगपत्सर्वदेवीर्हि दिदृक्षुर्जाह्नवीसुतः । षण्मुखो व्यसृजच्छ्रीमांस्तासां प्रीत्या महाद्युतिः ॥ ४० ॥ श्रीमान् कमलपत्राक्षस्तरुणादित्यसन्निभः । येन जातेन लोकानामाक्षेपस्तेजसा कृतः ॥ ४१ ॥ तेन जातेन महता देवानामसहिष्णवः । स्कन्दिता दानवगणास्तस्मात्स्कन्दः प्रतापवान् ॥ ४२ ॥ कृत्तिकाभिस्तु यस्मात् संवर्द्धितः स पुरातनः । कार्त्तिकेय इति ख्यातस्तस्मादसुरसूदनः ॥ ४३ ॥ जृम्भतस्तस्य दैत्यारेर्ज्वालामालाकुलात्तदा । मुखाद्विनिर्गता तस्य स्वशक्तिरपराजिता ॥ ४४ ॥ क्रीडार्थञ्चैव स्कन्दस्य विष्णुना प्रभविष्णुना । गरुडादिति सृष्टौ हि पक्षिणौ हि प्रभद्रकौ ॥ ४५ ॥ मयूरः कुक्कुटश्चैव पताका चैव वायुना । यस्य दत्ता सरस्वत्या महावीणा महास्वना । अजः स्वयम्भुवा दत्तो मेषो दत्तश्च शम्भुना ॥ ४६ ॥ मायाविहरणे विप्रा गिरौ क्रौञ्चे निपातिते । तारके चासुरवरे समुदीर्णे निपातिते ॥ ४७ ॥ सेन्द्रोपेन्द्रैर्महाभागैर्देवैराग्निसुतः प्रभुः । सेनापत्येन दैत्यारिरभिषिक्तः प्रतापवान् ॥ ४८ ॥ देवसेनापतिस्त्वेवं पठ्यते नरनायकः । देवारिस्कन्दनः स्कन्दः सर्वलोकेश्वरः प्रभुः ॥ ४९ ॥ प्रमथैर्विविधैर्देवैस्तथा भूतगणैरपि । मातृभिर्विविधाभिश्च विनायकगणैस्तथा ॥ ५० ॥ सा त्वपश्यद्विमानानि पतन्ती सा दिवश्च्युता । त्रसरेणुप्रमाणानि तेष्वपश्यच्च्युतान् पितॄन् ॥ ५१ ॥ सुसूक्ष्मानपरित्यक्तानग्नीनग्निष्विवाहितान् । त्रायध्वमित्युवाचाथ पतन्ती तानवाक्शिराः ॥ ५२ ॥ तैरुक्ता सा तु माभैषीरित्युक्ताधिष्ठिताभवत् । ततः प्रासादयत्सा वै पितॄंस्तान् दीनया गिरा ॥ ५३ ॥ ऊचुस्ते पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् । भ्रष्टैश्वर्या स्वदोषेण तपसि त्वं शुचिस्मिते ॥ ५४ ॥ यैः क्रियन्ते च कर्म्माणि शरीरैरिह दैवतैः । तैरेव तत्कर्मफलं प्राप्नुवन्तीह देवताः ॥ ५५ ॥ सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे । तस्मादमावस्वपत्यत्वं प्रेत्य प्राप्स्यसे फलम् ॥ ५६ ॥ इत्युक्तया वै पितरः पुनस्ते तु प्रसादिताः । ध्यात्वा प्रसादं सञ्चक्रुस्तस्यास्ते त्वनुकम्पया ॥ ५७ ॥ अवश्यम्भाविनं दृष्ट्वा ह्यर्थमूचुस्ततः सुराः । सोमपाः पितरः कन्यां राज्ञश्चैव ह्यमावसोः ॥ ५८ ॥ उत्पन्नस्य पृथिव्यां तु मानुषत्वे महात्मनः । कन्या भूत्वा त्विमाँल्लोकान्पुनः प्राप्स्यसि स्वानिति ॥ ५९ ॥ अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा । अस्यैव राज्ञो दुहिता

कार्यां ह्यमावसोः ॥ ६० ॥ पराशरस्य दायादं ऋषेस्त्वं जनयिष्यसि । स वेदमेकं विप्रर्षिश्चतुर्धा वै करिष्यति ॥ ६१ ॥ महाभिषस्य पुत्रौ द्वौ
नोः कीर्त्तिवर्द्धनौ । विचित्रवीर्य्यं धर्मज्ञं त्वमेवोत्पादयिष्यसि ॥ ६२ ॥ चित्राङ्गदं च राजानं तेजोबलगुणान्वितम् । एतानुत्पाद्य पुत्रं स्वं पुनर्लो
वाप्स्यसि ॥ ६३ ॥ व्यतिक्रमात्पितॄणां त्वं प्राप्स्यसे जन्म कुत्सितम् । तस्यैव राज्ञस्त्वं कन्या अद्रिकायां भविष्यसि ॥ ६४ ॥ कन्या भूत्वा
ध त्वमिमान् लोकानवाप्स्यसि । एवमुक्ता तु दाशेयी जाता सत्यवती तु सा ॥ ६५ ॥ अद्रिकायां सुता मत्स्यां सुता जाता ह्यमावसोः । अद्रि
त्स्यसम्भूता गङ्गा यमुनसङ्गमे ॥ ६६ ॥ तस्य राज्ञो हि सा कन्या राज्ञो वीर्य्यैं सदैव हि । विरजा नाम ते लोका दिवि रोचन्ति ते गणाः ॥ ६७ ॥
ष्वात्ताः स्मृतास्तत्र पितरो भास्वरप्रभाः । तान्दानवगणा यक्षा रक्षोगन्धर्वकिन्नराः । भूतसर्पपिशाचाश्च भावयन्ति फलार्थिनः ॥ ६८ ॥ एते
: समाख्याताः पुलहस्य प्रजापतेः । त्रय एते गणाः प्रोक्ता धर्ममूर्तिधराः शुभाः ॥ ६९ ॥ एतेषां मानसी कन्या पीवरी नाम विश्रुता । योगिनी
पत्नी च योगमाता तथैव च ॥ ७० ॥ भविता द्वापरं प्राप्य अष्टाविंशन्तु दैवतम् । पराशरकुलोद्भूतः शुको नाम महातपाः ॥ ७१ ॥ श्रीमान्योगी
योगी योगस्तस्माद्द्विजोत्तमः । व्यासादरण्यां सम्भूतो विधूम इव पावकः ॥ ७२ ॥ स तस्यां पितृकन्यायां योगाचार्यान्परिश्रुतान् । कृष्णं गौरं
शम्भुं तथा भूरिश्रुतं ववौ ॥ ७३ ॥ कन्यां कीर्त्तिमतीञ्चैव योगिनीं योगमातरम् । ब्रह्मदत्तस्य जननी महिषी त्वणुहस्य तु ॥ ७४ ॥ एतानुत्पाद्य
त्मा पुत्रान्योगमवाप्य च । महायोगतपाश्चैव अपरावर्त्तिनीं गतिम् ॥ ७५ ॥ आदित्यकिरणोपेतं त्वपुनर्भावमास्थितः । सर्वव्यापि विनिर्मुक्तो
ष्यति महामुनिः ॥ ७६ ॥ अमूर्त्तिमन्तः पितरो धर्ममूर्त्तिधरास्तु ये । त्रय एते गणास्तेषां चत्वारोऽन्ये निबोधत ॥ ७७ ॥ यान्वक्ष्यामि द्विजश्रेष्ठा
मन्तो महाप्रभाः । उत्पन्नास्ते स्वधायास्तु कन्या ह्यग्नेः कवेः सुताः ॥ ७८ ॥ पितरो देवलोकेषु ज्योतिर्भासिषु भास्वराः । सर्वकामसमृद्धेषु द्विजा
भावयन्त्युत ॥ ७९ ॥ एतेषां मानसी कन्या गौर्नाम दिवि विश्रुता । दत्तसेना कुमारेण शुक्रस्य महिषी प्रिया ॥ ८० ॥ एकत्रिंशच्च विख्याता भृगूणां
वर्द्धनाः । मरीचिगर्भास्ते लोकाः समावृत्य दिवि स्थिताः ॥ ८१ ॥ एते ह्यङ्गिरसः पुत्राः साध्यैः सह विवर्द्धिताः । उपहूताः स्मृतास्ते तु पितरो
वरा दिवि । तान्क्षत्रियगणान्दृष्ट्वा भावयन्ति फलार्थिनः ॥ ८२ ॥ एतेषां मानसी कन्या यशोदा नाम विश्रुता । पत्नी सा विश्वमहतः स्नुषा वै विश्वश
णः ॥ ८३ ॥ राजर्षेर्जननी देवी खट्वाङ्गस्य महात्मनः । यस्य यज्ञे पुरा गीता गाथा गीतैर्महर्षिभिः ॥ ८४ ॥ अग्नेर्जन्म तथा दृष्ट्वा शाण्डिल्यस्य महा
: । यजमानं दिलीपं ये पश्यन्ति सुसमाहिताः । सत्यव्रतं महात्मानं ते स्वर्गजयिनोऽमराः ॥ ८५ ॥ आज्यपा नाम पितरः कर्दमस्य प्रजापतेः । समुत्प

न्नस्य पुलहादुत्पन्नास्तस्य वै पुनः ॥ ८६ ॥ लोकेष्वेतेषु वर्त्तन्ते कामगेषु विहङ्गमाः । एतान्वैश्यगणाः श्राद्धे भावयन्ति फलार्थिनः ॥ ८७ ॥ एतेषां मानसी कन्या विरजा नाम विश्रुता । ययातेर्जननी साध्वी पत्नी सा नहुषस्य तु ॥ ८८ ॥ सुकाला नाम पितरो वसिष्ठस्य प्रजापतेः । हिरण्यगर्भस्य सुताः शूद्रास्तान्भावयन्त्युत ॥ ८९ ॥ मानसा नाम ते लोका वहन्ते यत्र ते दिवि । एतेषां मानसी कन्या नर्मदा सरितां वरा ॥ ९० ॥ सा भावयति भूतानि दक्षिणापथगामिनी । जननी त्रसदस्योर्हि पुरुकुत्सपरिग्रहः ॥ ९१ ॥ एतेषामभ्युपगमान्मातुर्मन्वन्तरेश्वरः । मन्वन्तरादौ श्राद्धानि प्रवर्त्तयति सर्वशः ॥ ९२ ॥ पितॄणामानुपूर्व्येण सर्वेषां द्विजसत्तमाः । तस्मादिह स्वधर्मेण श्राद्धं देयन्तु श्रद्धया ॥ ९३ ॥ सर्वेषां राजतैः पात्रैरपि वा रजतान्वितैः । दत्तं स्वधां पुरोधाय तथा प्रीणाति वै पितॄन् ॥ ९४ ॥ सोमस्याप्यायनं कृत्वा ह्यग्नेर्वैवस्वतस्य च । उदगायनश्चाग्नौ च अश्वमेधं तदाप्नुयात् ॥ ९५ ॥ पितॄन् प्रीणाति वै भक्त्या पितरः प्रीणयन्ति तम् । पितरः पुष्टिकामस्य प्रजाकामस्य वा पुनः । पुष्टिं प्रजां च स्वर्गं प्रयच्छन्ति न संशयः ॥९६॥ देवकार्य्यादपि सदा पितृकार्य्यं विशिष्यते । देवताभ्यः पितॄणां हि पूर्व्वमाप्यायनं स्मृतम् ॥ ९७ ॥ न हि योगगतिः सूक्ष्मा पितॄणामपि तृप्तयः । तपसा हि प्रसिद्धेन दृश्यन्ते मांसचक्षुषा ॥ ९८ ॥ इत्येते पितरश्चैव लोका दुहितरश्च वै । दौहित्रा यजमानाश्च प्रोक्ता ये भावयन्ति तान् ॥ ९९ ॥ चत्वारो मूर्त्तिमन्तश्च त्रयस्तेषाममूर्त्तयः । तेभ्यः श्राद्धानि सत्कृत्य देवाः कुर्व्वन्ति यत्नतः ॥ १०० ॥ भक्ताः प्राञ्जलयः सर्वे सेन्द्रास्तद्गतमानसाः । विश्वे च सिकताश्चैव पृश्निजाः शृङ्गिणस्तथा ॥ १०१ ॥ कृष्णाः श्वेतास्त्वजाश्चैव विधिवत्पूजयन्त्युत । प्रजास्ता वातरशना दिवाकीर्त्त्यास्तथैव च॥१०२॥ लेखाश्च मरुतश्चैव ब्रह्माद्याश्च दिवौकसः । अत्रिभृग्वङ्गिराद्याश्च ऋषयः सर्व्व एव च ॥ १०३ ॥ यक्षा नागाः सुपर्णाश्च किन्नरा राक्षसैः सह । पितॄंस्त्वपूजयन्सर्वे नित्यमेव फलार्थिनः ॥ १०४ ॥ एवमेते महात्मानः श्राद्धे सत्कृत्य पूजिताः । सर्वान्कामान्प्रयच्छन्ति शतशोऽथ सहस्रशः ॥ १०५ ॥ हित्वा त्रैलोक्यसंसारं जरामृत्युभयं तथा । मोक्षं योगमयैश्वर्य्यं प्रयच्छन्ति पितामहाः ॥ १०६ ॥ मोक्षोपायमथैश्वर्य्यं सूक्ष्मदेहाश्च देवताः । कृत्स्नं वैराग्यमानन्त्यं प्रयच्छन्ति पितामहाः ॥ १०७ ॥ ऐश्वर्य्यं विहितं योगमैश्वर्य्यं वित्तमुत्तमम् । योगैश्वर्य्यादृते मोक्षः कथञ्चिन्नोपपद्यते ॥ १०८ ॥ अपक्षस्यैव गमनं गगने पक्षिणो यथा । वरिष्ठः सर्वधर्म्माणां मोक्षो धर्म्मः सनातनः ॥ १०९ ॥ विमानानां सहस्राणि युक्तान्यप्सरसांगणैः । सर्वकामप्रसिद्धानि प्रयच्छन्ति पितामहाः ॥ ११० ॥ प्रज्ञा पुष्टिः स्मृतिर्मेधा राज्यमारोग्यमेव च । पितॄणां हि प्रसादेन प्राप्यते सुमहात्मना ॥१११॥ मुक्तावैदूर्य्यवासांसि वाजिनागायुतानि च । कोटिशश्चापि रत्नानि प्रयच्छन्ति पितामहाः॥११२॥

हंसबर्हिणयुक्तानि मुक्तावैदूर्य्यवन्ति च । किङ्किणीजालनद्धानि सदा पुष्पफलानि च । प्रीत्या नित्यं प्रयच्छन्ति मनुष्याणां पितामहाः ॥ ११३ ॥
इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नामैकादशोऽध्यायः ॥ ११ ॥ ७ ॥ बृहस्पतिरुवाच ॥ सौवर्णं राजतं ताम्रं पितॄणां पात्रमुच्यते ।
रजतं रजताक्तं वा पितॄणां पात्रमुच्यते ॥ १ ॥ रजतस्य तथा चापि दर्शनं दानमेव च । अनन्तमक्षयं स्वर्ग्यं पितॄणां दानमुच्यते ।
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युत ॥ २ ॥ राजते हि स्वधा दुग्धा पात्रेऽस्मिन्पितृभिः पुरा । स्वधादायार्थिभिस्तात तस्मिन्दत्ते तदक्ष
यम् ॥ ३ ॥ कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव वा । रक्षोघ्नं ब्रह्मवर्चस्यं पितॄंस्तत्तद्धितारयेत् ॥ ४ ॥ काञ्चनं राजतं ताम्रं
दौहित्रं कुतपस्तिलाः । वस्त्रञ्च पावनीयानि त्रिदण्डो योगमेव च ॥ ५ ॥ श्राद्धकर्मण्ययं श्रेष्ठो विधिर्ब्राह्मयः सनातनः । आयुः कीर्त्तिः
प्रजाश्चैव प्रज्ञासन्ततिवर्द्धनः ॥ ६ ॥ दिशि दक्षिणपूर्वस्यां विदिक्स्थानं विशेषतः । सर्वतोरत्निमात्रन्तु चतुरस्रं सुसंहितम् ॥ ७ ॥
वक्ष्यामि विधिवत्स्थानं पितॄणामनुशासनात् । धन्यमारोग्यमायुष्यं बलवर्णविवर्द्धनम् ॥ ८ ॥ तत्र गर्त्तास्त्रयः कार्य्यास्त्रयो दण्डाश्च खादिराः ।
रत्निमात्रास्तु ते कार्य्या रजतेन विभूषिताः । ते वितस्त्यायताः कार्य्याः सर्व्वतश्चतुरङ्गुलाः ॥ ९ ॥ प्राग्दक्षिणमुखान्भूमौ स्थितानसुपिरांस्त
था । अद्भिः पवित्रपूताभिः प्लावयेत्सततं शुचिः ॥ १० ॥ पयसा ह्याजगव्येन शोधनं वाग्भिरेव तु । तर्पणात्सततं ह्येवं तृप्तिर्भवति शाश्वती
॥ ११ ॥ इह चामुत्र च श्रीमान्सर्वकर्मसमन्वितः । एवं त्रिषवणस्नातो योऽर्चयेत पितॄन्सदा । मन्त्रेण विधिवत्सम्यगश्वमेधफलं लभेत् ॥ १२ ॥
तत्स्थापयेदमावास्यां गर्त्ते भूचतुरङ्गुले । त्रिःसप्तसंज्ञास्ते यज्ञास्त्रैलोक्यं धार्य्यते तु वै ॥ १३ ॥ तस्य पुष्टिरथैश्वर्य्यमायुः सन्ततिरेव च । विचित्रा
भजते लक्ष्मीर्मोक्षं च लभते क्रमात् ॥ १४ ॥ पाप्मापहं पावनीयमश्वमेधफलं तथा । अश्वमेधफलं ह्येतद्द्विजैः सत्कृत्य पूजितम् । मन्त्रं वक्ष्या
म्यहं तस्मादमृतं ब्रह्मनिर्मितम् ॥ १५ ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वधायै स्वाहायै नित्यमेव भवन्त्युत ॥ १६ ॥ आद्याव
साने श्राद्धस्य त्रिरावर्त्तं जपेत्सदा । पिण्डनिर्वपणे चैव जपेदेतत्समाहितः । पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ॥ १७ ॥ पितॄंस्तांस्त्रिषु
लोकेषु मन्त्रोऽयं तारयत्युत । पठ्यमानः सदा श्राद्धे नियतं ब्रह्मवादिभिः ॥ १८ ॥ राज्यकामो जपेदेनं सदा मन्त्रमतन्द्रितः । वीर्य्यशौचार्थसत्त्वञ्च
श्रीरायुर्बलवर्द्धनम् ॥ १९ ॥ प्रीयन्ते पितरो येन जप्येन नियमेन च । सप्तार्चिषं प्रवक्ष्यामि सर्वकामप्रदं शुभम् ॥ २० ॥ अमूर्तानां समूर्तानां पितॄणां दीप्त
तेजसाम् । नमस्यामि सदा तेभ्यो ध्यानिभ्यो योगचक्षुषा ॥ २१ ॥ इन्द्रादीनां जनयितारो भृगुमारीचयोस्तथा । सप्तर्षीणां पितॄणाञ्च तान्नमस्यामि

कामदान्॥२२॥मन्वादीनां सुरेशानां सूर्य्याचन्द्रमसोस्तथा। तान्नमस्कृत्य सर्वान्वै पितृन्कुशलदायकान्॥२३॥नक्षत्राणां चरादीनां पितृनथ पितामहान्।
द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः॥२४॥देवर्षीणाञ्जनयितॄंश्च सर्वलोकनमस्कृतान्। अभयस्य सदा दातॄन्नमस्येऽहं कृताञ्जलिः ॥ २५ ॥ प्रजा
पतेः कश्यपाय सोमाय वरुणाय च। योगयोगेश्वरेभ्यश्च नमस्यामि कृताञ्जलिः ॥ २६ ॥ पितृगणेभ्यः सप्तभ्यो नमो लोकेषु सप्तसु । स्वयम्भुवे नमश्चैव
ब्रह्मणे योगचक्षुषे ॥ २७॥ एतदुक्तं सप्तसप्तिब्रह्मर्षिगणपूजितम् । पवित्रं परमं ह्येतच्छ्रीमद्रक्षोविनाशनम् ॥ २८ ॥ अनेन विधिना युक्तस्त्रीन्वरान् लभते
नरः। अन्नमायुः सुतांश्चैव ददते पितरो भुवि ॥ २९ ॥ भक्त्या परमया युक्तः श्रद्दधानो जितेन्द्रियः। सप्तार्चिषं जपेद्यस्तु नित्यमेव समाहितः।
सप्तद्वीपसमुद्रायां पृथिव्यामेकराड्भवेत् ॥ ३० ॥ यत्किंचित्पच्यते गेहे भक्ष्यं वा भोज्यमेव च। अनिवेद्य न भोक्तव्यं तस्मिन्नायतने सदा ॥ ३१ ॥
क्रमशः कीर्त्तयिष्यामि बलिपात्राण्यतः परम्। येषु यच्च फलं प्रोक्तं तन्मे निगदतः शृणु ॥ ३२ ॥ ॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो
नाम द्वादशोऽध्यायः ॥ १२ ॥ ७ ॥ बृहस्पतिरुवाच ॥ पालाशं ब्रह्मवर्चस्यमश्वत्थे राज्यभावना। सर्वभूताधिपत्यं च प्लक्षे नित्यमुदाहृतम् ॥ १ ॥
पुष्टिकामं च न्यग्रोधं बुद्धिं प्रज्ञां धृतिं स्मृतिम्। रक्षोघ्नं च यशस्यं च काश्मर्य्यं पात्रमुच्यते ॥ २ ॥ सौभाग्यमुत्तमं लोके मधुके समुदाहृतम्।
फल्गुपात्रे च कुर्वाणः सर्वान्कामानवाप्नुयात् ॥ ३ ॥ परा द्युतिरथो कर्त्तुः प्राकाश्यं च विशेषतः। बिल्वे लक्ष्मीस्तथा मेधा नित्यमायुष्यमेव च
॥ ४ ॥ क्षेत्रारामतडागेषु सर्वसस्येषु चैव हि। वर्षेदजस्रं पर्जन्यो वेणुपात्रेषु कुर्व्वतः ॥ ५ ॥ एतेष्वेव सुपात्रेषु ये चैवाग्रयणं ददुः। सकृदप्यत्र
यज्ञानां सर्वेषां फलमुच्यते ॥ ६ ॥ पितृभ्यो यस्तु माल्यानि सुगन्धीनि च सर्वशः। सदा दद्याच्छ्रिया युक्तः स विभाति दिवाकरः ॥ ७ ॥ गुग्गु
ल्वादींस्तथा धूपान् पितृभ्यो यः प्रयच्छति। संयुक्तान्मधुसर्पिर्भ्यां सोऽश्वमेधफलं लभेत् ॥ ८ ॥ धूपं गन्धगुणोपेतं कान्तं पितृपरायणम्।
लभते स्त्रीष्वपत्यानि इह चामुत्र चोभयोः। दद्यादेव पितृभ्यस्तु नित्यमेव ह्यतन्द्रितः ॥ ९ ॥ दीपं पितृभ्यः प्रयतः सदा यस्तु प्रयच्छति। स लोके
ऽप्रतिमं चक्षुः सदा च लभते शुभम् ॥ १० ॥ तेजसा यशसा चैव कान्त्या चैव बलेन च। भुवि प्रकाशो भवति भ्राजते च त्रिविष्टपे। अप्सरोभिः
परिवृतो विमानाग्रे स मोदते ॥ ११ ॥ गन्धान्पुष्पाणि धूपांश्च दद्यादाज्याहुतीश्च वै। फलमूलनमस्कारैः पितृणां प्रयतः शुचिः। पूर्वं कृत्वा
द्विजान्पश्चात्पूजयेदन्नसम्पदा ॥ १२ ॥ श्राद्धकाले तु सततं वायुभूताः पितामहाः। आविशन्ति द्विजान्दृष्ट्वा तस्मादेतद्ब्रवीमि ते ॥ १३ ॥
वस्त्रैरन्नैः प्रदानैस्तैर्भक्ष्यपेयैस्तथैव च। गोभिरश्वैस्तथा ग्रामैः पूजयित्वा द्विजोत्तमान् ॥१४॥ भवन्ति पितरः प्रीताः पूजितेषु द्विजातिषु। तस्मादन्नेन

येद्द्विजसत्तमान् ॥ १५ ॥ सव्योत्तराभ्यां पाणिभ्यां कुर्य्यादुल्लेखनं द्विजः । प्रोक्षणश्च तथा कुर्याच्छ्राद्धकर्म्मण्यतन्द्रितः ॥ १६
स्तथा भक्ष्यान्पुष्पाणि विविधानि च । गन्धदानमलङ्कारमेकैकं निर्वपेद्बुधः ॥ १७॥ पोषयित्वा जनं सम्यग्वेश्मः स्यादुत्तरो द्विजः । अ
न्त्रैभिः कुर्यायथाविधि ॥ १८ ॥ अपसव्यं पितृभ्यश्च दद्यादन्नमनुत्तमम् । तमुच्चार्य्याथ सर्वेषां वस्त्रार्थं सूत्रमेव च ॥ १९ ॥ खण्डनं पो
क्षनं तथा । सकृदेव हि देवानां पितृणां त्रिभिरुच्यते ॥ २० ॥ एकं पवित्रं हस्तेन पितॄन्सर्वान्सकृत्सकृत् । चैलमन्त्रेण पिण्डेभ्यो द
म् ॥ २१ ॥ सदा सर्पिस्तिलैर्युक्तांस्त्रीन् पिण्डान्निर्वपेद्भुवि । जानुं कृत्वा तथा सव्यं भूमौ पितृपरायणः ॥ २२ ॥ पितॄन् पितामहां
महान् । आहूय च पितॄन् प्राश्नान् पितृतीर्थेन यत्नतः । पिण्डान्परिक्षिपेत्सम्यगपसव्यमतन्द्रितः ॥ २३ ॥ अन्नेनाद्भिश्च पुष्पैश्च भक्ष्यै
पृथग् मातामहानान्तु केचिदिच्छन्ति मानवाः ॥ २४ ॥ त्रीन् पिण्डानानुपूर्व्येण साङ्गुष्ठान्पुष्टिवर्द्धनान् । जान्वन्तराभ्यां यत्नेन पिण्ड
म् ॥ २५ ॥ सव्योत्तराभ्यां पाणिभ्यां धर्मे मन्त्रे च पर्य्ययः । नमो वः पितरः सूक्ष्मैः सदा ह्येवमतन्द्रितः ॥२६ ॥ दक्षिणस्यान्तु पाणि
त्सृजेत् । नमो वः पितरः सौम्याः पठन्नित्यमतन्द्रितः ॥ २७ ॥ सव्योत्तराभ्यां पाणिभ्यां धर्मे सर्व्वमतन्द्रितः । उलूखलस्य लेख
नम् ॥ २८ ॥ क्षौमसूत्रं नवं दद्याच्छोणं कार्पासिकं तथा । पत्रोर्णं पितृसूत्रञ्च कौशेयं परिवर्जयेत् ॥ २९ ॥ वर्जयेत्तद्दशां यज्ञे य
। न प्रीणन्ति तथैतानि दातुराप्यायतो भवेत् ॥ ३० ॥ श्रेष्ठमाहुस्त्रिककुदमञ्जनं नित्यमेव च । कृष्णेभ्यश्च तिलेभ्यश्च यत्तैलं परि
॥ चन्दनागुरुणी चोभे तमालोशीरपद्मकम् । धूपं च गुग्गुलश्रेष्ठं तुरुष्कं धूपमेव च ॥ ३२ ॥ शुक्लाः सुमनसः श्रेष्ठास्तथा पद्म
गन्धवन्त्युपपन्नानि यानि चान्यानि कृत्स्नशः ॥ ३३ ॥ जवासुमनसो भण्डीरूपकामकुरण्डकाः । पुष्पाणि वर्जनीयानि श्राद्धक
३४ ॥ यानि गन्धादपेतानि उपगन्धीनि यानि च । वर्जनीयानि पुष्पाणि भूतिमन्विच्छता तदा ॥ ३५॥ द्विजातयस्तथान्विष्टा निय
ः । पूजयेद्यजमानस्तु विधिवद्दक्षिणामुखः ॥ ३६ ॥ तेषामभिमुखो दद्याद्दर्भान्पिण्डांश्च यत्नतः । अनेन विधिना साक्षादर्चयेत् स्
॥ ३७ ॥ हरिता वै सपिञ्जलयाः पुष्पस्निग्धाः समाहिताः । रत्निमात्रप्रदानेन पितृतीर्थेन संस्थिताः ॥ ३८ ॥ उपमूले तथा नीलाः प्र
ाः । तथा श्यामाकनीवारा दुर्वाराः समुद्धृताः ॥ ३९ ॥ पूर्वकीर्त्तितवाग्भ्रेष्ठो बभूवाथ प्रजापतिः । तस्य वाला निपतिता
तः ॥ ४० ॥ तस्मान्मेध्या समाकाशाः श्राद्धकर्मणि पूजिताः । पिण्डनिर्वपणं तेषु कर्त्तव्यं भूतिमिच्छता ॥४१॥ प्रजापुष्टिर्द्युतिः की

प्रजाकान्तिसमन्विता । भवन्ति रुचिरा नित्यं विपाप्मानोऽघवर्जिताः ॥ ४२ ॥ सकृदेवास्तरेद्दर्भान् पिण्डार्थं दक्षिणामुखः । प्राग्दक्षिणाग्रनियतो विधिश्चाप्यनुवक्ष्यति ॥ ४३ ॥ न दीनो वापि वा क्रुद्धो न चैवान्यमना नरः । एकाग्रमाधाय मनः श्राद्धं कुर्य्यात्सदा बुधः ॥ ४४ ॥ निहन्मि सर्व्वं यदमेध्यवद्भवेद्धताश्च सर्व्वे सुरदानवा मया । रक्षांसि यक्षाश्च पिशाचसङ्घा हता मया यातुधानाश्च सर्व्वे ॥ ४५ ॥ एवं पित्रे दृष्टमन्त्रं हि यस्य तस्यासुरा वर्जयन्तीह सर्व्वे । यस्मिन्देशे पठ्यते एष मन्त्रस्तं वै देशं राक्षसा वर्जयन्ति ॥ ४६ ॥ अनेन विधिना नित्यं श्राद्धं कुर्य्याद्द्विजः सदा । मनसा काङ्क्षितं यद्यत्तत्तद्द्द्युः पितामहाः ॥ ४७ ॥ पितरो हृष्टमनसो रक्षांसि विमनांसि च । भवन्त्येव कृते श्राद्धे नित्यमेव प्रयत्नतः ॥ ४८ ॥ शूद्राः श्राद्धे क्षीरिवाशु बल्वजास्तरवस्तथा । वारणाश्च लवाश्चैव लवपर्णाश्च नित्यशः । एवमादीन्यथान्यानि तृणानि परिवर्जयेत् ॥ ४९ ॥ अञ्जनाभ्यञ्जनागन्धामानुप्रलेपनं तथा । काशैः पुनर्भवैः कार्य्यं सर्व्वमेव फलं भवेत् ॥ ५० ॥ काशाः पुनर्भवा ये च बर्हणा उपबर्हणाः । अथ ते पितरो देवा देवाश्च पितरः पुनः ॥ ५१ ॥ पुष्पगन्धादिधूपानामेष मन्त्र उदाहृतः । आहृत्य दक्षिणायान्तु होमार्थे विप्रयत्नतः ॥ ५२ ॥ सोमाय वै पितृमते स्वधा अङ्गिरसे नमः । अस्वर्ग्यं लौकिकं वापि जुहुयात्कर्म्मसिद्धये ॥ ५३ ॥ अन्तराधाय समिधं तथा होमो विधीयते ॥ समाहितेन मनसा प्रयताग्निः प्रयत्नतः ॥ ५४ ॥ अग्नये कव्यवाहाय स्वधा अङ्गिरसे नमः । यमाय चैवाङ्गिरसे स्वधा नम इति ब्रुवन् ॥ ५५ ॥ इत्येते वै होममन्त्रा मन्त्राणामनुपूर्व्वशः । दक्षिणातोऽग्नये नित्यं सोमायान्तरतस्तथा ॥ ५६ ॥ एतयोरन्तरं नित्यं जुहुयाद्वै विवस्वते । उपचारं स्वधाकारं तथैवोल्लेखनञ्च यत् ॥ ५७॥ होमजप्ये नमस्कारः प्रोक्षणञ्च विशेषतः । अञ्जनाभ्यञ्जने चैव पिण्डसंवपनं तथा ॥ ५८ ॥ अश्वमेधफलेनैव तत्स्मृतं मन्त्रपूर्व्वकम् । क्रियाः सर्व्वा यथोद्दिष्टाः प्रयत्नेन समाचरेत् ॥ ५९ ॥ बहुहव्यत्वमेवाग्नौ सुसमिद्धे विशेषतः । विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥ ६० ॥ अप्रबुद्धे सधूमे च जुहुयाद्यो हुताशने । यजमानो भवेदन्धः सोऽपुत्र इति नः श्रुतम् ॥ ६१ ॥ अल्पेन्धनो वा रूक्षो वा विस्फुलिङ्गश्च सर्व्वशः । ज्वाला धूमोपसेव्यश्च स तु वह्निर्न सिद्धये ॥ ६२ ॥ दुर्गन्धश्चैव नीलश्च कृष्णश्चैव विशेषतः । भूमिं विगाहते यत्र तत्र विद्यात्पराभवम् ॥ ६३ ॥ अर्चिष्मान् पिण्डिताशिखः सर्पिःकाञ्चनसम्भवः ॥ स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात्कार्य्यसिद्धये ॥६४॥ नरनारीगणेभ्यश्च पूजां प्राप्नोति शाश्वतीम् । अक्षयाः पूजितास्तेन भवन्ति पितरोऽव्ययाः ॥६५॥ स्थाल्युदुम्बरपात्राणि फलानि समिधस्तथा । श्राद्धे चातिपवित्राणि मेध्यानीति विशेषतः ॥ ६६ ॥ पवित्रं वा द्विजश्रेष्ठ शुद्धये जन्मकर्म्मसु । पात्रेषु फलमुद्दिष्टं यन्मया श्राद्धकर्माणि ॥ ६७ ॥ तदेव कृत्स्नं विज्ञेयं समित्सु च यथाक्रमम् । कृत्वा समाहितं चित्तमग्नये वै करोम्यहम् ॥ ६८ ॥

अनुज्ञातः कुरुष्वेति तथेव द्विजसत्तमैः । पत्नीमादाय पुत्रांश्च जुहुयाद्धव्यवाहनम् ॥ ६९ ॥ समानप्लक्षन्यग्रोधप्लक्षाश्वत्थविकङ्कताः । उदुम्बरास्तथा
विल्वचन्दना यज्ञियाश्च ते ॥ ७० ॥ सरलो देवदारुश्च शालश्च खदिरस्तथा । समिदर्थं प्रशस्ताः स्युरेते वृक्षा विशेषतः ॥ ७१ ॥ ग्राम्याः कण्टकिन
श्चैव यज्ञिया येन केन च । पूजिताः समिदर्थे तु पितॄणां वचनं तथा ॥ ७२ ॥ समिद्भिः कल्कलेयाभिर्जुहुयाद्यो हुताशनम् । फलं यत् कर्मणस्त
स्य तन्मे निगदतः शृणु ॥ ७३ ॥ आयसं सर्व्वकामीयमश्वमेधफलं हि तत् । श्लेष्मातको नक्तमालः कपित्थः शाल्मलिस्तथा ॥ ७४ ॥ नीपो विभी
तकश्चैव वल्लीभिश्च तथैव च । शकुनानां निवासश्च वर्जयेच्च महीरुहान् । अयज्ञीयाः स्मृता ये च वृक्षांश्चैव तु वर्जयेत् ॥ ७५ ॥ स्वधेति चैव मन्त्रान्ते
पितॄणां वचनं तथा । स्वाहेति चैव देवानां यज्ञकर्मण्युदाहृतम् ॥७६॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम त्रयोदशोऽध्यायः ॥ १२ ॥छ॥
सूत उवाच ॥ देवाश्च पितरश्चैव तेभ्योऽन्ये पितरस्तथा । आथर्वणविधिर्ह्येष प्रत्युवाच बृहस्पतिः ॥ १ ॥ पूजयेच्च पितॄन् पूर्व्वं देवांश्चापि विशे
षतः । देवेभ्योऽपि पितॄन् पूर्व्वमर्चयन्तीह यत्नतः ॥२॥ दक्षस्य दुहिता ख्याता लोके विश्वेति नामतः । विधिना सा तु धर्म्मज्ञ दत्ता धर्म्माय धर्म्मतः ।
तस्याः पुत्रा महात्मानो विश्वेदेवा इति श्रुतिः ॥ ३ ॥ प्रख्यातास्त्रिषु लोकेषु सर्व्वलोकनमस्कृताः । समस्तास्ते महात्मानश्चेरुरुग्रं महत्तपः ॥ ४ ॥ हिम
वच्छिखरे रम्ये देवगन्धर्वसेविते । सर्व्वाप्सरोभिश्चरितं देवगन्धर्व्वसेवितम् ॥ ५ ॥ शुद्धेन मनसा प्रीताः पितरस्तानथाब्रुवन् । वरं वृणीध्वं प्रीताःस्म कं
कामं करवामहे ॥ ६ ॥ एवमुक्ते तु पितृभिस्तदा त्रैलोक्यभावनः । प्रजानामधिपो ब्रह्मा विश्वानितीदमब्रवीत् ॥ ७ ॥ ब्रह्मोवाच ॥ महातेजा महादेवस्तपसा
तैस्तु तापितः । तपसा तेन सुप्रीतः कं कामं विदधामि वः॥ ८ ॥ एवमुक्तास्तदा विश्वे ब्रह्मणा लोककर्तृणा । ऊचुस्ते सहिताः सर्व्वे ब्रह्माणं लोकभावि
नम् ॥ ९ ॥ श्राद्धेऽस्माकं भवेदंशो ह्येष नः कांक्षितो वरः । प्रत्युवाच ततो ब्रह्मा तान्वै त्रिदिवपूजितान् ॥ १० ॥ भविष्यत्येवमेवेति कांक्षितो वो
वरस्तु यः । पितृभिस्तु तथेत्युक्त्वा एवमेतन्न संशयः ॥ ११ ॥ सहास्माभिस्तु वो भाव्यं यत्किञ्चित् क्रियते त्विह । अस्माकं कल्पिते श्राद्धे युष्मा
नग्रासनं ह वै ॥ १२ ॥ भविष्यति मनुष्येषु सत्यमेतद्ब्रवीमि ते । माल्यैर्गन्धैस्तथान्नेन युष्मानग्रेर्चयिष्यति ॥ १३ ॥ प्रदाता चेति युष्माकमस्माकं
दास्यते ततः । विसर्जनमथास्माकं पूर्व्वं पश्चात्तु देवताः ॥ १४ ॥ रक्षणश्चैव श्राद्धस्य आतिथ्यञ्च विधिद्वयम् । भूतानां देवतानाञ्च पितॄणां श्राद्ध
कर्म्मणि । एवं विधिकृतः सम्यक् सर्व्वमेतद्भविष्यति ॥ १५ ॥ एवं दत्त्वा वरं तेषां ब्रह्मा पितृगणैः सह ॥ भूतानुग्रहकृद्देवः सञ्चचार यथासुखम्
॥ १६ ॥ वेदे पञ्च महायज्ञा नराणां समुदाहृताः । एतान्पञ्च महायज्ञान्निर्वपेत्सततं नरः ॥ १७ ॥ यत्र यास्यन्ति दातारः संस्थानं वै निवो

घत । निर्भयं निरहङ्कारं निःशोकं निर्व्यथकुमम् । ब्रह्मस्थानमवाप्नोति सर्वकामपुरस्कृतम् ॥ १८ ॥ शूद्रेणापि प्रकर्त्तव्याः पञ्चैते मन्त्रवर्जिताः । अतोऽन्यथा तु यो भुङ्क्ते स ऋणं नित्यमश्नुते ॥ १९ ॥ ऋणश्च भुङ्क्ते पापात्मा यः पचेदात्मकारणात् । तस्मान्निर्वर्त्तयेत्पञ्च महायज्ञान्सदा बुधः ॥२०॥ नैवेद्यं केचिदिच्छन्ति जीवत्यपि प्रयत्नतः । उदकपूर्व्वं बलिं कुर्यादुदकुम्भं तथैव च ॥ २१ ॥ बलिं सुविदितं कुर्यादुच्चादुच्चतरं क्षिपेत् । परश्शृङ्गगवां पूर्व्वं बलिं सूक्ष्मं समुत्क्षिपेत् ॥ २२ ॥ न निवेद्यो भवेत् पिण्डः पितॄणां यस्तु जीवति । इष्टेनान्नेन भक्ष्यैश्च भोजयेत यथाविधि । विधानं वेदविहितमेत द्वक्ष्यामि यत्नतः ॥ २३ ॥ देवदेशा महात्मानो ह्येतेपि पितरो हुत । इच्छन्ति किञ्चिदाचार्य्याः पश्चात् पिण्डनिवेदनम् ॥२४॥ पूजनञ्चैव विप्राणां सर्व्वमेव हि नित्यशः । तद्धि धर्मार्थकुशलानित्युवाच बृहस्पतिः ॥ २५ ॥ पूर्व्वं निवेदयेत्पिण्डं पश्चाद्विप्रांश्च भोजयेत् । योगात्मानो महात्मानः पितरो योगसम्भवाः । सोममाप्याययन्त्येते पितरो योगमास्थिताः ॥ २६ ॥ तस्माद्दद्याच्छुचिः पिण्डान् योगिभ्यस्तत्परायणः । पितॄणां हि भवेदेतत्साक्षादिव हुतं हविः॥२७ ॥ब्राह्मणानां सहस्रेभ्यो योगी चाग्रासने यदि । यजमानञ्च भोक्तॄंश्च नौरिवाम्भसि तारयेत् ॥ २८ ॥ असतां प्रग्रहो यत्र सताञ्चैव विमानना । दण्डो देवकृतस्तत्र सद्यः पतति दारुणः ॥ २९ ॥ हित्वागमं सधर्माणं बालिशं यत्र भोजयेत् । आदिकर्म समुत्सृज्य दाता तत्र विनश्यति ॥ ३० ॥ पिण्डमग्नौ सदा दद्याद्भोगार्थी तु प्रयत्नतः । प्रजार्थी पत (त्न्) ये दद्यान्मध्यमं तत्र पूर्वकम् ॥३१॥ उत्तमां द्युतिमन्विच्छन् गोषु नित्यं प्रयच्छति । प्रज्ञां पूजां यशः कीर्त्तिं गोषु नित्यं प्रयच्छति ॥३२ ॥ प्रार्थयन्दीर्घमायुश्च वायसेभ्यः प्रयच्छति । सौकुमार्यमथान्विच्छन् कुक्कुटेभ्यः प्रयच्छति॥३३ ॥ एवमेतत्समुद्दिष्टं पिण्डानिर्वपणात् फलम् । आकाशं शमयेद्वापि स्थितौ सुदाक्षिणामुखः । पितॄणां स्थानमाकाशं दाक्षिणा चैव दिग्भवेत् ॥ ३४ ॥ एकं विप्राः पुनः प्राहुः पिण्डोद्धरणमग्रतः । अनुज्ञाते तु तैर्विप्रैर्वानमुद्धियतामिति ॥ ३५ ॥ पुष्पाणां च फलानां च भक्ष्याणामन्नतस्तथा । अग्रमुद्धृत्य सर्वेषां जुहुयाज्जातवेदसि ॥ ३६ ॥ भक्ष्यमन्नं तथा पेयमनुत्तमफलानि च । हुत्वा चाग्नौ ततः पिण्डान्निर्वपेद्दक्षिणामुखः ॥ ३७ ॥ स्निग्धैर्भक्ष्यैः सुगन्धैश्च तर्पयेत रसैस्तथा । एकाग्रः पर्युपासीत प्रयतः प्राञ्जलिः स्थितः । तत्परः श्रद्दधानश्च कामानाप्नोति मानवः ॥ ३८ ॥ अक्षुद्रत्वं कृतज्ञत्वं दाक्षिण्यं सत्कृतञ्च यत् । ततो यज्ञञ्च दानञ्च प्रयच्छन्ति पितामहाः ॥ ३९ ॥ अतः परं विधिं सौम्यं भुक्तवत्सु द्विजातिषु । आनुपूर्व्येण विधिना तन्मे निगदतः शृणु ॥ ४० ॥ प्रोक्ष्य भूमिमथोद्धृत्य पूर्वं पितृपरायणः । ततोऽत्र विकिरं कुर्यात् विधिदृष्टेन कर्मणा ॥ ४१ ॥ स्वधां वाच्य ततो विप्रा विधिवद्भूरिदक्षिणान् । अन्नशेषमनुज्ञाप्य सत्कृत्य द्विजसत्तमान् । प्राञ्जलिः प्रयतश्चैव अनुगम्य विसर्जयेत् ॥ ४२॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम

चतुर्दशोऽध्यायः ॥ १४ ॥ ७ ॥ बृहस्पतिरुवाच ॥ सकृदभ्यर्चिताः प्रीता भवन्ति पितरोऽव्ययाः । योगात्मानो महात्मानो विपाप्मानो महौजसः ॥१॥
प्रेत्य च स्वर्गलाभाय कामैश्वर्यं सुविस्तरम् । येषां चाप्यनुगृह्णन्ति मोक्षप्रातिक्रमेण तु ॥ २ ॥ तानि वक्ष्याम्यहं सौम्याः सरांसि सरितस्तथा । तीर्थानि
चैव पुण्यानि देशाञ्छैलांस्तथाश्रमान् ॥ ३॥ पुण्यो यस्त्रिषु लोकेष्वमरकण्टकपर्वतः । पर्वतः प्रवरः पुण्यः सिद्धचारणसेवितः ॥ ४ ॥ यत्र वर्षसहस्राणि
प्रयुतान्यर्बुदानि च । तपः सुदुश्चरं तेपे भगवानङ्गिराः पुरा ॥ ५ ॥ यत्र मृत्योर्गतिर्नास्ति तथैवासुररक्षसाम् । न भयं चैव वाऽलक्ष्मीर्याविद्भूमिर्धरिष्यति
॥ ६ ॥ तेजसा यशसा चैव भ्राजते स नगोत्तमः । शृङ्गमाल्यवतो नित्यं वह्निः संवर्तको यथा ॥ ७॥ मृदवश्च सुगन्धाश्च हेमाभाः प्रियदर्शनाः । शान्ताः
कुशा इति ख्याताः पिबन्दक्षिणनर्मदाम् ॥ ८॥ दृष्टवान् स्वर्गसोपानं भगवानङ्गिराः पुरा । अग्निहोत्रे महातेजाः प्रस्तरार्थंकुशोत्तमान् ॥ ९ ॥ तेषु
दर्भेषु यः पिण्डानमरकण्टकपर्वते । दद्यात्सकृदपि प्राज्ञस्तस्य वक्ष्यामि यत्फलम् ॥ १० ॥ तद्भवत्यक्षयं श्राद्धं पितृणां प्रीतिवर्द्धनम् । अन्तर्द्धानं
च गच्छन्ति क्षेत्रमासाद्य तत्सदा ॥ ११ ॥ तत्र ज्वालारसः पुण्यो दृश्यतेऽद्यापि सर्वशः । सशल्यानां च सत्त्वानां विशल्यकरणी नदी ॥१२॥ प्राग्दक्षिणा
तु सावर्त्ता वापी सा पर्वतोत्तमे । कलिङ्गदेशपार्श्वार्द्धे पितृणां प्रीतिवर्द्धनम् ॥ १३ ॥ सिद्धक्षेत्रमृषिश्रेष्ठा यदुक्तं परमं भुवि । सम्मतो देवदैत्यानां श्लोकम
प्युशना जगौ ॥ १४ ॥ धन्यास्ते पुरुषा लोके ये प्राप्यामरकण्टकम् । पितॄन्सन्तर्पयिष्यन्ति श्राद्धे पितृपरायणाः ॥ १५ ॥ अल्पेन तपसा सिद्धिं गमि
ष्यन्ति न संशयः । सकृद्देवार्चितास्तत्र स्वर्गममरकण्टके ॥ १६ ॥ महेन्द्रपर्वते रम्ये पुण्यं शक्रनिषेवितम् । तत्रारुह्य भवेत् प्रीतिः श्राद्धं चैव महत्फ
लम् ॥ १७ ॥ बिल्वाधःशिखरे युक्ता दिव्यं चक्षुः प्रवर्त्तते । अदृश्यं चैव भूतानां देववच्चरते महीम् ॥ १८ ॥ सप्तगोदावरे चैव गोकर्णे च तपोवने ।
अश्वमेधफलं तत्र स्नात्वा च लभते नरः ॥१९॥ धूतपापस्थलं प्राप्य पूतः स्नात्वा भवेन्नरः । रुद्रस्तत्र तपस्तेपे देवदेवो महेश्वरः ॥ २० ॥ गोकर्णे वर्णितं
विप्रैर्नास्तिकानां निदर्शनम् । अब्राह्मणस्य सावित्री पठतः सम्प्रणश्यति ॥ २१ ॥ देवर्षिभवने शृङ्गे सिद्धचारणसेविते । आरुह्य तं तु नियमात्ततो यान्ति
त्रिविष्टपम् ॥२२॥ दिव्यैश्चन्दनवृक्षैश्च पादपैरुपशोभितम् । आपः स्वादनसम्पृक्ता वहन्ति सततं यतः ॥२३॥ नदी प्रवर्त्तते ताभ्यस्ताम्रपर्णीति नामतः ।
योपेत्य समहाखेदा दक्षिणं याति सागरम् ॥२४॥ नद्यास्तस्यास्तु या आपो मूर्च्छमाना महोदधौ । शङ्खा भवन्ति मुक्ताश्च जायन्ते शङ्खमुक्तिकाः ॥२५॥
उदकानयनं कृत्वा शङ्खमौक्तिकसंयुतम् । आधिभिर्व्याधिभिश्चैव मुक्ता यान्त्यमरावतीम् ॥ २६ ॥ चन्दनेभ्यः प्रयुक्तानां शङ्खानां मौक्तिकस्य च । पाप
कर्तॄनपि पितॄंस्तारयन्ति यथा श्रुतिः ॥ २७ ॥ चन्द्रतीर्थे कुमार्यान्तु कावेर्यां प्रभवेऽक्षये । श्रीपर्वतस्य तीर्थेषु वैकृते च तथा गिरौ ॥ २८ ॥ एक

स्था यत्र दृश्यन्ते वृक्षा ह्योशिरपर्वते । पालाशाः खादिरा बिल्वा प्लक्षाश्वत्थविकङ्कताः ॥ २९ ॥ एतद्धि मण्डलं सिद्धं यज्ञीयं द्विजसत्तमाः । अस्मिन्
मुक्त्वा जनोऽङ्गानि क्षिप्रं यात्यमरावतीम् ॥ ३० ॥ कर्माणि स्वप्रयुक्तानि सिध्यन्ति प्रभवात्यये । दुष्प्रसक्तानि पितृषु प्रयुक्तानि भवन्त्युत ॥ ३१ ॥
पितॄणां दुहिता पुण्या नर्मदा सरितां वरा । तत्र श्राद्धानि दत्तानि अक्षयाणि भवन्त्युत ॥ ३२ ॥ माठरस्य वने पुण्ये सिद्धचारणसेविते ।
अन्तर्द्धानं न गच्छन्ति सक्तास्तस्मिन्महागिरौ ॥ ३३ ॥ विन्ध्ये चैव गिरौ पुण्ये धर्माधर्मनिदर्शनम् । पापधारां न पश्यन्ति धारां पश्यन्ति साधवः
॥ ३४ ॥ तस्यां न दृश्यते पापं कंपाश्चित् पापकर्मणाम् । स्पष्टा भवति सा धारा प्रायशः शुभकर्मणाम् ॥ ३५ ॥ कौशलायां मत-
ङ्गस्य वापी पापनिषूदनी । स्नातास्तस्यां दिवं यान्ति कामचारविहङ्गमाः ॥ ३६ ॥ कुमारकोशलातीर्थे पर्वते पालपञ्जरे । पाण्डु
कूले समुद्रान्ते पण्डारकवने तथा ॥ ३७ ॥ विमले च विपापे च सत्कृत्य प्रभवेऽभये । श्रीवृक्षे गृध्रकूटे च जम्बूमार्गे च नित्यशः ॥ ३८ ॥
असितस्य गुरोः पुण्ये योगाचार्यस्य धीमतः । तत्रापि श्राद्धमानन्त्यमसितायाश्च नित्यशः ॥ ३९ ॥ पुष्करेष्वक्षयं श्राद्धं तपश्चैव महाफलम् ।
महोदधौ प्रभासे च तस्मादेवं विनिर्दिशेत् ॥ ४० ॥ देविकायां वृषो नाम कूपः सिद्धनिषेवितः । समुत्पतन्ति तस्यापो गवां शब्देन नित्यशः ॥४१॥
योगेश्वरैः सदा जुष्टः सर्वपापवहिष्कृतैः । दद्याच्छ्राद्धन्तु यस्तस्मिंस्तस्य वक्ष्यामि यत्फलम् ॥ ४२॥ अक्षयं सार्वकामीयं श्राद्धं प्रीणाति वै पितॄन् ।
जातवेदःशिला तत्र साक्षादग्नेः सनातनी ॥ ४३ ॥ यस्त्वग्निं प्रविशेत्तत्र नाकपृष्ठे स मोदते । अग्निः शान्तः पुनर्जातस्तस्मिन्दत्तं तदक्षयम् ॥ ४४ ॥
दशाश्वमेधिके तीर्थे तीर्थे पञ्चाश्वमेधिके । यथोद्दिष्टं फलं तेषां क्रतूनां नात्र संशयः ॥ ४५ ॥ ख्यातं हयशिरो नाम तीर्थं सद्यो वरप्रदम् ।
श्राद्धं तत्र तदाक्षय्यं दत्त्वा स्वर्गे च मोदते ॥ ४६ ॥ श्राद्धं कुम्भे विमुच्यन्ति ज्ञेयं पापनिषूदनम् । श्राद्धं तत्राक्षयं प्रोक्तं जप्यहोमतपांसि च ॥ ४७ ॥
अजतुङ्गे शुभे तीर्थे तर्पयेत्सततं पितॄन् । दृश्यते पर्वसु च्छाया यत्र नित्यं दिवौकसाम् । पृथिव्यामक्षयं दत्तं निरुजा यत्र पाण्डवाः ॥ ४८ ॥
योगेश्वरैः सदा जुष्टं सर्वपापवहिष्कृतैः । दद्याच्छ्राद्धन्तु यस्तस्मिंस्तस्य वक्ष्यामि यत्फलम् ॥ ४९ ॥ अर्चितास्तेन वै साक्षाद्भवन्ति पितरः सदा ।
अस्मिँल्लोके वशी यः स्यात्प्रेत्य स्वर्गे स मोदते ॥ ५० ॥ प्रायशः प्रवरः पुण्यः शिवो नाम ह्रदस्तथा । तत्र व्याससरः पुण्यं दिव्यं ब्रह्मसर
स्तथा ॥ ५१ ॥ उज्जन्तः पर्वतः पुण्यो वसिष्ठस्य महात्मनः । ऋग्यजुःसामशिरसः कापोतः पुष्पसाह्वयः । आख्यातः पञ्चमो वेदः सृष्टा ह्येतेषु
ब्रह्मणा ॥ ५२ ॥ गत्वैतान् मुच्यते पापाद्द्विजो वह्निः सनातनः । श्राद्धश्चानन्त्यमेतेषु जप्य होमतपांसि च ॥ ५३ ॥ पुण्डरीके महातीर्थे

पुण्डरीकसमं फलम् । ब्रह्मतीर्थे महातीर्थे अश्वमेघफलं लभेत् ॥ ५४ ॥ सिन्धुसागरसम्भेदे तथा पञ्चनदेऽक्षयम् ॥ कीरकात्मा ततः
पुण्यो मण्डवायां च पर्वते ॥ ५५ ॥ देयं सप्तह्रदे श्राद्धं मानसे च विशेषतः । महाकूटे च वन्दे च गिरौ त्रिककुदे तथा ॥ ५६ ॥
सन्ध्यायां च महावेद्यां दृश्यते महदद्भुतम् । अश्रद्दधानान्नाभ्येति साभ्येति च धृतव्रतान् ॥ ५७ ॥ जातवेदःशिला तत्र साक्षादग्नेः सनातनी ॥
श्राद्धानि चाग्निकार्यं च तत्र कुर्यात् सदाक्षयम् ॥ ५८ ॥ संश्रयित्वैकमेकेन सायाह्नं प्रति नित्यशः । तस्मिन्देयं सदा श्राद्धं पितॄणामक्षया
र्थिना ॥ ५९ ॥ कृतात्मा वाऽकृतात्मा वा यत्र विज्ञायते नरः । स्वर्गमार्गप्रदं नाम तीर्थं सद्यो वरप्रदम् । वैराण्युत्सृज्य तस्मिंस्तु दिवं सप्तर्षयो
गताः ॥ ६० ॥ अद्यापि तानि दृश्यन्ते वैराण्येव गतानि तु । स्नात्वा स्वर्गमवाप्नोति तस्मिंस्तीर्थोत्तमे नरः ॥ ६१ ॥ ख्यातमायतनं तत्र नन्दिसिद्ध
निषेवितम् । नन्दीश्वरस्य या मूर्त्तिर्दुराचारैर्न दृश्यते ॥ ६२ ॥ दृश्यन्ते काञ्चना यूपाः सन्निध्ये भास्करोदये । कृत्वा प्रदक्षिणं ते तु गच्छन्त्यन्त
र्हिता दिवम् ॥ ६३ ॥ सर्वतश्च कुरुक्षेत्रं सुतीर्थञ्च विशेषतः । पुण्यं सनत्कुमारस्य योगेशस्य महात्मनः । कीर्त्यते च तिलान्दत्त्वा पितॄणां वै सदा
ऽक्षयम् ॥ ६४ ॥ ओजसे चाक्षयं श्राद्धं धर्मराजनिवेशने । श्राद्धं दत्तममावस्यां विधिना च यथाक्रमम् ॥ ६५ ॥ पुनः सन्निहितानां वै कुरुक्षेत्रे
विशेषतः । अर्चयेद्वा पितॄंस्तत्र सत्पुत्रस्त्वनृणो भवेत् ॥ ६६ ॥ विनशने सरस्वत्यां प्लक्षप्रश्रवणे तथा । व्यासतीर्थे सरस्वत्यां ब्रह्मक्षेत्रे विशे
षतः ॥ ६७ ॥ वेयमोङ्कारपठनैः श्राद्धमक्षयमिच्छता । सर्वतश्चैव गङ्गायां मैनाके च नगोत्तमे ॥ ६८ ॥ यमुनाप्रभवे चैव सर्वपापैः प्रमुच्यते । अत्यु
ष्णाश्चातिशीताश्च आपस्तत्र निदर्शनम् ॥ ६९ ॥ यमस्य भगिनी पुण्या मार्त्तण्डदुहिता तथा । तत्राक्षयं तदा श्राद्धं पितृभिः पूर्वकीर्तितम् ॥ ७० ॥
ब्रह्मानुगह्रदे स्नात्वा सद्यो भवति ब्राह्मणः । तस्मिन् हि श्राद्धमानन्त्यं जपहोमतपांसि च ॥ ७१ ॥ स्थाणुभूतश्चरंस्तत्र वसिष्ठो वै महातपाः ।
अद्यापि यत्र दृश्यन्ते पादपा मणिचर्च्चिताः ॥ ७२ ॥ तुला तु दृश्यते यत्र धर्माधर्मप्रदर्शिनी । यया वै तुलितं विप्रैस्तीर्थानां फलमुत्त
मम् ॥ ७३ ॥ पितॄणां दुहिता योगा गन्धकालीति विश्रुता । चतुर्थो ब्रह्मणश्चांशः पराशरकुलोद्वहः ॥ ७४ ॥ व्यस्य त्वेकं चतुर्द्धा
तु वेदं धीमान् महामुनिः । महायोगं महात्मानं यो व्यासं जनयिष्यति ॥ ७५ ॥ अच्छोदकं नाम सरो यत्राच्छोदा समुच्छ्रिता । मत्स्ययोनौ पुन
र्जाता नियोगाद्धारणेन तु ॥ ७६ ॥ तस्या यत्राश्रमः पुण्यः पुण्यकृद्भिर्निषेवितः । सकृद्दत्तं तु वै श्राद्धमक्षयं समुदाहृतम् । तस्यां योग
समाधाने दत्तं युगपदुद्भवेत् ॥ ७७ ॥ कुबेरतुङ्गे व्यामोच्चे व्यासतीर्थे तथैव च । पुण्यः स ब्राह्मणो दद्याच्छ्राद्धमानन्त्यमक्षयम् ॥ ७८ ॥

सिद्धैस्तु सेविता नित्यं दृश्यतं नाकृतात्मभिः। अनिवर्त्तनं तु नन्दायां वेद्यां प्रागुत्तरे दिशि ॥ ७९ ॥ सिद्धक्षेत्रं तु वै जुष्टं यत्प्राप्य न निवर्त्तते।
महालये पदं न्यस्तं महादेवेन धीमता ॥ ८० ॥ देव्यालये तपस्तप्त्वा एकपादेन ईश्वरः। नीहारश्च युगं दिव्यमुमातुङ्गे स्थितं जलम् ॥ ८१ ॥ उमा
तुङ्गे भृगोस्तुङ्गे ब्रह्मतुङ्गे महालये। कादृवत्यां च शाण्डिल्यां गुहायां वामनस्य च ॥ ८२ ॥ गत्वा चैतानि पूतः स्याच्छ्राद्धमक्षयमेव च। जपो
होमस्तथा ध्यानं यत्किंचित्सुकृतं भवेत् ॥ ८३ ॥ ब्रह्मचर्यं यजन्ते वै गुरुभक्ताः शतं समाः। एवमादीनि सद्यस्तां स्नात्वा प्राप्नोति सत्फलम् ॥ ८४ ॥
कुमारधारा तत्रैव दृष्टा पापप्रणाशनी। यानासनं च तत्रैव सद्यः स्याद्यत् प्रदृश्यते ॥ ८५ ॥ शैलकीर्त्तिपुराभ्याशे कामानाप्नोति पुष्कलान्। अदृश्यः
सर्वभूतानां देववच्चरते महीम् ॥ ८६ ॥ काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम्। तत्र श्राद्धानि देयानि नित्यमक्षयमिच्छता ॥ ८७ ॥ अक्षयं तु
भवेच्छ्राद्धं शालग्रामसमन्ततः। दृष्ट्वा न दृश्यते तत्र प्रत्यक्षमकृतात्मना ॥ ८८ ॥ प्रत्यादेशो ह्यशिष्टानां शिष्टानां च निवेशनम्। तत्र चैव ह्रदे
पुण्ये दिव्यो वै नागराड् यतः ॥ ८९ ॥ पिण्डं गृह्णाति हि सतां न गृह्णात्यसतां हि सः। अतिप्रदीप्तैर्भुजगैर्भोक्तुमन्नं न शक्यते ॥ ९० ॥ प्रत्यक्षं दृश्यते
धर्मस्तीर्थयोरनयोर्द्वयोः। देवदारुवने चापि चारयेत्तं निदर्शनम् ॥ ९१ ॥ विधूतानि तु पापानि दृश्यन्ते सुकृतात्मना। भागीरथ्यां प्रयागे च नित्य
मक्षय्यमुच्यते ॥ ९२ ॥ कालञ्जरे दशार्णायां नैमिषे कुरुजाङ्गले। वाराणस्यां नगर्यां तु देयं श्राद्धं तु यत्नतः ॥ ९३ ॥ तस्यां योगेश्वरो नित्यं
तत्तस्यां दत्तमक्षयम्। दत्त्वा चैतेषु पूतः स्याच्छ्राद्धमानन्त्यमेव च ॥९४॥ तपो होमस्तथा ध्यानं यत् किंञ्चित्सुकृतं भवेत्। लौहित्ये वैतरण्यां वै
स्वर्णवेद्यां तथैव च ॥ ९५ ॥ सकृदेव समुद्रान्ते दृश्यते पुण्यकर्मभिः। गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ॥ ९६ ॥ गयायां गृध्रकूटे च श्राद्धं
दत्तं महाफलम्। हिमश्च पतते तत्र समन्तात् पञ्चयोजनम् ॥ ९७ ॥ भरतस्याश्रमे पुण्येऽरण्यं पुण्यतमं स्मृतम्। मतङ्गस्य पदं तत्र दृश्यते मांस
चक्षुषा ॥ ९८ ॥ ख्यापितं धर्म्मसर्वस्वं लोकस्यास्य निदर्शनम्। एवं पञ्चवनं पुण्यं पुण्यकृद्भिर्निषेवितम्। यस्मिन्पाण्डुविशालेति तीर्थं सद्यो
निदर्शनम् ॥ ९९ ॥ तुलामानैस्तथा चापैः शास्त्रैश्च विविधैस्तथा। उन्मज्जन्ति तथा लग्ने ये वै पापकृतो जनाः ॥ १०० ॥ तृतीयायां तथा पादे
निःस्वरे पावमण्डले। महाह्रदे वै कौशिक्यां दत्तं श्राद्धं महाफलम् ॥ १०१ ॥ मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता। बहून्देवयुगांस्तप्त्वा तपस्तीव्रं
सुदुश्चरम् ॥ १०२ ॥ अल्पेनाप्यत्र कालेन नरो धर्म्मपरायणः। पाप्मानमुत्सृजत्याशु जीर्णत्वचमिवोरगः ॥ १०३ ॥ सिद्धानां प्रीतिजननैः पापा
नाश्च भयङ्करैः। लेलिहानैर्महाभोगै रक्षितन्तु दिवानिशम् ॥ १०४ ॥ नाम्ना कनकनन्दीति तीर्थं त्रैलोक्यविश्रुतम्। उदीच्यां मुण्डपृष्ठस्य देवर्षि

गणसेवितम् । तत्र स्नात्वा दिवं यान्ति कामचारा विहङ्गमाः ॥१०५॥ वृत्तं चापि तथा श्राद्धमक्षयं समुदाहृतम् । ऋणैस्त्रिभिस्तदा स्नात्वा निक्षिणोति
नरोत्तमः ॥ १०६ ॥ तीरे तु सरसस्तत्र देवस्यायतनं महत् । आरुह्य तज्जपंस्तत्र सिद्धो याति दिवं ततः ॥ १०७ ॥ उत्तरं मानसं
गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् । तत्र गत्वा पुरश्रेष्ठं दृश्यते महदद्भुतम् ॥ १०८ ॥ तस्मिन्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् । कामान् स
लभते दिव्यान् मोक्षोपायं च नित्यशः ॥ १०९ ॥ मानसे सरसि श्रेष्ठे दृश्यते महदद्भुतम् । दिवश्च्युता महाभागा ह्यन्तरिक्षे विराजते ॥ ११० ॥
गङ्गा त्रिपथगा देवी सोमपादाच्च्युता भुवि । आकाशं दृश्यते तत्र तोरणं सूर्य्यसन्निभम् ॥ १११ ॥ जाम्बूनदमयं दिव्यं स्वर्गद्वारमिवायतम् ।
यतः प्रवर्त्तते भूयः पूर्व्वसागरमन्तिमम् ॥ ११२ ॥ पावनी सर्व्वभूतानां धर्मज्ञानां विशेषतः । चन्द्रभागा च सिन्धुश्च उभौ मानससन्निभौ । सागरं
पश्चिमं याति दिव्यसिन्धुर्नदीवरः ॥ ११३ ॥ पर्व्वतो हिमवान्नाम नानाधातुविभूषितः । योजनानां सहस्राणि आयतोऽशीतिरुच्यते ॥ ११४ ॥
सिद्धचारणसङ्कीर्णः सिद्धचारणसेवितः । तत्र पुष्करिणी रम्या सुषुम्ना नाम विश्रुता ॥ ११५ ॥ दशवर्षसहस्राणि तत्र जातस्तु जीवति । श्राद्धं भवति
चानन्त्यं तस्यां दत्तं महोदयम् । तारयेच्च यदा श्राद्धं दशपूर्व्वान्दशापरान् ॥ ११६ ॥ सर्व्वं पुण्यं हिमवतो गङ्गा पुण्या च सर्व्वतः । समु
द्रगाः समुद्राश्च सर्व्वे पुण्याः समन्ततः ॥ ११७ ॥ एवमादिषु सर्व्वेषु श्राद्धं निर्वर्त्तयेद्बुधः । पूतो भवति स्नात्वा तु दत्त्वा दत्त्वा तथैव च ॥ ११८ ॥
शैलसानुषु तुङ्गेषु कन्दरेषु गुहासु च । उपह्वरनितम्बेषु तथा प्रस्रवणेषु च ॥ ११९ ॥ पुलिनेष्वापगानां च तथैव प्रभवे युगे । महोदधौ गवां
गोष्ठे सङ्गमेषु वनेषु च ॥ १२० ॥ असंसृष्टोपलिप्तासु हृद्यासु सुरभीषु च । गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च ॥ १२१ ॥ कुर्य्याच्छ्रा
द्धमथैतेषु नित्यमेव यथाविधि । प्रदक्षिणं दिशं गत्वा सर्व्वकामचिकीर्षवः ॥ १२२ ॥ एवमेतेषु सर्व्वेषु श्राद्धं कुर्य्यादतन्द्रितः । एवमेव तु
मेधावी ब्राह्मीं सिद्धिमवाप्नुयात् ॥ १२३ ॥ त्रैवर्ण्ये विहिते स्थाने धर्म्मवर्णाश्रमे तथा । कोपस्थानस्य संत्यागात्प्राप्यते पितृपूजनम् ॥ १२४ ॥
तीर्थान्यनुसरन् धीरः श्रद्दधानो जितेन्द्रियः । कृतपापश्च शुद्ध्येत किं पुनः शुभकर्म्मकृत् ॥ १२५ ॥ तिर्य्यग्योनिं न गच्छेच्च कुदेशे न च जायते ।
स्वर्गी भवति वै विप्रो मोक्षोपायं च विन्दति ॥१२६॥ अश्रद्दधानाः पाप्मानो नास्तिकाः स्थितसंशयाः । हेतुद्रष्टा च पञ्चैते न तीर्थफलमश्नुते ॥१२७॥
गुरुतीर्थे परा सिद्धिस्तीर्थानां परमं पदम् । ध्यानं तीर्थपरं तस्माद्ब्रह्मतीर्थं सनातनम् ॥ १२८ ॥ उपवासात्परं ध्यानमिन्द्रियाणां निवर्त्तनम् ।
उपवासनिबद्धा हि प्राणैरिह पुनः पुनः ॥ १२९ ॥ प्राणापानौ समौ कृत्वा विषयाणीन्द्रियाणि च । बुद्धिं मनसि संयम्य सर्व्वेषां तु निवर्त्तनम्॥१३०॥

प्रत्याहारं पुनर्विद्धि मोक्षोपायमसंशयम् । इन्द्रियाणां मनो घोरं बुद्ध्यादीनां प्रवर्त्तनम् ॥ १२१ ॥ अनाहारात्क्षयं याति विद्यादनशनं तपः ।
निग्रहाद्बुद्धिमनसो रम्या बुद्धिस्तु जायते ॥ १२२ ॥ क्षीणेषु सर्व्वपापेषु क्षीणेष्वेवेन्द्रियेषु च । परिनिर्वाति शुद्धात्मा यथा वह्निर्निरिन्धनः ॥ १२३ ॥
कारणेभ्यो गुणेभ्योऽथ व्यक्ताव्यक्तस्य कृत्स्नशः । वियोजयति क्षेत्रज्ञं तेभ्यो योगेन योगवित् ॥ १२४ ॥ तस्य नास्ति गतिस्थानं व्यक्ताव्यक्तं न
संशयः । आसन्नः सदसन्नैव नैव किञ्चित् स्थित इति ॥ १२५ ॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे तीर्थयात्रा नाम पञ्चदशोऽध्यायः ॥
॥ १५ ॥ ७ ॥ बृहस्पतिरुवाच ॥ अतः परं प्रवक्ष्यामि दानानि च फलानि च । श्राद्धकर्म्माणि मेध्यानि वर्जनीयानि यानि च ॥१॥ हिमप्रपतने कुर्य्या
दाहरेद्वा हिमन्ततः । अग्निहोत्रमतः पुण्यं परमं हि ततः स्मृतम् ॥ २ ॥ नक्तन्तु वर्जयेच्छ्राद्धं राहोरन्यत्र दर्शनात् । सर्व्वस्वेनापि कर्त्तव्यं क्षिप्रं वै
राहुदर्शने ॥ ३ ॥ उपरागे न कुर्य्याद्यः पङ्के गौरिव सीदति । कुर्वाणस्तूद्धरेत्पापान्मग्नान्नौरिव सागरे ॥ ४ ॥ विश्वदेवञ्च सौम्यञ्च बहुमांसपरं हविः ।
विषाणं वर्जयेत्खाड्गमसूयानाशनाय वै ॥ ५ ॥ त्वष्टा वै वार्य्यमाणस्तु देवेशेन महात्मना । पिबञ्छचीपतेः सोमं पृथिव्यामपतत्पुरा ॥ ६ ॥
श्यामाकास्तु तथोत्पन्नाः पित्रर्थमपि पूजिताः । विप्रुषस्तस्य नासाभ्यामसक्ताभ्यां तथैव च ॥ ७ ॥ श्लेष्माणः शीतला हृद्या मधुराश्च तथेक्षवः ।
श्यामाकैरिक्षुभिश्चैव पितॄणां सार्व्वकामिकम् । कुर्य्यादाग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयात् ॥ ८ ॥ श्यामाका हस्तिनामा च पटोलं बृहतीफलम् ।
अगस्त्यस्य शिखा तीव्रा कषायाः सर्व्व एव च ॥ ९ ॥ एवमादीनि चान्यानि स्वादूनि मधुराणि च । नागरं चात्र वै देयं दीर्घमूलकमेव च ॥ १० ॥
वंशीकरीराः सुरसाः सर्जकं भूस्तृणानि च । वर्जनीयानि वक्ष्यामि श्राद्धकर्म्मणि नित्यशः ॥ ११ ॥ लशुनं गृञ्जनञ्चैव पलाण्डुः पिण्डमूलकम् । कर
म्भाद्यानि चान्यानि हीनानि रसगन्धतः ॥ १२ ॥ श्राद्धकर्म्मणि वर्ज्यानि कारणञ्चात्र वक्ष्यते । पुरा देवासुरे युद्धे निर्जितस्य बलेः सुरैः ॥ १३ ॥
व्रणेभ्यो विस्फुरन्तो वै पतिता रक्तबिन्दवः । तत एतानि वर्ज्यानि श्राद्धकर्म्मणि नित्यशः ॥ १४ ॥ अथ वेदोक्तनिर्यासान् लवणान्यूषरणानि च । श्राद्ध
कर्म्मणि वर्ज्यानि याश्च नार्यो रजस्वलाः ॥ १५ ॥ दुर्गन्धं फेनिलं चैव तथा वै पल्वलोदकम् । न लभेद्यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते ॥ १६ ॥
आविकं मार्गमौष्ट्रं च सर्व्वमेकशफं च यत् । माहिषञ्चामरञ्चैव पयो वर्ज्यं विजानता ॥ १७ ॥ अतः परं प्रवक्ष्यामि वर्ज्यान् देशान् प्रयत्नतः । न द्रष्टव्यं
च यैः श्राद्धं शौचाशौचं च कृत्स्नशः ॥ १८ ॥ वन्यमूलफलाहारैः श्राद्धं कुर्य्यात्तु श्रद्धया । राज्यमिष्टमवाप्नोति स्वर्गं मोक्षं यशस्करम् ॥ १९ ॥ अनिष्ट
शब्दसङ्कीर्णं जन्तुव्याप्तमथापि वा । पूतिगन्धां तथा भूमिं श्राद्धकर्म्मणि वर्जयेत् ॥ २० ॥ नद्यः सागरपर्य्यन्ता द्वारं दक्षिणपूर्व्वतः । त्रिशङ्कुं वर्जयेद्

देशं सर्व्वं द्वादशयोजनम् ॥ २१ ॥ उत्तरेण महानद्या दक्षिणेन च कैकटात् । देशस्त्रैशङ्कवो नाम वर्जितः श्राद्धकर्म्मणि ॥ २२ ॥ कारङ्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च । प्रनष्टाश्रमधर्म्मांश्च वर्ज्या देशाः प्रयत्नतः ॥ २३ ॥ नग्नादयो न पश्येयुः श्राद्धमेव व्यवस्थितम् । गच्छन्ति तैस्तैर्दृष्टानि न पितॄन्न पितामहान् ॥ २४ ॥ शंयुरुवाच ॥ नग्नादीन् भगवन् सम्यङ्ममाद्य परिपृच्छतः । कथय द्विजमुख्याग्र विस्तरेण यथातथम् ॥ २५ ॥ एवमुक्तो महातेजा बृहस्पतिरुवाच तम् । सर्वेषामेव भूतानां त्रयीसंवरणं स्मृतम् ॥ २६ ॥ परित्यजति यो मोहात्ते वै नग्ना द्विजोत्तमाः । प्रलीयते नरो यः स्यान्निरालम्बश्च यो वृषः ॥ २७ ॥ वृषं यश्च परित्यज्य मोक्षमन्यत्र मार्गति । वृषो वेदसमस्तास्मिन् यो वै सम्यङ्न पश्यति ॥ २८ ॥ ब्राह्मणाः क्षत्रिया वैश्या वृषलाश्चैव सर्वशः । पुरा देवासुरे युद्धे निर्जितैरसुरैस्तदा ॥ २९ ॥ पाषण्डवैकृतस्थाने नैषा सृष्टिः स्वयम्भुवा । द्विश्राद्धकश्च निर्ग्रन्थाः शाक्या पुष्टिकलंशकाः ॥ ३० ॥ ये धर्म्मं नानुवर्त्तन्ते ते वै नग्नादयो जनाः । वृथाजटी वृथामुद्री वृथानग्नश्च यो द्विजः ॥ ३१ ॥ वृथाव्रती वृथा जापी ते वै नग्नादयो जनाः । कुलन्धमा निषादाश्च तथा पुष्टिविनाशकाः ॥ ३२ ॥ कृतकर्म्माक्षितास्त्वेते कुपथाः परिकीर्त्तिताः । एभिर्निर्वृत्तं दृष्टं वा श्राद्धं गच्छन्ति मानवाः ॥ ३३ ॥ ब्रह्मघ्नश्च कृतघ्नश्च नास्तिका गुरुतल्पगाः । दस्यवश्च नृशंसाश्च दर्शनेनैव वर्जिताः ॥ ३४ ॥ ये चान्ये पापकर्म्माणः सर्व्वांस्तान् परिवर्जयेत् । देवदेवर्षिनिन्दायां रतांश्चैव विशेषतः ॥३५॥ असुरान् यातुधानांश्च दृष्टमेभिर्व्रजन्त्युत । ब्राह्मं कृतयुगं प्रोक्तं त्रेता तु क्षत्रियं स्मृतम् ॥ ३६ ॥ वैश्यं द्वापरमित्याहुः शूद्रं कलियुगं स्मृतम् ॥ पितर ऊचुः ॥ वेदाः कृतयुगे पूज्यास्त्रेतायां तु सुरास्तथा ॥३७॥ युद्धानि द्वापरे नित्यं पाषण्डाश्च कलौ युगे । अपमानापवित्रश्च कुक्कुटो ग्रामसूकरः॥३८॥ श्वा चैव दर्शनादेव हन्ति श्राद्धं न संशयः। शावसूतकसंस्पृष्टो दीर्घरोगिभिरेव च॥३९॥मलिनैः पतितैश्चैव न द्रष्टव्यं कथञ्चन । अन्नं पश्येयुरेते वै नैतत्स्याद्धव्यकव्ययोः॥४०॥तत्संस्पृष्टं प्रधानार्थं संस्कारश्चापदो भवेत् । हविषां संहतानां तु पूर्व्वमेव विवर्जितम् । मृत्संयुक्ताभिरद्भिश्च प्रोक्षणं च विधीयते ॥४१॥ सिद्धार्थकैः कृष्णतिलैः कार्य्यं वाप्यवकीरणम् । गुरुसूर्य्याग्निवस्तूनां दर्शनं वापि यत्नतः ॥ ४२ ॥ आसनारूढमानेषु पादोपहतमेव च । अमेध्यैर्जङ्गमैर्दृष्टं शुष्कं पर्युषितं च यत् ॥ ४३ ॥ असितं परिदुष्टं च तथैवाग्रावलेहितम् । शर्कराकेशपाषाणैः कीटैर्यच्चाप्युपद्रुतम् ॥ ४४ ॥ पिण्याकमथितं चैव तथा तिलयवादिषु । सिद्धाक्षताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः ॥ ४५ ॥ वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि । सन्ति वेदविरोधेन केचिद्विज्ञानमानिनः ॥ ४६ ॥ अजज्ञपतयो नाम ते श्राद्धस्य यथा रजः । दधि शाकं तथाऽभक्ष्याः शुक्तं चैव विवर्जितम् ॥ ४७ ॥ वार्ताकुं वर्जयेद्द्यात्सर्वानभिषवानपि । सैन्धवं लवणं यच्च तथा मानससम्भवम् ॥ ४८ ॥ पवित्रं

परमं ह्येतत् प्रत्यक्षमपि वर्त्तते । अग्नौ निक्षिप्य बध्नीयाद्धस्तौ प्रक्षिप्य यत्नतः ॥ ४९ ॥ गमयेन्मस्तकं चैव ब्रह्मतीर्थं हि तत्स्मृतम् । द्र
प्रोक्षणं कार्य्यं तथैवावपनं पुनः ॥ ५० ॥ निधाय चाद्भिः सिञ्चेत तथैवाप्सु निवेशनम् । अरिष्टतुमुले बिल्वं त्विङ्गुदश्चदनान्यपि ॥ ५१ ॥ विदल
सर्व्वेषां धर्म्मवच्छौचमिष्यते । तथा दन्तास्थिदारूणां शृङ्गाणाञ्चावलेखनम् ॥ ५२ ॥ सर्वेषां मृन्मयानान्तु पुनर्दाह उदाहृतः । मणिव
लानां मुक्ताशङ्खमणेस्तथा ॥ ५३ ॥ सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः । स्याच्छौचं सर्ववालानामाविकानाञ्च सर्वशः ॥ ५४ ॥
कानाञ्च सर्व्वेषां मृद्भिरद्भिर्विधीयते । आद्यन्तयोस्तु शौचानामद्भिः प्रक्षालनं पुनः ॥ ५५ ॥ तथा कार्प्पासिकानाञ्च भस्मना समुदाहृतम् । फ
शलाकानां प्लावनञ्चाद्भिरिष्यते ॥ ५६ ॥ संमार्जनं प्रोक्षणञ्च भूमेश्चैवोपलेपनम् । निष्क्रम्य वाह्यतो ग्रामाद्वायुपूता वसुन्धरा ॥ ५७ ॥ धनुष्प्र
णाञ्चैव मृद्भिः शौचं विधीयते । एवमेष समुद्दिष्टः शौचानां विधिरुत्तमः । अतः परं प्रवक्ष्यामि तन्मे निगदतः शृणु ॥ ५८ ॥ प्रातर्गृहात्प
क्षिणेन इषुक्षेपश्चाक्षमात्रं पदञ्च । कुर्य्यात्पुरीषं शिरोवगुण्ठ्य न च स्पृशेत्तत्र शिरः करेण ॥ ५९ ॥ शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा । मृन्म
नैर्वापि तिरोधाय वसुन्धराम् ॥ ६० ॥ उद्धृतोदकमादाय मृत्तिकाश्चैव वाग्यतः । दिवा उदङ्मुखः कुर्य्याद्रात्रौ वै दक्षिणामुखः ॥ ६१ ॥ दक्षि
हस्तेन गृह्णीयाद्वै कमण्डलुम् । शौचञ्च वामहस्तेन गुदे तिस्रस्तु मृत्तिकाः ॥ ६२ ॥ दश चापि पुनर्दद्याद्वामहस्तक्रमेण तु । द्वाभ्यां वापि
द्याद्धस्तानां पञ्च मृत्तिकाः ॥ ६३ ॥ मृदा प्रक्षाल्य पादौ च आचम्य च यथाविधि । आपस्त्याज्याग्रयश्चैव सूर्य्याग्निपवनाम्भसाम् ॥ ६४ ॥ कु
सन्निहितं नित्यं प्राज्ञस्तीर्थे कमण्डलुम् । असत्कार्यं कार्यमेतैर्यथावत्पादधावनम् ॥ ६५ ॥ आचमनं द्वितीयेन देवकार्यं ततः परम् । उ
त्रिरात्रन्तु दुष्टहस्ते ह्युदाहृतः ॥ ६६ ॥ विप्रकृष्टेन कृच्छ्रेण प्रायश्चित्तमुदाहृतम् । स्पृष्ट्वा श्वानं श्वपाकं वा तप्तकृच्छ्रं समाचरेत् ॥ ६७ ॥ अ
स्थीनि संस्पृश्य उपोष्यं शुद्धिकारणम् । त्रिरात्रमुक्तं सस्नेहमेकरात्रमतोऽन्यथा ॥ ६८ ॥ कारस्कराः पुलिन्दाश्च तथान्धशबरादय । परि
पोभूतिलये गत्वा चैव युगन्धराम् ॥ ६९ ॥ सिन्धोरुत्तरपर्य्यन्तं तथा दिव्यन्तरे शतम् । पापदेशाश्च ये केचित्पापैरध्युषिता जनैः ॥ ७० ॥ ग
वर्जिता ये च ब्राह्मणैर्वेदपारगैः । गत्वा देशानपुण्यांस्तु कृत्स्नं पापं समश्नुते ॥ ७१ ॥ मनोव्यक्तिरथाग्निश्च काले चैवोपलेपनम् । विल्य
शौचानां नित्यमज्ञानमेव च ॥ ७२ ॥ अतोन्यथा तु यः कुर्य्यान्मोहाच्छौचस्य सङ्करम् । पिशाचान् यातुधानांश्च फलं गच्छत्यसं
॥ ७३ ॥ शौचमश्रद्दधानश्च म्लेच्छजातिषु जायते । अयज्ञाश्चैव पापो वा तिर्य्यग्योनिगतोऽपि वा ॥ ७४ ॥ शौचेन मोक्षं कुर्वाणः स्वर्गवासी भवे

शुचिकामा हि देवा वै देवैरेतदुदाहृतम् ॥ ७५ ॥ बीभत्समशुचिञ्चैव वर्जयन्ति सुराः सदा। त्रीणि शौचानि कुर्वन्ति न्यायतः शुभकर्मणः
॥ ७६ ॥ ब्रह्मण्यायातिथेयाय शौचयुक्ताय धीमते। पितृभक्ताय दान्ताय सानुक्रोशाय च द्विजाः ॥ ७७ ॥ तैस्तैः प्रीताः प्रयच्छन्ति पितरो
योगवर्द्धनाः। मनसा कांक्षितान् कामांस्त्रैलोक्यप्रभवानिति ॥ ७८ ॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम षोडशोऽध्यायः ॥ १६ ॥छ॥
ऋषय ऊचुः ॥ अहो धीमंस्त्वया सूत श्राद्धकल्पस्तु कीर्तितः। श्रुतो नः श्राद्धकल्पो वै ऋषिभिः परिकीर्तितः ॥ १ ॥ अतीव विस्तरो यस्य
विशेषेण प्रकीर्तितः। वद शेषं महाप्राज्ञ ऋषेस्तस्य यथामतम् ॥ २ ॥ सूत उवाच ॥ कीर्तयिष्यामि ते विप्रा ऋषेस्तस्य मतन्तु तत्। श्राद्धं
प्रति महाभागास्तन्मे शृणुत विस्तरात् ॥ ३ ॥ उक्तं श्राद्धं मया पूर्वं विधिश्च श्राद्धकर्म्मणि। परिशिष्टं प्रवक्ष्यामि ब्राह्मणानां यथाक्रमम् ॥ ४ ॥
न मीमांस्याः सदा विप्राः पवित्रं ह्येतदुत्तमम्। दैवे पित्र्ये च सततं श्रूयते वै परीक्षणम् ॥ ५ ॥ यस्मिन् दोषाः प्रदृश्येरन् सद्भिर्वा वर्जितस्तु यः।
जानीयाद्वापि संवासाद्वर्जयेत्तं प्रयत्नतः ॥ ६ ॥ अविज्ञातं द्विजं श्राद्धे परीक्षेत सदा बुधः। सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमाम् ॥ ७ ॥
तस्मादतिथिमायान्तमभिगच्छेत् कृताञ्जलिः। पूजयेच्चापि पाद्येन पादाभ्यञ्जनभोजनैः ॥ ८ ॥ उर्वीं सागरपर्यन्तां देवा योगेश्वरास्तथा। नाना
रूपैश्चरन्त्येते प्रजा धर्म्मेण पालयन् ॥ ९ ॥ अर्चयित्वा ततो दद्याद्विप्रायातिथये नरः। व्यञ्जनानि च भक्ष्याणि फलं तेषां तथैव च ॥ १० ॥
अग्निष्टोमं तु पयसा प्राप्नुयाच्छ्राद्धे तथाश्रुतम्। सर्पिषा तु शुभं चक्षुः षोडशाहफलं लभेत्। मधुना त्वतिरात्रस्य फलं च समवाप्नुयात् ॥ ११ ॥ तत्प्रा
प्नुयाच्छ्रद्दधानो नरो वै सर्वैः कामैर्भोजयेद्यस्तु विप्रान्। सर्वार्थदः सर्वविप्रातिथौ यः फलं भुङ्क्ते सर्वमेधस्य नित्यम् ॥ १२ ॥ यस्तु श्राद्धेऽतिथिं
प्राप्य दैवे वाप्यवमन्यते। तं वै देवा वि ष्यन्ति होता यद्वत् परां वसुम् ॥ १३ ॥ देवाश्च पितरश्चैव वह्निश्चैव हि तान् द्विजान्। आविश्य भुञ्जते तद्वै
लोकानुग्रहकारणात् ॥ १४ ॥ अपूजिता दहन्त्येते दद्युः कामांश्च पूजिताः। सर्वस्वेनापि तस्माद्वै पूजयेदतिथीन् सदा ॥ १५ ॥ वानप्रस्थो गृहस्थश्च
गृहमभ्यागतोऽथवा। बालाः खिन्ना यतिश्चैव जानीयादतिथीन् सदा ॥ १६ ॥ अभ्यागतो याचकः स्यादतिथिः स्यादयाचकः। अतिथेरतिथिः श्रेष्ठः
सोऽतिथिर्योग उच्यते ॥ १७ ॥ न घोरो नापि सङ्कीर्णो नाविद्यो न विशेषवित्। न च सन्तो न समृद्धो न सेवी नाचरोऽतिथिः ॥ १८ ॥ पिपासिताय
श्रान्ताय भ्रान्तायातिबुभुक्षते। तस्मै सत्कृत्य दातव्यं यज्ञस्य फलमिच्छता ॥ १९ ॥ आरुह्य भृगुतुङ्गेषु गत्वा पुण्यां सरस्वतीम्। आपगां तु नदीं
पुण्यां गङ्गां देवीं महानदीं ॥ २० ॥ हिमवत्प्रभवा नद्यो याश्चान्या ऋषिपूजिताः। सरस्तीर्थाभिसंवेद्या नदी नववहास्तथा ॥ २१ ॥ गत्वैतान् मुच्यते

पापैः स्वर्गे नित्यं महीयते। दशरात्रमशौचन्तु प्रोक्तं वै मृतसूतके ॥ २२ ॥ ब्राह्मणस्य विशेषेण क्षत्रिये द्वादश स्मृतम्। अर्द्धं मासन्तु वैश्यस्य मासाच्छूद्रस्तु शुध्यति ॥ २३ ॥ उदक्या सर्ववर्णानां त्रिरात्रेण तु शुद्धयति। उदक्यां सूतिकाञ्चैव श्वानमन्त्यावसायिनम् ॥ २४ ॥ नग्नादीन् मृतहारांश्च स्पृष्ट्वाऽशौचं विधीयते। स्नात्वा सचैलो मृद्भिस्तु द्वादशभिस्तु शुध्यति ॥ २५ ॥ एतदेव भवेच्छौचं मैथुने नवभिस्तथा। मृदा प्रक्षाल्य हस्तौ तु कुर्याच्छौचविधिन्नरः ॥ २६ ॥ प्रक्षाल्य चाद्भिर्हस्तौ च स्नात्वा चैव मृदा पुनः। मृदं गुह्ये ततो द्विस्तु पुनरेव मृदं बुधः ॥ २७ ॥ एवं शौचविधिर्दृष्टः सर्ववर्णेषु नित्यदा। परिदद्यान्मृदस्तिस्रो हस्तपादावसेचनम् ॥ २८ ॥ आरण्यं शौचमेतत्तु ग्राम्यं वक्ष्याम्यतः परम्। मृदास्तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च ॥ २९ ॥ मृदः पञ्चदशामेध्ये हस्तादीनां विभागशः। अनिर्णिक्ते मृदं दद्यान्मृदन्ते त्वद्भिरेव तु ॥ ३० ॥ कण्ठं शिरो वा प्रावृत्य रथ्या पादगतस्तु वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥३१॥ प्रक्षाल्य पात्रं निःक्षिप्य आचम्याभ्युक्षणं पुनः। द्रव्यस्यान्यस्य तु तथा कुर्यादभ्युक्षणं पुनः ॥ ३२ ॥ पुष्पादीनां तृणानाञ्च प्रोक्षणं हविषान्तथा। पराहृतानां द्रव्याणां निधायाभ्युक्षणं तथा ॥ ३३ ॥ प्रोक्षितन्तु हरेत् किञ्चिच्छ्राद्धे दैवे तथा पुनः। उत्तरेण हरेद्वेद्यां दक्षिणेन विसर्जयेत् ॥ ३४ ॥ विच्छिन्नं स्यादिपर्यासे दैवे पित्र्ये तथैव च। दक्षिणेन तु हस्तेन दक्षिणां वेदिमालिखेत् ॥३५॥ कराभ्यामेव देवानां पितॄणां विकरं शुभम्। क्षुभितस्वप्नयोश्चैव तथा मूत्रपुरीषयोः ॥३६॥ निष्ठीविते यथा व्यक्ते भुक्त्वा विपरिधाय च। उच्छिष्टस्य च संस्पर्शे तथा पादावसेचने ॥३७॥ उत्सृष्टस्य सुसम्भाषे ह्यशुचिं प्रयतस्य च। सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च ॥ ३८ ॥ विना यज्ञोपवीतेन मोहात्तु यद्युपस्पृशेत्। ओष्ठस्य दन्तसंस्पर्शे दर्शने चान्त्यवासिनाम् ॥३९॥ जिह्वया चैव संस्पृश्य दन्तासक्तं तथैव च। सशब्दमङ्गुलीभिश्च प्रणतश्चावलोकयन् ॥४०॥ यश्चाधर्मे स्थितो मोहादाचान्तोऽप्यशुचिर्भवेत्। उपविश्य शुचौ देशे प्रणतः प्रागुदङ्मुखः ॥४१॥ पादौ प्रक्षाल्य हस्तौ तु अन्तर्जानुरुपस्पृशेत्। प्रसन्नास्त्रिः पिबेच्चापः प्रयतः सुसमाहितः ॥ ४२ ॥ द्विरेव मार्जनं कुर्यात्सकृदभ्युक्षणं ततः। खानि मूर्द्धानमात्मानं हस्तौ पादौ तथैव च॥४३॥ अभ्युक्षणं तथा तस्य यद्यमीमांसितं भवेत्। एवमाचमनं तस्य वेदा यज्ञास्तपांसि च ॥ ४४ ॥ दानानि ब्रह्मचर्यञ्च भवन्ति सफलास्तथा। क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः ॥ ४५ ॥ भवन्ति च वृथा तस्य क्रिया ह्येता न संशयः। वाग्भावशुद्धनिर्णिक्तमदुष्टं वाप्यानिन्दितम् ॥४६॥ मेध्यान्येतानि ज्ञेयानि दुष्टेभ्यो विपर्ययः। न वक्तव्यः सदा विप्रः क्षुधितो नास्ति किञ्चन ॥ ४७ ॥ तस्मै सत्कृत्य यो दद्यादयूपो यज्ञ उच्यते। अभ्युत्थानं श्रुतान्नन्तु कृशवृत्तिमयाचकम् ॥ ४८ ॥ एकान्तशीलं ह्रीमन्तं सदा श्राद्धेषु भोजयेत्। यो ददात्यान्तिमेभ्यश्च स ब्रह्मघ्नो दुरात्मवान् ॥४९॥

अपि जातिशतं गत्वा न स मुच्येत किल्बिषात् । विषमं भोजयेद्विप्रानेकपंक्त्या च यो नरः ॥ ५०॥ नियुक्तो वाऽनियुक्तो वा पंक्त्या हरति दुष्कृतम् ।
पापेन गृह्यते क्षिप्रमिष्टापूर्त्तं च नश्यति ॥ ५१ ॥ यतिस्तु सर्व्वविप्राणां सर्व्वेषामग्र्य उत्सवे । इतिहासपञ्चमान् वेदान् यः पठेत्तु द्विजोत्तमः ॥ ५२ ॥
अनन्तरं यथायोग्यं नियोक्तव्यो विजानता । त्रिवेदोऽनन्तरस्तस्य द्विवेदस्तदनन्तरः ॥ ५३ ॥ एकवेदस्तथा पश्चान्नयायाध्यायी ततः परम् । पाव
नायैव पंक्त्या वै तान् प्रवक्ष्ये निबोधत ॥ ५४ ॥ य एते पूर्व्वनिर्दिष्टाः सर्व्वे ते ह्यनुपूर्व्वशः । षडङ्गी विनयी योगी सर्व्वतन्त्रस्तथैव च ॥ ५५ ॥
यायावरश्च पञ्चैते विज्ञेयाः पङ्क्तिपावनाः । अष्टादशानां विद्यानामेकस्मिन् पारगोऽपि यः ॥ ५६ ॥ यथावद्वर्त्तमानश्च सर्वे ते पङ्क्तिपावनाः । त्रिणा
चिकेतास्त्रैविद्यो यश्च धर्म्मान् पठेद्द्विजः ॥ ५७ ॥ बार्हस्पत्ये तथा शास्त्रे पारं यश्च द्विजो गतः । सर्वे ते पावना विप्राः पङ्क्तीनां समुदाहृताः ॥ ५८ ॥
आमन्त्रितस्तु यः श्राद्धे योषितं सेवते द्विजः । पितरस्तस्य तं मासं तस्य रेतसि शेरते ॥ ५९ ॥ श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं यो निषेवते । पितर
स्तस्य तं मासं रेतःस्था नात्र संशयः ॥ ६० ॥ तस्मादतिथये देयं भोजयेद्ब्रह्मचारिणम् । ध्याननिष्ठाय दातव्यं सानुक्रोशाय धार्मिकम् ॥ ६१ ॥
यतिं वा वालखिल्यान् वा भोजयेच्छ्राद्धकर्म्मणि । वानप्रस्थोपकुर्व्वाणः पूजामात्रेण तोषितः ॥ ६२ ॥ गृहस्थं भोजयेद्यस्तु विश्वेदेवास्तु पूजिताः ।
वानप्रस्थेन ऋषयो वालखिल्यैः पुरन्दरः ॥ ६३ ॥ यतीनां पूजने चापि साक्षाद्ब्रह्मा तु पूजितः । आश्रमाः पावनाः पञ्च उपधाभिरनाश्रमाः ॥ ६४ ॥
चत्वार आश्रमाः पूज्याः श्राद्धे दैवे तथैव च । चतुराश्रमबाह्येभ्यः श्राद्धं नैव प्रदापयेत् ॥ ६५ ॥ स तिष्ठेद्वा वुभुक्षुस्तु चतुराश्रमवाह्यतः । अयति
मोक्षवादी च उभौ तौ पङ्क्तिदूषकौ ॥ ६६ ॥ वृथामुण्डाश्च जटिलाः सर्वे कार्प्पटिकास्तथा । निर्घृणान् भिन्नवृत्तांश्च सर्वभक्षान् विवर्जयेत् ॥ ६७ ॥
कारुकादीननाचारान् सर्ववेदबहिष्कृतान् । गायनान् देववृत्तांश्च हव्यकव्येषु वर्जयेत् ॥ ६८ ॥ द्विजेष्वपि कृतं नित्यं श्राद्धकर्म्मणि वर्जयेत् ॥ ६९ ॥
एतेषु वर्त्तते यश्च कृत्स्नवर्णं स गच्छति । योऽश्नाति सह शूद्रेण सर्वे ते पङ्क्तिदूषकाः ॥७०॥ व्यापादनं शक्तिनिवर्हणं कृषिवाणिज्यकार्य्यं पशुपालनं
च । शुश्रूषणं वाप्यगुरो रहो वा कार्य्यं नैतद्विद्यते ब्राह्मणस्य ॥ ७१ ॥ ये तु विप्राः स्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा । मिथ्यासङ्कल्पिनः
सर्वे दुर्वृत्ता वा द्विजातयः ॥ ७२ ॥ मिथ्यातत्त्वविदो वर्ज्ज्यास्तथा दम्भविषूचकाः । उपपातकसंयुक्ताः पातकैश्च विशेषतः ॥ ७३ ॥ वेदे
नियोगदातारो लोभमोहफलार्थिनः । ब्रह्मविक्रयिणश्चैव श्राद्धकर्म्माणि वर्जिताः ॥ ७४ ॥ न नियोगोऽस्ति वेदानां यो नियुङ्क्ते स पापकृत् । भोक्ता
वेदफलाद्भ्रश्येद्दाता दानफलात्तथा ॥ ७५ ॥ भृतोऽध्यापयते यस्तु भृतकाध्यापितस्तु यः । नार्हतस्तावपि श्राद्धं ब्रह्मणः क्रियविक्रयी ॥ ७६ ॥

क्रयविक्रयिणो चैव जीवितार्थं विगर्हितौ । वृत्तिरेषा तु वैश्यस्य ब्राह्मणस्य तु पातकम् ॥ ७७ ॥ प्रादुर्वेदान् वेदविदो वेदान् यश्चोपजीवति ॥
उभौ तौ नार्हतः श्राद्धं पुत्रिकापतिरेव च ॥७८॥ वृथा दारांश्च यो गच्छेद्यो यजेत वृथाध्वरे । नार्हतस्तावपि श्राद्धं द्विजो यश्चैव नास्तिकः ॥ ७९ ॥
आत्मार्थं यः पचेदन्नं न देवातिथिकारकः । नार्हतस्तावपि श्राद्धं पतितौ ब्रह्मराक्षसौ ॥ ८० ॥ स्त्रियो नक्तंपरा येषां परदाररताश्च ये । अर्थकाम
रताश्चैव न तान् श्राद्धेषु भोजयेत् ॥ ८१ ॥ वर्णाश्रमाणां धर्म्मेषु विरुद्धाः श्राद्धकर्म्मणि । स्तेनश्च सर्वयाजी च सर्वे ते पङ्क्तिदूषकाः ॥ ८२ ॥
यश्च सूकरवद्भुङ्क्ते यश्च पाणितले द्विजः । न तदश्नन्ति पितरो यश्च वामं समश्नुते ॥ ८३ ॥ स्त्रीशूद्रायानुपेताय श्राद्धोच्छिष्टं न दापयेत । यो दद्या
द्रागमोहात्तु न तद्गच्छेतिपितॄन्सदा ॥ ८४ ॥ तस्मान्न देयमुच्छिष्टमन्नाद्यं श्राद्धकर्म्मणि । अन्यत्र दधिसर्पिर्भ्यां शिष्ये पुत्राय नान्यथा ॥ ८५ ॥
अनुच्छिष्टन्तु दातव्यमन्नाद्यं वै विशेषतः । पुष्पमूलफलैर्वापि तुष्टिं गच्छन्ति चान्नतः ॥ ८६ ॥ यावन्त्यन्नानि पूतानि यावदुष्णं न मुञ्चति ।
तावदश्नन्ति पितरो यावदश्नन्ति वाग्यताः ॥ ८७ ॥ दानं प्रतिग्रहो होमो भोजनं बलिरेव च । साङ्गुष्ठेन तथा कार्य्यं नासुरेभ्यो यथा भवेत् ॥ ८८ ॥
एतान्येव च सर्व्वाणि दानादीनि विशेषतः । अन्तर्जान्वविशेषेण तद्वदाचमनं भवेत् ॥ ८९ ॥ मुण्डाञ्जटिलकाषायान् श्राद्धकालेऽपि वर्जयेत् ।
शिखिभ्यो वा त्रिदण्डिभ्यः श्राद्धं यत्नात् प्रदापयेत् ॥ ९० ॥ ये तु व्रते स्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा । देवभक्ता महात्मानः पुनीयुर्दर्शना
दपि ॥ ९१ ॥ सर्व्वं योगेश्वरैर्व्याप्तं त्रैलोक्यं वै निरन्तरम् । तस्मात् पश्यन्ति ते सर्वं यत्किञ्चिज्जगतीगतम् ॥ ९२ ॥ व्यक्ताव्यक्तं वशीकृत्य
सर्व्वस्यापि च यत्परम् । सदसच्चेति यद्दृष्टं सदसच्च महात्मनाम् ॥ ९३ ॥ सर्व्वज्ञानानि दृष्टानि मोक्षादीनि महात्मनाम् । तस्मात्तेषु
सदासक्तः प्राप्नोत्यनुत्तमं शुभम् ॥ ९४ ॥ ऋचो हि यो वेद स वेद वेदान् यजूंषि यो वेद स वेद यज्ञम् । सामानि यो वेद स वेद ब्रह्म यो
मानसं वेद स वेद सर्व्वम् ॥ ९५ ॥ ॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे ब्राह्मणपरीक्षा नाम सप्तदशोऽध्यायः ॥ १७ ॥ ७ ॥
बृहस्पतिरुवाच ॥ अतः परं प्रवक्ष्यामि दानानि च फलानि च । तारणं सर्व्वभूतानां स्वर्गमार्गं सुखावहम् ॥ १ ॥ लोके श्रेष्ठतमं स्वर्ग्यमात्मन
श्चापि यत् प्रियम् । सर्व्वं पितॄणां दातव्यं तेषामेवाक्षयार्थिना ॥ २ ॥ जाम्बूनदमयं दिव्यं विमानं सूर्य्यसन्निभम् । दिव्याप्सरोभिः सङ्कीर्णमन्नदो लभते
फलम् ॥ ३ ॥ आच्छादनन्तु यो दद्यादहतं श्राद्धकर्म्मणि । आयुः प्रकाममैश्वर्य्यं रूपञ्च लभते सुतम् ॥ ४ ॥ उपवीतन्तु यो दद्याच्छ्राद्धकालेषु धर्म
वित् । पानञ्च सर्वविप्राणां ब्रह्मदानस्य यत् फलम् ॥ ५ ॥ कृतं विप्रेषु यो दद्याच्छ्राद्धकाले कमण्डलुम् । मधुक्षीरस्रवा धेनुर्दातारमुपातिष्ठति ॥ ६ ॥

चक्राविद्धं तु यो दद्याच्छ्राद्धकाले कमण्डलुम् । धेनुं स लभते दिव्यां पयोदां काम्यदोहिनीम् ॥ ७॥ पूर्णशय्यां तु यो दद्यात् पुष्पमालाविभूषिताम् । मुक्ता
प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ॥ ८॥ भवनं रत्नसम्पूर्णं सशय्यासनभोजनम् । श्राद्धे दत्त्वा यतिभ्यस्तु नाकपृष्ठे स मोदते ॥ ९ ॥ मुक्ता
वैदूर्य्यवासांसि रत्नानि विविधानि च । वाहनानि च दिव्यानि अयुतान्यर्बुदानि च ॥ १० ॥ सुमहज्ज्वलनप्रख्यं रत्नकामसमन्वितम् । सूर्य्यचन्द्र
प्रभं दिव्यं विमानं लभतेऽक्षयम् ॥ ११ ॥ अप्सरोभिः परिवृतं कामगं तु मनोजवम् । वसते स विमानाग्रे स्तूयमानः समन्ततः ॥ १२ ॥ दिव्यैर्गन्धैः
प्रसिञ्चन्ति पुष्पवृष्टिभिरेव च । गन्धर्वाप्सरसस्तत्र गायन्ते वादयन्ति च ॥ १३ ॥ कन्या युवतयो मुख्याः सहिताश्चाप्सरोगणैः । सुस्वरैस्तं विबुध्यन्ते
सततं हि मनोरमैः ॥ १४ ॥ अश्वदानसहस्रेण रथदानशतेन च । दन्तिनां च सहस्रेण योगिन्या वसते नरः ॥ १५॥ दद्यात् पितृभ्यो योगिभ्यो यस्तु
ज्वलनमम्भसि । अथ निष्कसहस्राणां फलं प्राप्नोति मानवः ॥ १६ ॥ जीवितस्य प्रदानाद्धि नान्यद्दानं विशिष्यते । तस्मात् सर्वप्रयत्नेन देयं प्राणा
भिरक्षणम् ॥ १७ ॥ अहिंसा सर्व्वदेवेभ्यः पवित्रा सर्व्वदायिनी । दानं हि जीवितस्याहुः प्राणिनां परमं बुधाः ॥ १८ ॥ लक्षणानि सुवर्णानि श्राद्धे
पात्राणि दापयेत् । रसास्तमुपतिष्ठन्ति भक्ष्याः सौभाग्यमेव च ॥ १९ ॥ पात्रं वै तैजसं दद्यान्मनोज्ञं श्राद्धभोजने । पात्रं भवति कामानां रूपस्य
च धनस्य च ॥ २० ॥ राजतं काञ्चनं वापि दद्याच्छ्राद्धे तु कर्म्मणि । दत्त्वा तु लभते दाता प्रकामं धर्म्ममेव च ॥ २१ ॥ धेनुं श्राद्धे तु यो दद्याद्दृष्टि
कुम्भोपदोहनाम् । गावस्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ॥ २२ ॥ शिशिरेषु तथा त्वग्निं बहुकाष्ठं तथैव च । इन्धनानि तु यो दद्याद्द्विजेभ्यः शिशि
रागमे ॥ २३ ॥ नित्यं जयति संग्रामे श्रिया युक्तश्च दीप्यते । सुरभीणि च माल्यानि गन्धवन्ति तथैव च ॥ २४ ॥ पूजयित्वा तु पात्राणि श्राद्धे सत्कृत्य
दापयेत् । गन्धवाहा महानद्यः सुखानि विविधानि च ॥ २५ ॥ दातारमुपतिष्ठन्ति युवत्यश्च मनोरमाः । शयनासनानि रम्याणि भूमयो वाहनानि च
॥ २६ ॥ श्राद्धेऽप्येतानि यो दद्यादश्वमेधफलं लभेत् । श्राद्धकाले निवेद्यं च दर्शश्राद्ध उपस्थिते ॥ २७॥ विप्राणां गुणयुक्तानां स्मृतिं मेधां च विन्दति ।
सर्पिष्पूर्णानि पात्राणि श्राद्धे सत्कृत्य दापयेत् ॥२८॥ कुम्भदोहनधेनूनां वह्नीनां च फलं लभेत् । अस्मिंस्तु मोदते लोके स्यन्दनैश्च सुवाहनैः ॥२९॥
श्राद्धे यथेप्सितं दत्त्वा पुण्डरीकस्य यत्फलम् । रम्यमावसथं दत्त्वा राजसूयफलं लभेत् ॥३० ॥ वनं पुष्पफलोपेतं दत्त्वा सौरभमश्नुते । कूपारामतडा
गानि क्षेत्रघोषगृहाणि च ॥ ३१ ॥ दत्त्वैतान् मोदते स्वर्गे नित्यमाचन्द्रतारकम् । आस्तीर्णशयनं दत्त्वा श्राद्धे रत्नविभूषितम् ॥ ३२ ॥ पितरस्तस्य
तुष्यन्ति स्वर्गं चानन्त्यमश्नुते । राजभिः पूज्यते चापि धनधान्यैश्च वर्द्धते ॥ ३३ ॥ ऊर्णाकौशेयवस्त्राणि तथा प्रवरकम्बलौ । अजिनं काञ्चनं पट्टं

प्रवेणी मृगलोमकम् ॥ ३४॥ दानान्येतानि विप्रेभ्यो भोजयित्वा यथाविधि। प्राप्नोति श्रद्दधानस्तु वाजपेयशतं फलम् ॥३५॥ बह्व्यो नार्य्यः सुरूपास्तु पुत्रा भृत्याश्च किङ्कराः। वशे तिष्ठन्ति भूतानि अस्मिँल्लोके त्वनामयम् ॥ ३६ ॥ कौशेयं क्षौमकार्पासं दुकूलसहितं तथा। श्राद्धेष्वेतानि यो दद्यात् कामानाप्नोति पुष्कलान् ॥ ३७ ॥ अलक्ष्मीं विनुदत्याशु तमः सूर्य्योदये यथा। भ्राजते स विमानाग्रे नक्षत्रेष्विव चन्द्रमाः ॥ ३८॥ वासो हि सर्वदैवत्यं सर्वदेवैरभिष्टुतम्। वस्त्राभावे क्रिया नास्ति यज्ञा वेदास्तपांसि च ॥ ३९ ॥ तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः। तानि सर्वाण्यवाप्नोति यज्ञवेदतपांसि च ॥ ४० ॥ नित्यं श्राद्धेषु यो दद्यात् प्रयतस्तत्परायणः। सर्वान् कामानवाप्नोति सर्वं राज्यं तथैव च ॥ ४१ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते। भक्ष्यान् धानाः करम्भांश्च पिष्टकान् घृतशर्कराः ॥ ४२ ॥ कृशरान्मधुपर्कञ्च पयः पायसमेव च। स्निग्धांश्च पूपान् यो दद्यादग्निष्टोमस्य यत् फलम् ॥ ४३ ॥ दधि गव्यमसंसृष्टं भक्ष्या नानाविधास्तथा। तदन्नं शोचति श्राद्धे वर्षासु च मघासु च ॥ ४४ ॥ घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत्। गयायां हस्तिनश्चैव दत्त्वा श्राद्धे न शोचति ॥ ४५ ॥ ओदनं पायसं सर्पिर्मधुमूलफलानि च। भक्ष्यांश्च विविधान्दत्त्वा प्रेत्य चेह च मोदते ॥ ४६ ॥ शर्कराक्षीरसंयुक्तं पृथुकं नित्यमक्षयम्। यश्च संवत्सरं प्रीत्या कृसरैर्मसुरेण च ॥ ४७ ॥ सक्तुलाजास्तथा पूपाः कुल्माषव्यञ्जनैस्तथा। सर्पिःस्निग्धानि हृद्यानि दध्ना सक्तूंस्तु भोजयेत्। श्राद्धेष्वेतानि यो दद्यात् पद्मानि लभते निधिम् ॥ ४८ ॥ नवसस्यानि यो दद्याच्छ्राद्धे सत्कृत्य यत्नतः। सर्वभोगानवाप्नोति पूज्यते च दिवं गतः ॥ ४९ ॥ भक्ष्यभोज्यानि चोष्याणि पेयलेह्यवराणि च। सर्वश्रेष्ठानि यो दद्यात् सर्वश्रेष्ठो भवेन्नरः ॥ ५० ॥ वैश्वदेवं च सौम्यं च खाङ्गमांसं परं हविः। विषाणं वर्ज्जयेत् खाङ्गमसूयां नाशयामहे ॥ ५१ ॥ भोजनेऽग्र्यासनं दद्यादतिथिभ्यः कृताञ्जलिः। सर्वयज्ञक्रियाणां स फलं प्राप्नोत्यनुत्तमम् ॥ ५२ ॥ क्षिप्रमत्युष्णमक्लिष्टं दद्याच्चान्नं बुभुक्षते। व्यञ्जनं च तथा स्निग्धं भक्त्या सत्कृत्य यत्नतः ॥ ५३ ॥ तरुणादित्यसङ्काशं विमानं हंसवाहनम्। अन्नदो लभते तिस्रः कल्पकोटीस्तथैव च ॥ ५४ ॥ अन्नदानात्परं दानं विद्यते नेह किञ्चन। अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ॥ ५५ ॥ जीवदानात् परं दानं न किञ्चिदिह विद्यते। अन्नैर्जीवति त्रैलोक्यमन्नस्यैव हि तत्फलम् ॥ ५६ ॥ अन्ने लोकाः प्रतिष्ठन्ति लोकदानस्य तत्फलम्। अन्नं प्रजापतिः साक्षात्तेन सर्वमिदं ततम्। तस्मादन्नसमं दानं न भूतं न भविष्यति ॥ ५७ ॥ यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा। क्षिप्रं प्राप्नोति तत् सर्वं पितृभक्तो हि मानवः ॥ ५८ ॥ प्रतिश्रयं सदा दद्यादतिथिभ्यः कृताञ्जलिः। देवास्ते संप्रतीक्षन्ते दिव्यातिथ्यैः सहस्रशः ॥ ५९ ॥

ण्येतानि यो दद्यात् पृथिव्यामेकराड् भवेत् । त्रिभिर्द्वाभ्यामथैकेन दानेन तु सुखी भवेत् ॥ ६० ॥ दानानि परमो धर्म्मः सद्भिः सत्कृत्य
तेतः । त्रैलोक्यस्याधिपत्यं हि दानादेव व्यवस्थितम् ॥ ६१ ॥ राजा तु लभते राज्यमधनश्चोत्तमं धनम् । क्षीणायुर्लभते चायुः पितृभक्तः
नरः । यान् कामान् मनसाऽर्थेत तांस्तस्य पितरो विदुः ॥ ६२ ॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे दानफलं नामाष्टादशोऽध्यायः
१८ ॥ ७ ॥ बृहस्पतिरुवाच ॥ अत ऊर्द्धं प्रवक्ष्यामि श्राद्धकर्म्मणि पूजितम् । काम्यनैमित्तिकाजस्रं श्राद्धकर्म्मणि नित्यशः ॥ १ ॥ पुत्र
धनमूला अष्टकास्तिस्र एव च । पूर्वपक्षो वरिष्ठो हि पूर्वा चित्री उदाहृता ॥ २ ॥ प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी । आद्या पूपैः सदा
र्या मांसैरन्या भवेत्सदा॥३॥ शाकैरन्या तृतीया स्यादेवं द्रव्यगतो विधिः । अन्वष्टका पितृणां वै नित्यमेव विधीयते ॥४॥ यद्यन्या च चतुर्थी स्यात्तांश्च
र्य्याद्विशेषतः । तासु श्राद्धं बुधः कुर्य्यात् सर्व्वस्वेनापि नित्यशः ॥ ५ ॥ परत्रेह च सर्व्वेषु नित्यमेव सुखी भवेत् । पूजकानां सदोत्कर्षो नास्तिका
धो गतिः ॥ ६ ॥ पितरः सर्व्वकालेषु तिथिकालेषु देवताः । सर्व्वं पुरुषमायान्ति निपानमिव धेनवः ॥ ७ ॥ मा स्म ते प्रतिगच्छेयुरष्टकाः सुरपू
ताः। मोघस्तस्य भवेल्लोको लब्धं चास्य विनश्यति॥८॥ देवांस्तु दायिनो यान्ति तिर्य्यग्गच्छन्त्यदायिनः। प्रजां पुष्टिं स्मृतिं मेधां पुत्रानैश्वर्य्यमेव च॥९॥
र्वाणः पौर्णमास्यां च पूर्व्वं पूर्णं समश्नुते । प्रतिपद्धनलाभाय लब्धं चास्य न नश्यति ॥ १० ॥ द्वितीयायां तु यः कुर्य्याद्द्विपदाधिपतिर्भवेत् ।
र्थिना तृतीया तु शत्रुघ्नी पापनाशिनी ॥ ११ ॥ चतुर्थ्यां कुरुते श्राद्धं शत्रोश्छिद्राणि पश्यति । पञ्चम्यां वै प्रकुर्वाणः प्राप्नोति महतीं श्रियम्
१२ ॥ षष्ठ्यां श्राद्धानि कुर्वाणं द्विजास्तं पूजयन्त्युत । कुरुते यस्तु सप्तम्यां श्राद्धानि सततं नरः ॥ १३ ॥ महासत्रमवाप्नोति गणानामधिपो
त् । सम्पूर्णामृद्धिमाप्नोति योऽष्टम्यां कुरुते नरः ॥ १४ ॥ श्राद्धं नवम्यां कुर्वाण ऐश्वर्य्यं कांक्षितां स्त्रियम् । कुर्वन् दशम्यां तु नरो ब्राह्मीं श्रिय
प्नुयात् ॥ १५ ॥ वेदांश्चैवाप्नुयात् सर्वान् प्रणाशमेनसस्तथा । एकादश्यां परं दानमैश्वर्य्यं सततं तथा ॥ १६ ॥ द्वादश्यां राष्ट्रलाभं तु जय
हुर्वसूनि च । प्रजां बुद्धिं पशून् मेधां स्वातन्त्र्यं पुष्टिमुत्तमाम् । दीर्घमायुरथैश्वर्य्यं कुर्वाणस्तु त्रयोदशीम् ॥ १७ ॥ युवानश्च
ा यस्य गृहे तेषां प्रदापयेत् । शस्त्रेण तु हता ये वै तेषां दद्याच्चतुर्दशीम् ॥ १८ ॥ तथा विषमजातानां यमलानां तु सर्वशः । अमावास्यां प्रय
न श्राद्धं कुर्य्याच्छुचिः सदा ॥ १९ ॥ सर्व्वान् कामानवाप्नोति स्वर्गमानन्त्यमश्नुते । ऋतं दद्यादमावास्यां सोममाप्यायनं महत् ॥ २० ॥ एव
प्यायितः सोमस्त्रीँल्लोकान् धारयिष्यति । सिद्धचारणगन्धर्व्वैः स्तूयमानस्तु नित्यशः ॥ २१ ॥ स्तवैः पुष्पैर्मनोज्ञैश्च सर्व्वकामपरिच्छदैः । नृत्य

वादित्रगीतैश्च ह्यप्सरोभिः सहस्रशः ॥ २२ ॥ उपक्रीडैर्विमानैस्तु पितृभक्तं दृढव्रतम् । स्तुवन्ति देवगन्धर्वाः सिद्धसङ्घाश्च तं सदा ॥ २३ ॥
पितृभक्तस्त्वमावस्यां सर्वान् कामानवाप्नुयात् । प्रत्यक्षमर्चितास्तेन भवन्ति पितरः सदा ॥ २४ ॥ पितृदेवा मघा यस्मात् तस्मात्तास्वक्षयं स्मृतम् ।
पित्र्यं कुर्वन्ति तस्यां तु विशेषेण विचक्षणः ॥ २५ ॥ तस्मान्मघां वै वाञ्छन्ति पितरो नित्यमेव हि । पितृदैवतभक्ता ये तेऽपि यान्ति परां गतिम्
॥ २६ ॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे तिथिविशेषे श्राद्धफलवर्णनं नामोनविंशोऽध्यायः ॥ १९ ॥ ७ ॥ बृहस्पतिरुवाच ॥
यमस्तु यानि श्राद्धानि प्रोवाच शश(शिव)बिन्दवे । तानि मे शृणु कार्त्स्न्येन नक्षत्रेषु पृथक् पृथक् ॥१॥ श्राद्धं यः कृत्तिकायोगे करोति सततं नरः ।
अग्नीनाधाय सापत्यो जायते स गतज्वरः ॥ २ ॥ अपत्यकामो रोहिण्यां सौम्येनौजस्विता भवेत् । प्रायशः क्रूरकर्म्मा तु चार्द्रायां श्राद्धमाचरेत् ॥ ३ ॥
क्षेत्रभागी भवेत् पुत्री श्राद्धं कुर्व्वन् पुनर्व्वसौ । धनधान्यसमाकीर्णः पुत्रपौत्रसमाकुलः ॥ ४ ॥ तुष्टिकामः पुनस्तिष्ये श्राद्धं कुर्वीत मानवः । आश्ले
षासु पितृनार्च्य वीरान् पुत्रानवाप्नुयात् ॥ ५ ॥ श्रेष्ठो भवति ज्ञातीनां मघासु श्राद्धमाचरन् । फल्गुनीषु पितृनार्च्य सौभाग्यं लभते नरः ॥ ६ ॥
प्रधानशीलः सापत्य उत्तरासु करोति यः । स सत्सु मुख्यो भवति हस्ते यस्तर्पयेत्पितृन् ॥ ७ ॥ चित्रायां चैव यः कुर्यात् पश्येद्रूपवतः सुतान् ।
स्वातिना चैव यः कुर्याद्विद्वाँल्लाभमवाप्नुयात् ॥ ८ ॥ पुत्रार्थन्तु विशाखासु श्राद्धमीहेत मानवः । अनुराधासु कुर्व्वाणो नरश्चक्रं प्रवर्त्तयेत् ॥ ९ ॥
आधिपत्यं लभेच्छ्रैष्ठ्यं ज्येष्ठायां सततं तु यः । मूलेनारोग्यमिच्छन्ति आषाढासु महद्यशः ॥ १० ॥ आषाढाभिश्चोत्तराभिर्वीतशोको भवेन्नरः । श्रव
णायां सुलोकेषु प्राप्नुयात् परमां गतिम् ॥ ११ ॥ राज्यभागवै धनिष्ठासु प्राप्नुयाद्विपुलं धनम् । श्राद्धं त्वभिजिता कुर्वन् विन्दतेऽजाविकं फलम्
॥ १२ ॥ नक्षत्रे वारुणे कुर्व्वन् भिषक्सिद्धिमवाप्नुयात् । पूर्व्वे प्रोष्ठपदे कुर्व्वन् विन्दतेऽजाविकं फलम् ॥ १३ ॥ उत्तरास्वनतिक्रम्य विन्देद्गा वै सह
स्रशः । बहुरूपकृतं द्रव्यं विन्देत् कुर्व्वंस्तु रेवतीम् । अश्वांश्चैवाश्विनीयुक्तो भरण्यामायुरुत्तमम् ॥ १४ ॥ इमं श्राद्धविधिं कुर्व्वंश्छशबिन्दुर्महीमिमाम् ।
कृत्स्नां तु लेभे स कृत्स्नां लब्ध्वा च प्रशशंस तम् ॥ १५ ॥ इति श्रीमहापुराणे वायुप्रोक्ते नक्षत्रविशेषे श्राद्धफलवर्णनं नाम विंशोऽध्यायः ॥ २० ॥७॥
शंयुरुवाच ॥ किञ्चिद्दत्तं पितृणां तु धिनोति वदतां वर । किं हि स्विच्चिररात्राय किञ्चानन्त्याय कल्पते ॥ १ ॥ बृहस्पतिरुवाच ॥
हवींषि श्राद्धकाले तु यानि श्राद्धविदो विदुः । तानि मे शृणु सर्वाणि फलं चैषां यथाबलम् ॥ २ ॥ तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन च । दत्तेन मासं
प्रीयन्ते श्राद्धेन तु पितामहाः ॥ ३ ॥ मत्स्यैः प्रीणन्ति द्वौ मासौ त्रीन्मासान्हारिणेन तु । शाशन्तु चतुरो मासान् पञ्च प्रीणाति शाकुनम् ॥ ४ ॥ वाराहेण

षण्मासाञ्छागलं सासमासिकम् । अष्टमासिकमित्युक्तं यच्च पार्षतकं भवेत् ॥ ५ ॥ रौरवेण तु प्रीयन्ते नवमासान् पितामहाः । गवयस्य तु मांसेन
ते: स्याद्दशमासिकी ॥ ६ ॥ कूर्मस्य चैव मांसेन मासानेकादशैव तु । श्राद्धमेव विजानीयाद्गव्यं संवत्सरं भवेत् ॥ ७ ॥ तथा गव्यसमायुक्तं पायसं
मधुसर्पिषा । वध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ८ ॥ आनन्त्याय भवेद्युक्तं खाड्गमांसैः पितृक्षये । कृष्णच्छागस्तथा गोधा आनन्त्यायैव
ल्पते ॥ ९ ॥ अत्र गाथाः पितृगीताः कीर्त्तयन्ति पुराविदः । तास्तेऽहं संप्रवक्ष्यामि यथावत्सन्निबोधत ॥ १० ॥ अपि नः स्वकुले जायाद्योऽन्नं
त्रयोदशीम् । पायसं मधुसर्पिर्भ्यां छायायां कुञ्जरस्य तु ॥ ११ ॥ आजेन सर्वलोहेन वर्षासु च मघासु च । एष्टव्या बहवः पुत्रा यद्येकोऽपि
ां व्रजेत् । गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत् ॥ १२ ॥ शंयुरुवाच ॥ गयादीनां फलं तात प्रब्रूहि समपृच्छतः । पितृणां चैव
पुण्यं निखिलेन ब्रवीहि मे ॥ १३ ॥ बृहस्पतिरुवाच ॥ गयायामक्षयं श्राद्धं जपहोमतपांसि च । पितृक्षयाहे ते पुत्र तस्मात्तत्राक्षयं स्मृतम्
१४ ॥ पुनीयादेकविंशन्तु गौर्य्यामुत्पादितः सुतः । मातामहांस्तु षड्भूय इति तस्याः फलं स्मृतम् ॥ १५ ॥ फलं वृषस्य वक्ष्यामि गदतो मे
बोधत । वृषोत्सृष्टा पुनात्येव दशातीतान् दशावरान् ॥ १६ ॥ यत्किञ्चित् स्पृश्यते तोयैरुत्तीर्णेन जलान्महीम् । वृषोत्सर्गे पितॄणां तु ह्यक्षयं स
ाहृतम् ॥ १७ ॥ यद्यद्धि संस्पृशेत्तोयं लांगूलादिभिरन्ततः । सर्वं तदक्षयं तस्य पितॄणां नात्र संशयः ॥ १८ ॥ शृङ्गैः खुरैर्वा यद्भूमिमुल्लिखत्य
ां वृषः । मधुकुल्याः पितॄंस्तस्य अक्षयास्ता भवन्ति वै ॥ १९ ॥ सहस्रनल्वमात्रेण तडागेन यथा श्रुतिः । तृप्तिस्तृप्तिः पितॄणां वै तद्वृषस्याधिको
ते ॥ २० ॥ यो ददाति गुडैर्मिश्रांस्तिलान् वै श्राद्धकर्मणि । मधुना मधुमिश्रान् वा अक्षयं सर्वमेव तत् ॥ २१ ॥ बृहस्पतिरुवाच ॥
ब्राह्मणान् परीक्षेत सदा देये तु मानवः । दैवे कर्मणि पित्र्ये च श्रूयते वै परीक्षणम् ॥ २२ ॥ सर्ववेदव्रतस्नाताः पङ्क्तीनां पावना द्विजाः । ये च भाष्य
ो मुख्या ये च व्याकरणे रताः ॥ २३ ॥ अधीयते पुराणं च धर्म्मशास्त्रं तथैव च । त्रिणाचिकेतपञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ॥ २४ ॥ ब्रह्मदेय
श्चैव छन्दोगो ज्येष्ठसामगः । पुण्येषु येषु तीर्थेषु अभिषेककृतव्रताः ॥ २५ ॥ मुख्येषु येषु सत्रेषु भवन्त्यवभृथश्रुताः । ये च सद्योव्रता नित्यं
कर्मनिरताश्च ये ॥ २६ ॥ अक्रोधनाः शान्तिपरास्तान् वै श्राद्धे निमन्त्रयेत् । ये चापि नित्यं दशसु सुकृतेषु व्यवस्थिताः ॥ २७ ॥ एतेषु दत्तमक्ष
मेते वै पङ्क्तिपावनाः । श्रद्धेया ब्राह्मणा ये तु योगधर्म्ममनुव्रताः ॥ २८ ॥ धर्माश्रमवरिष्ठास्ते हव्यकव्येषु ते वराः । त्रयोऽपि पूजितास्तेन ब्रह्मविष्णु
श्वराः ॥ २९ ॥ पितृभिः सह लोकाश्च यो ह्येतान् पूजयेन्नरः । पवित्राणां पवित्रञ्च मङ्गलानां च मङ्गलम् ॥ ३० ॥ प्रथमः सर्वधर्माणां योगधर्मो निगद्यते ।

अपाङ्क्तेयांस्तु वक्ष्यामि गदतो मे निबोधत ॥ ३१ ॥ कितवो मद्यपो यक्ष्मी पशुपालो निराकृतिः । ग्रामप्रेष्यो वार्द्धुषिको गायनो वणिजस्तथा ॥३२॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी । समुद्रयायी दुश्चर्मा तैलिकः कूटकारकः ॥ ३३ ॥ पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ।
अभिशस्तस्तथा स्तेनः शिल्पैर्यश्चोपजीवति ॥ ३४ ॥ सूचकः पर्वकारी च यस्तु मित्रेषु द्रुह्यति । गणयाचनकश्चैव नास्तिको वेदवर्जितः ॥ ३५ ॥
उन्मत्तः षण्डकशठो भ्रूणहा गुरुतल्पगः । भिषक्जीवः प्रैषणिकः परस्त्रीं यश्च गच्छति ॥ ३६ ॥ विक्रीणाति च यो ब्रह्म व्रतानि च तपांसि च ।
नष्टं स्यान्नास्तिके दत्तं कृतघ्ने चैव शंसके ॥ ३७ ॥ यच्च वाणिजके चैव नेह नामुत्र तद्भवेत् । निक्षेपहारिणे चैव कितवे वेदनिन्दके ॥ ३८ ॥ तथा
वाणिजके चैव कारुके धर्म्मवर्जिते । निन्दन् क्रीणाति पण्यानि विक्रीणंश्च प्रशंसति ॥ ३९ ॥ अनृतस्य समावासो न वणिक् श्राद्धमर्हति । भस्म
नीव हुतं हव्यं दत्तं पौनर्भवे द्विजे ॥ ४० ॥ षष्टिं काणः शतं षण्डः श्वित्री यावत् प्रपश्यति । पापरोगी सहस्रस्य दातुर्नाशयते फलम् ॥ ४१ ॥ अश्यते
सत्फलात्तस्माद्दाता यस्य तु बालिशः । यो वेष्टितशिरा भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः ॥ ४२ ॥ सोपानत्कश्च यो भुङ्क्ते यच्च दद्यात्तिरस्कृतम् । सर्वं तद
सुरेन्द्राणां ब्रह्मा भागमकल्पयत् ॥ ४३ ॥ श्वानश्च यातुधानाश्च नावेक्षेरन् कथञ्चन । तस्मात्परिवृतिं दद्यात्तिलैश्चान्ववकीरयन् ॥ ४४ ॥ राक्षसानां
तिलाः प्रोक्ताः शुनां परिवृतिस्तथा । दर्शनात्सूकरो हन्ति पक्षपातेन कुक्कुटः ॥ ४५ ॥ रजस्वलानुस्पर्शेन क्रुद्धो यश्च प्रयच्छति । यस्य मित्रप्रदे
यानि श्राद्धानि च हवींषि च । न प्रीणाति पितॄन् देवान् स्वर्गं न च स गच्छति ॥ ४६ ॥ नदीतीरेषु रम्येषु सरित्सु च सरस्सु च । विविक्तेषु च प्रीयन्ते
दत्तेनेह पितामहाः ॥ ४७ ॥ न चाश्रुं पातयेज्जातु न युक्तो वाचमीरयेत् । न च कुर्वीत भुञ्जानो ह्यन्योऽन्यं मत्सरस्तदा ॥ ४८ ॥ अपसव्ये कृते तेन
विधिवद्दर्भपाणिना । पित्र्यमानिधनं कार्यमेवं प्रीणाति वै पितॄन् ॥ ४९ ॥ अनुमत्यादितो विप्रानग्नौ कुर्याद्यथाविधि । पितृणां निर्वपेद्भूमौ शूर्पे
वा दर्भसंस्तरे ॥ ५० ॥ शुक्लपक्षस्य पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः । कृष्णपक्षेऽपराह्णे तु रौहिणं न विलङ्घयेत् ॥ ५१ ॥ एवमेते महात्मानो महा
योगा महौजसः । सदा वै पितरः पूज्या द्रष्टारो देशकालयोः ॥ ५२ ॥ पितृभक्तिरतो नित्यं योगं प्राप्नोत्यनुत्तमम् । ध्यानेन मोक्षं गच्छन्ति हित्वा कर्म
शुभाशुभम् ॥ ५३ ॥ यज्ञहेतोर्यदुद्धृत्य मोहयित्वा जगत्तदा । गुहायां निहतं योगं कश्यपेन महात्मना ॥ ५४ ॥ अमृतं गुह्यमुद्धृत्य योगं योगविदां
वर । प्रोक्तं सनत्कुमारेण महत्तद्धर्म्मशाश्वतम् ॥ ५५ ॥ देवानां परमं गुह्यमृषीणां च परायणम् । पितृभक्त्या प्रयत्नेन पितृभक्तैश्च नित्यशः ॥ ५६ ॥
तच्च योगं समासेन पितृभक्तस्तु कृत्स्नशः । प्रयत्नात्प्राप्नुयात्तत्र सर्वमेष न संशयः ॥ ५७ ॥ यस्मै श्राद्धानि देयानि यच्च वृत्तं महाफलम् । येषु

वाप्यक्षयं श्राद्धं तीर्थेषु च नदीषु च । येषु च स्वर्गमाप्नोति तत्ते प्रोक्तं ससंग्रहम् ॥ ५८ ॥ बृहस्पतिरुवाच ॥ श्रुत्वैवं श्राद्धकल्पं तु योऽसूयां कुरुते नरः । स मज्जेन्नरके घोरे नास्तिकस्तमसावृतः ॥ ५९ ॥ महारोगावसायस्तु स यः संयतमानसः । वेदाश्रमान्मुक्तचित्तः कुम्भीकानधिगच्छति । जिह्वाच्छेदं स्तेनमेत्य प्राप्नुयुस्तेन चैव ह ॥ ६० ॥ सीदन्ति ते सागरे लोष्टभूता योगद्विषः स्थास्यन्ते यावदुर्वी । तस्माच्छ्राद्धे धर्म्मं उद्दिष्ट एष नित्यं कार्यः श्रद्दधानेन पुंसा ॥ ६१ ॥ परिवादो न कर्त्तव्यो योगिनां च विशेषतः । परिवादात् कृमिर्भूत्वा तत्रैव परिवर्त्तते ॥६२॥ योगं परिवदेद्यस्तु ध्यानिनां मोक्षकारणम् । स गच्छेन्नरकं घोरं श्रोता यश्च न संशयः ॥ ६३ ॥ आवृतं तमसा सर्वं नरकं घोरदर्शनम् । योगीश्वरपरीवादान्निश्चयं याति मानवः ॥ ६४ ॥ योगेश्वराणामाक्रोशं शृणुयाद्यो यतात्मनाम् । स हि कालं चिरं मज्जेत् कुम्भीपाके न संशयः ॥ ६५ ॥ मनसा कर्मणा वाचा द्वेषं योगिषु वर्जयेत् । प्रेत्यान्यं तत्फलं भुङ्क्ते इह चैव न संशयः ॥ ६६ ॥ न पारगो विन्दति परमात्मनस्त्रिलोकमध्ये चरति स्वकर्मभिः । ऋचो यजुःसामतदङ्गपारगो विकारमेव ह्यनवाप्य सीदति ॥ ६७ ॥ विकारपारः प्रकृतेश्च पारगस्त्रयी गुणानां त्रिगुणान्तपारगा । तत्त्वश्चतुर्विंशतियोगपारगं स पारगो यस्त्वयनान्तपारगः ॥ ६८ ॥ कृत्स्नं यथा तत्त्वविसर्गमात्मनस्तथैव भूयः प्रलयं सदात्मनः । प्रत्याहरेद्योगबलेन योगवित् स सर्वपारक्रमयानगोचरः ॥ ६९ ॥ वेदस्य वेदिता यो वै वेद्यं विन्दति योगवित् । तं वै वेदविदं प्राहुस्तं प्राहुर्वेदपारगम् ॥ ७० ॥ वेद्यं च वेदितव्यं च विदित्वा वै यथाविधि । एवं वेदविदं प्राहुस्ततोऽन्ये वेदचिन्तकाः ॥७१॥ यज्ञान् वेदांस्तथा कामाञ्ज्ञानानि विविधानि च । प्राप्नोत्यायुः प्रजाश्चैव पितृभक्तो धनानि च ॥ ७२ ॥ श्राद्धे यः श्राद्धकल्पं वै पश्चिमं नियतं पठेत् । सर्वाण्येतान्यवाप्नोति तीर्थे दानफलानि च ॥ ७३ ॥ स पङ्क्तिपावनश्चैव द्विजानामग्रभुग् भवेत् । अध्याप्य वा द्विजान् सर्वान् सर्वान् कामानवाप्नुयात् ॥ ७४ ॥ यश्चैव शृणुयान्नित्यमानन्त्यं स्वर्गमश्नुते । अनसूयो जितक्रोधो लोभमोहविवर्जितः ॥ ७५ ॥ तीर्थानां च फलं कृत्स्नं दानादीनां तथैव च । मोक्षोपायो ह्ययं श्रेष्ठः स्वर्गोपायो ह्ययं परः । इह चापि परा तुष्टिस्तस्मात्कुर्वीत यत्नतः ॥ ७६ ॥ इमं विधिं यो हि पठेदतन्द्रितः समाहितः संसदि पर्वसन्धिषु । अपत्यभाग्भवति परेण तेजसा दिवौकसां स व्रजते सलोकताम् ॥ ७७ ॥ येन प्रोक्तस्त्वयं कल्पो नमस्तस्मै स्वयम्भुवे । महायोगेश्वरेभ्यश्च सदा च प्रणतो ह्यहम् ॥ ७८ ॥ इत्येतेपितरस्तात देवानामपि देवताः । सप्तस्वेतेषु ते नित्यं स्थानेषु पितरोऽव्ययाः ॥ ७९ ॥ प्रजापतिसुता ह्येते सर्वे चैव महात्मनः । आद्यो गणस्तु योगानां

स नित्यो योगवर्द्धनः ॥ ८० ॥ द्वितीयो देवतानां तु तृतीयो देवताऽरिणाम् । शेषास्तु वर्णिनां ज्ञेया इति सर्वे प्रकीर्तिताः ॥ ८१ ॥ देवास्त्वेतान् यज
न्ते वै सर्वेष्वेतेष्ववस्थिताः । आश्रमास्तु यजन्त्येतांश्चत्वारस्तु यथाक्रमम् ॥ ८२ ॥ वर्णाश्चापि यजन्त्येतांश्चत्वारस्तु यथाविधि । तथा सङ्करजाताश्च
म्लेच्छाश्चैव यजन्ति वै ॥ ८३ ॥ पितॄंश्च यो यजेद्भक्त्या पितरः पूजयन्ति तम् । पितरः पुष्टिकामस्य प्रजाकामस्य वा पुनः । पुष्टिं प्रजाश्च स्वर्गं च
प्रयच्छन्ति पितामहाः ॥ ८४ ॥ देवकार्यादपि सूनोः पितृकार्यं विशिष्यते । देवतानां हि पितरः पूर्वमाप्यायनं स्वयम् ॥ ८५ ॥ न हि योगगतिः सूक्ष्मा
पितॄणां च परा गतिः । तपसा विप्रकृष्टेन दृश्यते मांसचक्षुषा ॥ ८६ ॥ सर्वेषां राजतं पात्रमथवा रजतान्वितम् । पावनं ह्युत्तमं प्रोक्तं देवानां पितृभिः
सह ॥ ८७ ॥ येषां दास्यन्ति पिण्डांस्त्रीन् बान्धवा नामगोत्रतः । भूमौ कुशोत्तरायाञ्च अपसव्यविधानतः ॥ ८८ ॥ सर्वत्र वर्त्तमानास्ते पिण्डाः प्रीणन्ति
वै पितॄन् । यदाहारो भवेज्जन्तुराहारः सोऽस्य जायते ॥ ८९ ॥ यथा गोष्ठे प्रनष्टां वै वत्सो विन्दति मातरम् । तथा तं नयते मन्त्रो जन्तुर्यत्रावतिष्ठते ॥९०॥
नाम गोत्रं च मन्त्रश्च दत्तमन्नं नयन्ति तम् । अपि योनिशतं प्राप्तांस्तृप्तिस्ताननु गच्छति ॥ ९१ ॥ एवमेषा स्थिता संस्था ब्रह्मणा परमेष्ठिना । पितॄणा
मादिसर्गस्तु लोकानामक्षयार्थिनाम् ॥ ९२ ॥ इत्येते पितरो देवा देवाश्च पितरः पुनः । दौहित्रा यजमानाश्च प्रोक्ताश्चैव मयाऽनघाः ॥ ९३ ॥ लोका दुहितर
श्चैव दौहित्राश्च सुतास्तथा । दानानि सह शौचेन तीर्थानि च फलानि च ॥ ९४ ॥ अक्षयत्वं द्विजाश्चैव यायावरविधिस्तथा । प्रोक्तं सर्वं यथान्यायं यथा
ब्रह्माऽब्रवीत् पुरा ॥९५॥ बृहस्पतिरुवाच ॥ इत्येतदङ्गिराः प्राह ऋषीणां शृण्वतां तदा । पृष्टस्तु संशयं सर्वं पितॄणां प्राह संसदि ॥९६॥ सत्रे वै वितते पूर्वं
तदा वर्षसहस्रिके । यस्मिन् गृहपतिर्ह्यासीद्ब्रह्मा वै देवता प्रभुः ॥९७॥ संवत्सरशतान्यं च तत्रोपेता इति श्रुतिः । श्लोकाश्चात्र पुरा गीता ऋषिभिर्ब्रह्मवा
दिभिः ॥ ९८ ॥ दीक्षितस्य तदा सत्रे ब्रह्मणः परमात्मनः । तत्रैव जातमत्युग्रं पितॄणामक्षयार्थिना । लोकानां च हितार्थाय ब्रह्मणा परमेष्ठिना ॥ ९९ ॥
सूत उवाच ॥ एवं बृहस्पतिः पूर्वं पृष्टः पुत्रेण धीमता । प्रोवाच पितृवंशन्तु यत्तद्वै समुदाहृतम् । अत ऊर्द्ध्वं प्रवक्ष्यामि वरुणस्य निबोधत ॥ १०० ॥ इति
श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे भिन्नकालिकतृप्तिसाधनद्रव्यविशेषगयाश्राद्धादिफलब्राह्मणपरीक्षादिकथनं नामैकविंशोऽध्यायः ॥ २१ ॥ छ ॥
ऋषयश्चैवमुक्तास्तु परं हर्षमुपागताः । परं शुश्रूषवो भूयः पप्रच्छुस्तदनन्तरम् ॥ १ ॥ ऋषय ऊचुः ॥ वंशानामानुपूर्व्येण राज्ञाञ्चामिततेज
साम् । स्थितिश्चैषां प्रभावञ्च ब्रूहि नः परिपृच्छताम् ॥ २ ॥ एवमुक्तस्ततः सूतस्तथाऽसौ लोमहर्षणः । शुश्रूषामुत्तराख्याने ऋषीणां वाक्यकोविदः
॥ ३ ॥ आख्यानकुशलो भूयः परं वाक्यमुवाच ह । ब्रुवतो मे निबोधस्व ऋषिराड् यथा मम ॥ ४ ॥ वंशानामानुपूर्व्येण राज्ञाञ्चामिततेजसाम् ।

चैषां प्रभावश्च ब्रुवतो मे निबोधत ॥५॥ वरुणस्य पत्नी सामुद्री शुनोदेवीत्युदाहृता । तस्याः पुत्रौ कलिर्वैद्यः सुता च सुरसुन्दरी ॥ ६ ॥ कलि
ावीर्यौ जयश्च विजयश्च ह । वैद्यपुत्रौ घृणिश्चैव मुनिश्चैव महाबलौ ॥ ७ ॥ प्रजानामत्तुकामानामन्योन्यस्य प्रभक्षिणौ । भक्षयित्वा तावन्योन्यं
समवापतुः ॥ ८ ॥ कलिः सुरायां सञ्जज्ञे तस्य पुत्रो मदः स्मृतः । त्वाष्ट्री हिंसा कलेर्भार्य्या ज्येष्ठा या निकृतिः स्मृता ॥ ९ ॥ असूतान्यान्
त्रांश्चतुरः पुरुषादकान् । नाकं विघ्नं च विख्यातं सद्मं विधमन्तथा ॥ १० ॥ अशिरस्कस्तयोर्विघ्नो नाकश्चैवाशरीरवान् । सद्मश्चैक
बुद्धिधमश्चैकपात्स्मृतः ॥ ११ ॥ सद्मस्य तथा पत्नी तामसी पूतना स्मृता । रेवती विधमस्यापि तयोः पुत्राः सहस्रशः ॥ १२ ॥ नाकस्य
पत्नी विघ्नस्य च अयोमुखी । राक्षसास्तु महाशीर्षाः सन्ध्याद्वयविचारिणः ॥ १३ ॥ रेवतीपूतनापुत्रा नैर्ऋता नामतः स्मृताः । ग्रहास्ते
सर्वे बालानान्तु विशेषतः । स्कन्दस्तेषामधिपतिर्ब्रह्मणोऽनुमते प्रभुः ॥ १४ ॥ बृहस्पतेर्या भगिनी वरस्त्री ब्रह्मचारिणी । योगसिद्धा जगत्कृ
त्का चरते सदा ॥ १५ ॥ प्रभासस्य तु सा भार्या वसूनामष्टमस्य तु । विश्वकर्मा सुतस्तस्या जातः शिल्पिप्रजापतिः ॥ १६ ॥ त्वष्टा विराजो
धर्म्मपौत्र उदारधीः । कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वास्तुकृत् ॥ १७ ॥ यः सर्वेषां विमानानि देवतानाञ्चकार ह । मानुषाश्चोपजी
स्य शिल्पं महात्मनः ॥ १८ ॥ प्रह्लादी विश्रुता तस्य त्वष्टुः पत्नी विरोचना । विरोचनस्य भगिनी माता त्रिशिरसस्तु सा ॥ १९ ॥ देवाचा
र्तो विश्वकर्मस्य धीमतः । विश्वकर्मात्मजश्चैव विश्वकर्ममयः स्मृतः ॥ २० ॥ सुरेणुरिति विख्याता स्वसा तस्य यवीयसी । त्वाष्ट्री सा सवि
पुनः संज्ञेति विश्रुता ॥ २१ ॥ असूत तपसा सा तु मनुं ज्येष्ठं विवस्वतः । यमौ पुनरसूतासौ यमञ्च यमुनाञ्च ह ॥ २२ ॥ सा तु गत्वा
वी वडवारूपधारिणी । सवितुश्चाश्वरूपस्य नासिकाभ्यां तु तौ स्मृतौ ॥ २३ ॥ असूत सा महाभागा त्वन्तरिक्षेऽश्विनौ किल । नासत्यश्चैव
ार्त्तण्डस्यात्मजावुभौ ॥ २४ ॥ ऋषय ऊचुः ॥ कस्मान्मार्त्तण्ड इत्येष विवस्वानुच्यते बुधैः । किमर्थं साऽश्वरूपा वै नासिकाभ्या
। एतद्वेदितुमिच्छामस्तत्त्वं विब्रूहि पृच्छताम् ॥ २५ ॥ सूत उवाच ॥ चिरोत्पन्नमतिर्भिन्नमण्डं त्वष्ट्रा विदारितम् । दृष्ट्वा गर्भवधार्द्दितः
दुःखितोऽभवत् ॥ २६ ॥ अण्डे द्विधाकृते त्वण्डं दृष्ट्वा त्वष्टारमब्रवीत् । नैतदण्डं भवान्नूनं मार्त्तण्डस्त्वं भवानघ ॥ २७ ॥ न खल्वयं
डे च इति स्नेहात् पिताऽब्रवीत् । तस्य तद्वचनं श्रुत्वा नामान्वर्थमुदाहरत् ॥ २८ ॥ यन्मार्त्तण्डो भवेत्युक्तः पित्राऽण्डे वै द्विधा कृते ।
वस्वान्मार्त्तण्डः पुराणज्ञैर्विभाष्यते ॥ २९ ॥ ततः प्रजाः प्रवक्ष्यामि मार्त्तण्डस्य विवस्वतः । विजज्ञे सवितुः संज्ञाभार्यायान्तु त्रयं

पुरा ॥ ३० ॥ मनुर्यवीयान् सावर्णिः संज्ञायाश्च तथाश्विनौ । शनैश्चरश्च सतैते मार्त्तण्डस्यात्मजाः स्मृताः ॥ ३१ ॥ विवस्वान् कश्यपाज्जज्ञे दाक्षा
यण्यां महायशाः । तस्य भार्याऽभवत्त्वाष्ट्री महादेवी विवस्वतः । सुरेणुरिति विख्याता पुनः संज्ञेति विश्रुता ॥ ३२ ॥ सा तु भार्या भगवतो मार्त्त
ण्डस्यातितेजसः । नातुष्यद्भर्तृरूपेण रूपयौवनशालिनी ॥ ३३ ॥ आदित्यस्य हि तद्रूपं मार्त्तण्डस्य हि तेजसा । गात्रेषु प्रतिरुद्धं वै नातिं
कान्तमिवाभवत् ॥ ३४ ॥ न खल्वयं मृतो ह्यण्डे इति स्नेहात्तमब्रवीत् । अज्ञानः कश्यपः स्नेहान्मार्त्तण्ड इति चोच्यते ॥ ३५ ॥ तेजस्त्वभ्य
धिकं तस्य नित्यमेव विवस्वतः । येनापि तापयामास त्रींल्लोकान् कश्यपात्मजः ॥ ३६ ॥ त्रीण्यपत्यानि संज्ञायां जनयामास वै रविः । द्वौ
सुतौ तु महावीर्यौ कन्यां कालिन्दिमेव च ॥ ३७ ॥ मनुर्विवस्वतो ज्येष्ठः श्राद्धदेवः प्रजापतिः । ततो यमो यमी चैव यमजौ संबभूवतुः ॥ ३८ ॥
शान्तवर्णन्तु तद्रूपं दृष्ट्वा संज्ञा विवस्वतः । असहन्ती स्वकां छायां सवर्णां निर्ममे पुनः ॥३९॥ महीमयी तु सा नारी तस्याश्छायासमुद्गता । प्राञ्जलिः
प्रयता भूत्वा पुनः संज्ञामभाषत ॥ ४० ॥ वदस्व किं मया कार्यं सा संज्ञा तामथाब्रवीत् । अहं यास्यामि भद्रन्ते स्वमेव भवनं पितुः ॥ ४१ ॥
त्वयेह भवने मह्यं वस्तव्यं निर्विशङ्कया । इमौ च बालकौ मह्यं कन्या च वरवर्णिनी ॥ ४२ ॥ भर्त्रे वै नैवमाख्येयमिदं भगवते त्वया । एवमुक्ताब्रवीत्
संज्ञां संज्ञायाः पार्थिवी तु सा ॥४३॥ आकाशग्रहणाद्देवि आशयं नैव कर्हिचित् । आख्यास्यामि मतं तुभ्यं गच्छ देवि स्वमालयम् ॥ ४४ ॥ समाधाय
च तां संज्ञा तथेत्युक्ता तया च सा । त्वष्टुः समीपमगमद्व्रीडितेव तपस्विनी ॥ ४५ ॥ पिता तामागतां दृष्ट्वा क्रुद्धः संज्ञामथाब्रवीत् । भर्तुः समीपं गच्छ
त्वं मा जुगुप्स दिवाकरम् ॥ ४६ ॥ सैवमुक्ता तदा पित्रा नियुक्ता च पुनः पुनः । वर्षाणान्तु सहस्रं वै वसति स्म पितुर्गृहे ॥ ४७ ॥ भर्तुः समीपं गच्छ
त्वं नियुक्ता च पुनः पुनः । अगमद्वडवा भूत्वाच्छाद्य रूपमनिन्दिता । उत्तरान् सा कुरून् गत्वा तृणान्यथ चचार सा ॥ ४८ ॥ द्वितीयायान्तु संज्ञायां
संज्ञेयमिति चिन्त्य ताम् । आदित्यो जनयामास पुत्रावादित्यवर्चसौ ॥४९॥ पूर्वजस्य मनोस्तुल्यौ सादृश्येन तु तौ प्रभू । श्रुतश्रवं तु धर्मज्ञं श्रुतकर्म्मा
णमेव च ॥५० ॥ श्रुतश्रवा मनुः सोऽपि सावर्णिर्वै भविष्यति । श्रुतकर्म्मा तु विज्ञेयो ग्रहो वै यः शनैश्चरः ॥ ५१ ॥ मनुरेवाभवत्सो वै सावर्ण्य इति
बुध्यते । संज्ञा तु पार्थिवी सा वै स्वस्य पुत्रस्य वै तदा ॥ ५२ ॥ चकाराभ्यधिकं स्नेहं न तथा पूर्वजेषु वै । मनुस्तच्चाक्षमत्सर्वं यमस्तद्वै न चाक्षमत्
॥५३॥ बहुशो यत्स्यमानस्तु सापत्न्याददतिदुःखितः । तां वै रोषाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् ॥५४॥ पदा सन्तर्जयामास संज्ञां चैव स्वतो यमः ।
सा शशाप ततः क्रोधात् सवर्णा जननी यमम् ॥५५॥ पदा तर्जयसे यस्मात् पितृभार्यां यशस्विनीम् । तस्मात्तवैष चरणः पतिष्यति न संशयः ॥५६ ॥

यमस्तु तेन शापेन भृशं पीडितमानसः। मनुना सह धर्म्मात्मा पितुः सर्व्वं न्यवेदयत् ॥ ५७ ॥ भृशं शापभयोद्विग्नः संज्ञावाक्यैर्विनिर्जितः
बाल्याद्वा यदि वा मोहान्मां भवांस्त्रातुमर्हति ॥ ५८ ॥ शप्तोऽहमस्मिँल्लोकेश जनन्या तपतां वर। तव प्रसादो नस्त्रातुं ह्येतस्मान्महतो भयात्
॥ ५९ ॥ विवस्वानेवमुक्तस्तु यमं प्रोवाच वै प्रभुः । असंशयं पुत्र महद्भविष्यं तत्र कारणम् ॥ ६० ॥ येन त्वामाविशत्क्रोधो धर्म्मज्ञं सत्यवादिनम्
न शक्यमेतन्मिथ्या तु कर्त्तुं मातुर्वचस्तव ॥ ६१ ॥ कृमयो मांसमादाय यास्यन्ति तु महीं तव। ततः पादं महाप्राज्ञ पुनः संप्राप्स्यसे सुखम् ॥ ६२
कृतमेवं वचः सत्यं मातुस्तव भविष्यति। शापस्य परिहारेण त्वं च त्राता भविष्यसि ॥ ६३ ॥ आदित्यस्त्वब्रवीत् संज्ञां किमर्थं तनयेषु वै
तुल्येष्वप्यधिकः स्नेह एकस्मिन् क्रियते त्वया ॥ ६४ ॥ सा तत्परिहरन्ती वै नाचचक्षे विवस्वतः। आत्मना स समाधाय योगन्तथ्यमपश्यत ॥ ६५
तां शप्तुकामो भगवान् नाशाय कुपितः प्रभुः। सा तत्सर्वं यथातत्त्वमाचचक्षे विवस्वतः ॥ ६६ ॥ विवस्वानथ तच्छ्रुत्वा क्रुद्धस्त्वष्टारमभ्ययात्
त्वष्टा तु तं यथान्यायमर्चयित्वा विभावसुम् ॥ ६७ ॥ निर्द्दग्धुकामं रोषेण सान्त्वयामास वै शनैः। तवातितेजसा युक्तमिदं रूपं न शोभते ॥ ६८
असहन्ती तु तत् संज्ञा वने चरति शाद्वले। द्रक्ष्यते तां भवानद्य स्वां भार्य्यां शुभचारिणीम् ॥ ६९ ॥ श्लाघ्यां यौवनसम्पन्नां योगमास्थाय गोपते
अनुकूलं भवेदेवं यदि स्यात् सम्मतो मतः ॥ ७० ॥ रूपं विवर्त्तयेदन्ते आद्यं श्रेष्ठमरिन्दम। रूपं विवस्वतस्त्वासीत्तिर्य्यगूर्ध्वमधस्तथा ॥ ७१ ॥ तेनास
व्रीडितो देवो रूपेण तु दिवस्पतिः । तस्मात्त्वष्टा स चक्रं तु बहुमेने महातपाः ॥ ७२ ॥ अनुज्ञातस्ततस्त्वष्टा रूपनिर्वर्त्तनाय तु । ततोऽभ्
पगमात्त्वष्टा मार्त्तण्डस्य विवस्वतः ॥ ७३ ॥ भ्रमिमारोप्य तत्तेजः शातयामास तस्य वै। तत्तु निर्भासितन्तेजस्तेजसापहृतेन तु ॥ ७४
कान्तात् कान्ततरं द्रष्टुमशुभं शुशुभे ततः । ददर्श योगमास्थाय स्वाम्भार्य्यां वडवां तथा ॥ ७५ ॥ अदृश्यां सर्वभूतानां तेजसा नियमेन च। अ
रूपेण मार्त्तण्डस्तां मुखे समभावयत् ॥ ७६ ॥ मैथुनाय विचेष्टन्ती परपुंसोपशङ्कया । सा तन्निरधमच्छुक्रं नासिकाभ्यां विवस्वतः ॥ ७७ ॥ देवं
तस्मादजायेतामश्विनौ भिषजां वरौ। नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ॥ ७८ ॥ मार्त्तण्डस्य सुतावेतावष्टमस्य प्रजापतेः। तान्तु रूपेण
कान्तेन दर्शयामास भास्करः ॥ ७९ ॥ सा तं दृष्ट्वा तदा भार्य्या तुतोष च मुमोह च । यमस्तु तेन शापेन भृशम्पीडितमानसः ॥ ८० ॥
धर्म्मेण रञ्जयामास धर्म्मराजस्ततस्तु सः। सोऽलभत् कर्मणा तेन शुभेन परमद्युतिः ॥ ८१ ॥ पितृणामाधिपत्यञ्च लोकपालत्वमेव च
मनुः प्रजापतिश्चैव सावर्णिः स महायशाः ॥ ८२ ॥ भाव्यसौ नागते तस्मिन् मनुः सावर्णिकेऽन्तरे। मेरुपृष्ठे सुरम्ये वै अद्यापि चरत

प्रभुः ॥ ८३ ॥ भ्राता शनैश्चरस्तत्र ग्रहत्वं स तु लब्धवान् । त्वष्टाऽनु तेन रूपेण विष्णोश्चक्रमकल्पयत् । महाऽप्रतिहतं युद्धे दानव प्रतिवारणे ॥ ८४ ॥ यवीयसी तयोर्या तु यमुना च यशस्विनी । अभवत् सा सरिच्छ्रेष्ठा यमुना लोकभाविनी ॥ ८५ ॥ यस्तु ज्येष्ठो महातेजाः सर्गो यस्य तु साम्प्रतम् । विस्तरं तस्य वक्ष्यामि मनोर्वैवस्वतस्य ह ॥ ८६ ॥ इदं तु जन्म देवानां शृणुयाद्वा पठेत वा । वैवस्वतस्य पुत्राणां सप्तानान्तु महौजसाम् । आपदं प्राप्य मुच्येत प्राप्नुयाच्च महद्यशः ॥ ८७ ॥ इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे वरुणवंशवर्णनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ ७ ॥ सूत उवाच ॥ ततो मन्वन्तरेऽतीते चाक्षुषे दैवतैः सह । वैवस्वताय महते पृथिवीराज्यमादिशत् ॥ १ ॥ तस्य वैवस्वतो वक्ष्ये साम्प्रतस्य महात्मनः । आनुपूर्व्येण वै विप्राः कीर्त्त्यमानं निबोधत ॥ २ ॥ मनोर्वैवस्वतस्येह सर्गमादाय साम्प्रतम् । मनोः प्रथमजस्यासन् नवपुत्रास्तु तत्समाः ॥ ३ ॥ इक्ष्वाकुर्नहुषश्चैव धृष्टः शर्यातिरेव च । नरिष्यन्तस्तथा प्रांशुर्नाभागोऽरिष्ट एव च । करूषश्च पृषध्रश्च नवैते मानवाः स्मृताः ॥ ४ ॥ ब्रह्मणा तु मनुः पूर्वं चोदितस्तु निबोधत । स्रष्टुं प्रचक्रमे कामं निष्फलं समवर्त्तत ॥ ५ ॥ अथाकरोत्पुत्रकामः परामिष्टिं प्रजापतिः । मित्रावरुणयोरंशे मनुराहुतिमावपत् ॥ ६ ॥ तत्र दिव्याम्बरधरा दिव्याभरणभूषिता । दिव्यसन्नहना चैव इडा जज्ञे इति श्रुतिः ॥ ७ ॥ तामिलेत्यथ होवाच मनुर्दण्डधरः स्मृतः । अनुगच्छामि भद्रन्ते तमिला प्रत्युवाच ह ॥ ८ ॥ धर्म्मयुक्तमिदं वाच्यं पुत्रकामं प्रजापतिम् । मित्रावरुणयोरंशे जातास्मि वदतां वर ॥ ९ ॥ तयोः सकाशं यास्यामि मा नो धर्मो हतोऽवधीत् । सैवमुक्त्वा पुनर्देवी तयोरन्तिकमागमत् ॥ १० ॥ गत्वान्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत् । अंशेऽस्मिन्युवयोर्जाता देवौ किं करवाणि च ॥ ११ ॥ मनुनैवाहमुक्तास्मि अनुगच्छस्व मामिति । तथा तु वदतीं साध्वीमिडामाश्रित्य तावुभौ ॥ १२ ॥ देवौ च मित्रावरुणाविदं वचनमूचतुः । अनेन तव धर्मज्ञे प्रश्रयेण दमेन च ॥ १३ ॥ सत्येन चैव सुश्रोणि प्रीतौ स्वो वरवर्णिनि । आवयोस्त्वं महाभागे ख्यातिं कन्या प्रयास्यसि ॥ १४ ॥ सुद्युम्न इति विख्यातस्त्रिषु लोकेषु पूजितः । जगत्प्रियो धर्म्मशीलो मनोर्वंशविवर्द्धनः ॥ १५ ॥ मानवः स तु सुद्युम्नः स्त्रीभावमगमत् प्रभुः । सा तु देवी वरं लब्ध्वा निवृत्ता पितरं प्रति ॥ १६ ॥ बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता । सोमपुत्राद्बुधाच्चास्या ऐलो जज्ञे पुरूरवाः ॥ १७ ॥ बुधात् सा जनयित्वा तु सुद्युम्नं पुनरागता । सुद्युम्नस्य च दायादास्त्रयः परमधार्म्मिकाः ॥ १८ ॥ उत्कलश्च गयश्चैव विनताश्वस्तथैव च । उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमम् । दिक्षु वातस्य राजर्षेर्गयस्य तु गया पुरी ॥ १९ ॥ प्रविष्टे मनौ तस्मिन् प्रजाः सृष्ट्वा दिवाकरः । दशधा तद्दधत् क्षेत्रमकरोत् पृथिवीमिमाम् ॥ २० ॥ इक्ष्वाकुरेव दायादानन्यान् दश समाप्नुयात् ।

कन्याभावात्तु सुद्युम्नो नैनं भागमवाप्नुयात् ॥ २१ ॥ वसिष्ठवचनाच्चासीत् प्रतिष्ठानो महाद्युतिः । प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य महात्मनः ॥ २२ ॥ तत् पुरूरवसे प्रादाद्राष्ट्रं प्राप्य महायशाः । मानवेभ्यो महाभागा स्त्रीपुंसोर्लक्षणं प्रति । मानवः स तु सुद्युम्नः स्त्रीभावमगमत् पुनः ॥ २३ ॥ एतच्छ्रुत्वा तु ऋषयः पप्रच्छुस्तदनन्तरम् । मानवः स तु सुद्युम्नः स्त्रीभावमगमत् कथम् ॥ २४ ॥ सूत उवाच ॥ प्रोवाच वचनं देवी प्रियहेतोः प्रियं प्रिया । स मे ममाश्रमे देव यः पुमान् संप्रवेक्ष्यति । भविष्यति ध्रुवं नारी सा तुल्याप्सरसां शुभा ॥ २५ ॥ तत्र सर्वाणि भूतानि पिशाचाः पशवश्च ये । स्त्रीभूताः सह रुद्रेण क्रीडन्त्यप्सरसो यथा ॥ २६ ॥ उमावनं प्रविष्टस्तु स राजा मृगयां गतः । सह पिशाचैर्भूतैस्तु रुद्रैः स्त्रीभावमास्थितः ॥ २७ ॥ तस्मात् स राजा सुद्युम्नः स्त्रीभावं लब्धवान् पुनः । महादेवप्रसादाच्च गाणपत्यमवाप्नुयात् ॥ २८ ॥ इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनोः सृष्टिकथनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ७ ॥ सूत उवाच ॥ निसर्गं मनुपुत्राणां विस्तरेण निबोधत । पृषध्रो हिंसयित्वा तु गुरोर्गांवमभक्षयत् ॥ १ ॥ शापाच्छूद्रत्वमापन्नश्च्यवनस्य महात्मनः । करूषस्य तु कारूषः क्षत्रियो युद्धदुर्मदः ॥ २ ॥ सहस्रक्षत्रियगणविक्रान्तः संबभूव ह । नाभागारिष्टपुत्रस्तु विद्वानासीद्भलन्दनः ॥ ३ ॥ भलन्दनस्य पुत्रोऽभूत् प्रांशुर्नाम महाबलः । प्रांशोरेकोऽभवत् पुत्रः प्रजानिरिति विश्रुतः ॥ ४ ॥ प्रजानेरभवत् पुत्रः खनित्रो नाम वीर्यवान् । तस्य पुत्रोऽभवच्छ्रीमान् क्षुपो नाम महायशाः ॥ ५ ॥ क्षुपस्य विंशः पुत्रस्तु प्रतिमा न बभूव ह । विंशपुत्रस्तु कल्याणो विविंशो नाम धार्मिकः ॥ ६ ॥ विविंशपुत्रो धर्मात्मा खनिनेत्रः प्रतापवान् । करन्धमस्तस्य पुत्रस्त्रेतायुगमुखेऽभवत् ॥ ७ ॥ करन्धमसुतश्चापि आविक्षिन्नाम वीर्यवान् । आविक्षितो व्यतिक्रामत् पितरं गुणवत्तया ॥ ८ ॥ मरुत्तो नाम धर्मात्मा चक्रवर्त्तिसमो नृपः । संवर्त्तेन दिवं नीतः ससुहृत् सह बान्धवैः ॥ ९ ॥ विवादोऽत्र महानासीत् संवर्त्तस्य बृहस्पतेः । ऋद्धिं दृष्ट्वा तु यज्ञस्य क्रुद्धस्तस्य बृहस्पतिः ॥ १० ॥ संवर्त्तेन हृते यज्ञे चुकोप सुभृशन्तदा । लोकानां स हि नाशाय देवतैर्हि प्रसादितः ॥ ११ ॥ मरुत्तश्चक्रवर्त्ती स नरिष्यन्तमवाप्तवान् । नरिष्यन्तस्य दायादो राजा दण्डधरो दमः ॥ १२ ॥ तस्य पुत्रस्तु विक्रान्तो राजासीद्राष्ट्रवर्द्धनः । सुधृती तस्य पुत्रस्तु नरः सुधृतिनः सुतः ॥ १३ ॥ केवलस्तस्य पुत्रस्तु वन्धुमान् केवलात्मजः । अथ वन्धुमतः पुत्रो धर्मात्मा वेगवान् नृपः ॥ १४ ॥ बुधो वेगवतः पुत्रस्तृणविन्दुर्बुधात्मजः । त्रेतायुगमुखे राजा तृतीये संबभूव ह ॥ १५ ॥ कन्या तु तस्य द्रविडा माता विश्रवसो हि सा । पुत्रश्चास्य विशालोऽभूद् राजा परमधार्मिकः ॥ १६ ॥ विशालस्य समुत्पन्ना विशाला नयनिर्मिता । विशालस्य सुतो राजा हेमचन्द्रो महाबलः ॥ १७ ॥

सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरम् । सुचन्द्रतनयो राजा धूम्राश्व इति विश्रुतः ॥ १८ ॥ धूम्राश्वतनयो विद्वान् सृञ्जयः समपद्यत । सृञ्जयस्य सुतः
श्रीमान् सहदेवः प्रतापवान् ॥ १९ ॥ कृशाश्वः सहदेवस्य पुत्रः परमधार्मिकः । कृशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् ॥ २० ॥ सोमदत्तस्य
राजर्षेः सुतोभूज्जनमेजयः । जनमेजयात्मजश्चैव प्रमतिर्नाम विश्रुतः ॥ २१ ॥ तृणबिन्दुप्रसादेन सर्वे वैशालका नृपाः । दीर्घायुषो महात्मानो वीर्य
वन्तः सुधार्मिकाः ॥ २२ ॥ शर्यातेर्मिथुनं त्वासीदानार्तो नाम विश्रुतः । पुत्रः सुकन्या कन्या च भार्या या च्यवनस्य तु ॥ २३ ॥ आनार्त्तस्य
तु दायादो रेवो नाम्ना तु वीर्यवान् । आनर्त्तो विषयो यस्य पुरी चापि कुशस्थली ॥ २४ ॥ रेवस्य रैवतः पुत्रः ककुद्मी नाम धार्मिकः ।
ज्येष्ठो भ्रातृशतस्यासीद्राजा प्राप्य कुशस्थलीम् ॥ २५ ॥ कन्यया सह श्रुत्वा च गन्धर्वं ब्रह्मणोऽन्तिके । मुहूर्त्तं देवदेवस्य मार्त्यं बहुयुगं विभोः
॥ २६ ॥ आजगाम युवा चैव स्वां पुरीं यादवैर्वृताम् । कृतां द्वारवतीं नाम बहुद्वारां मनोरमाम् ॥ २७ ॥ भोजवृष्ण्यन्धकैर्गुप्तां वसुदेवपुरोगमैः ।
ताङ्कथां रैवतः श्रुत्वा यथातत्त्वमरिन्दमः ॥ २८ ॥ कन्या तु बलदेवाय सुव्रतां नाम रेवतीम् । दत्त्वा जगाम शिखरं मेरोस्तपसि संस्थितः ॥ २९ ॥
रेमे रामश्च धर्मात्मा रेवत्या सहितः किल । तां कथामृषयः श्रुत्वा पप्रच्छुस्तदनन्तरम् ॥ ३० ॥ ऋषय ऊचुः ॥ कथं बहुयुगे काले व्यतीते
सूतनन्दन । न जरां रेवती प्राप्ता पलितञ्च कुतः प्रभो ॥ ३१ ॥ मेरुं गतस्य वा तस्य शर्यातेः सन्ततिः कथम् । स्थिता पृथिव्यामद्यापि
श्रोतुमिच्छामि तत्त्वतः ॥ ३२ ॥ कियन्तो वा सुरगणा गन्धर्वास्तत्र कीदृशाः । यच्छ्रुत्वा रैवतः कालान् मुहूर्त्तमिव मन्यते ॥ ३३ ॥ सूत
उवाच ॥ न जरा क्षुत्पिपासा वा न च मृत्युभयं ततः । न च रोगः प्रभवति ब्रह्मलोकगतस्य हि ॥ ३४ ॥ गान्धर्वं प्रति यच्चापि पृष्टस्तु मुनिस
त्तमाः । ततोऽहं संप्रवक्ष्यामि याथातथ्येन सुव्रताः ॥ ३५ ॥ सप्त स्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेकविंशतिः । तालाश्चैकोनपञ्चाशदित्येतत् स्वरमण्ड
लम् ॥ ३६ ॥ षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा । धैवतश्चापि विज्ञेयस्तथा चापि निषादवान् ॥ ३७ ॥ सौवीरी मध्यमग्रामो हारिणास्या तथैव
च । स्यात्कलोपवलोपेता चतुर्थी शुद्धमध्यमा ॥ ३८ ॥ शार्ङ्गी च पावनी चैव दृष्टाका च यथाक्रमम् । मध्यमग्रामिकाः ख्याताः षड्जग्रामं
निबोधत ॥ ३९ ॥ उत्तरमन्द्रा रजनी तथा या चोत्तरायता । शुद्धषड्जा तथा चैव जानीयात् सप्तमां च ताम् ॥ ४० ॥ गान्धारग्रामि
कांश्चान्यान् कीर्त्यमानान् निबोधत । आग्निष्टोमिकमाद्यन्तु द्वितीयं वाजपेयिकम् ॥ ४१ ॥ तृतीयं पौण्ड्रकं प्रोक्तं चतुर्थं चाश्वमेधिकम् । पञ्चमं
राजसूयं च षष्ठं चक्रसुवर्णकम् ॥ ४२ ॥ सप्तमं गोसवं नाम महावृष्टिकमष्टमम् । ब्रह्मदानञ्च नवमं प्राजापत्यमनन्तरम् ॥ ४३ ॥ नागपक्षाश्रयं

विद्याद्गोतरञ्च तथैव च । हयक्रान्तं मृगक्रान्तं विष्णुक्रान्तं मनोहरम् ॥ ४४ ॥ सूर्य्यकान्तं वरेण्यञ्च मत्तकोकिलवादिनम् । सावित्रमर्द्धसावित्रं सर्व्वतो मद्रमेव च ॥ ४५ ॥ सुवर्णञ्च सुतन्द्रञ्च विष्णुवैष्णुवरावुभौ । सागरं विजयञ्चैव सर्वभूतमनोहरम् ॥ ४६ ॥ हंसं ज्येष्ठं विजानीमस्तुम्बुरुप्रियमेव च । मनोहरमधात्यञ्च गन्धर्वानुगतश्च यः ॥ ४७ ॥ अलम्बुषेष्टश्च तथा नारदप्रिय एव च । कथितो भीमसेनेन नागराणां यथा प्रियः ॥ ४८ ॥ करोपनीत विनता श्रीराख्यो भार्गवप्रियः । विंशतिर्मध्यमग्रामः षड्जग्रामश्चतुर्दश ॥ ४९ ॥ तथा पञ्चदशेच्छन्ति गान्धारग्रामसंस्थितान् । ससौवीरा तु गान्धारी ब्रह्मणा ह्युपगीयते ॥ ५० ॥ उत्तरादिस्वरस्यैव ब्रह्मा वै देवताऽत्र च । हरिदेशसमुत्पन्ना हरिणास्या व्यजायत । मूर्च्छना हरिणास्यैव अस्या इन्द्रो ऽधिदैवतम् ॥ ५१ ॥ करोपनीतविततो मरुद्भिः स्वरमण्डले । सा कलोपनता तस्मान्मारुतश्चात्र दैवतम् ॥ ५२ ॥ मनुदेशसमुत्पन्ना मूर्च्छना शुद्धमध्यमा । मध्यमोऽत्र स्वरः शुद्धो गन्धर्व्वश्चात्र देवता ॥ ५३ ॥ मृगैः सह सञ्चरते सिद्धानां मार्गदर्शने । यस्मात्तस्मात् स्मृता मार्गी मृगेन्द्रो ऽस्याश्च देवता ॥ ५४ ॥ सा चाश्रमसमायुक्ता अनेकान् पौरवान् रवान् । मूर्च्छना योजना ह्येषा रजसा रजनी ततः ॥ ५५ ॥ ताल उत्तरमन्द्रांशः षड्जदैवतकां विदुः । तस्मादुत्तरतालञ्च प्रथमं स्वायतं विदुः । तस्मादुत्तरमन्द्रोऽयं देवतास्य ध्रुवो ध्रुवम् ॥ ५६ ॥ अपानादुत्तरत्वाच्च धैवतस्योत्तरायणः । स्यादियं मूर्च्छना ह्येवं पितरः श्राद्धदेवताः ॥ ५७ ॥ शुद्धषड्जस्वरं कृत्वा यस्मादग्निं महर्षयः । उपतिष्ठन्ति तस्मात्तं जानीयाच्छुद्धषड्जिकम् ॥ ५८ ॥ यः सतां मूर्च्छनां कृत्वा पञ्चमस्वरको भवेत् । यक्षीणां मूर्च्छना सा तु याक्षिका मूर्च्छना स्मृता ॥ ५९ ॥ नागदृष्टिर्विषा गीता नोपसर्पन्ति मूर्च्छनाम् । भवन्तीव हता ह्येते ब्रह्मणा नागदेवताः । अहीनां मूर्च्छना ह्येषा वरुणश्चात्र देवता ॥ ६० ॥ शकुन्तकानां कृत्वा च उपमां यान्ति किन्नराः । उत्तमां मूर्च्छना तस्मात् पक्षिराजोऽत्र देवता ॥६१॥ गान्धाररागशब्देन गां च धारयतेऽर्थतः । तस्माद्विशुद्धगान्धारी गन्धर्वश्चाधिदैवतम् ॥ ६२ ॥ गान्धारानन्तरं गत्वा सृष्टेयं मूर्च्छना यतः । तस्मादुत्तरगान्धारी वसवश्चात्र देवताः ॥ ६३ ॥ सेयं खलु महाभूता पितामहमुपस्थिता । षड्जेयं मूर्च्छना तस्मात् स्मृता ह्यनलदेवता ॥ ६४ ॥ दिव्येयं चायता तेन मन्दपष्ठा च मूर्च्छने । निवृत्तगुणनामानं पञ्चमश्चात्र धैवतम् ॥ ६५ ॥ पूर्णाः सप्तस्वरा ह्येवं मूर्च्छनाः संप्रकीर्त्तिताः । नानासाधारणाश्चैव षडेवानुविदस्तथा ॥ ६६ ॥ इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनुवंशगान्धर्व्वमूर्च्छनालक्षणकथनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ७ ॥ पूर्व्वाचार्य्यमतं बुद्धा प्रवक्ष्याम्यनुपूर्व्वशः । त्रिंशतं वै अलङ्कारांस्तान् मे निगदतः शृणु ॥ १ ॥ अलङ्कारास्तु वक्तव्याः स्वैःस्वैर्वर्णैः प्रहेतवः । संस्थानयोगैश्च तथा पादानां चान्ववेक्षया ॥२॥ वाक्यार्थपदयोगार्थैरलङ्कारस्य

पूरणम् । पदानि गीतकस्याहुः पुरस्तात् पृष्ठतोऽथवा ॥ ३ ॥ स्थानानि त्रीणि जानीयादुरःकण्ठशिरस्तथा । एतेषु त्रिषु स्थानेषु प्रवृत्तो विधिरु
त्तमः ॥ ४ ॥ चत्वारः प्रकृतो वर्णाः प्रविचारश्चतुर्विधः । विकल्पमष्टधा चैव देवाः षोडशधा विदुः ॥ ५ ॥ स्थायी वर्णः प्रसंचारी तृतीयमवरोहणम् ।
आरोहणं चतुर्थन्तु वर्णं वर्णविदो विदुः ॥ ६ ॥ तत्रैकः संचरस्थायी सचरास्तचरीभवन् । अथ रोहणवर्णानामवरोहं विनिर्दिशेत् ॥ ७ ॥ आरोहणेन
चारोहवर्णं वर्णविदो विदुः । एतेषामेव वर्णानामलङ्कारान्निबोधत ॥ ८ ॥ अलङ्कारास्तु चत्वारः स्थापनी क्रमरेजिनः । प्रमादश्चाप्रमादश्च तेषां
वक्ष्यामि लक्षणम् ॥ ९ ॥ विस्वरोऽष्टकलाश्चैव स्थानादेकान्तरं गताः । आवर्त्तस्याक्रमोत्पत्ती द्वे कार्य्ये परिमाणतः ॥ १० ॥ कुमारमपरं विद्याद्विस्तरं
वमनं गतम् । एष वै चाप्यपाङ्गस्तु कृतारेकः कलाधिकः ॥ ११ ॥ इयेनस्त्वेकान्तरे जातः कलामात्रान्तरे स्थितः । तस्मिंश्चैव स्वरे वृद्धिस्तिष्ठते
तद्विलक्षणा ॥१२॥ इयेनस्तु अपरोहस्तु उत्तरः परिकीर्तितः । कलाकलप्रमाणाश्च स बिन्दुर्नाम जायते ॥१३॥ बिन्दुरेककला कार्या वर्णान्तस्थायिनी
भवेत् । विपर्ययस्वरोऽपि स्याद्यस्य दुर्घटितोऽपि न ॥१४ ॥ एकान्तरा तु याथन्तु षड्जतः परमः स्वरः । आक्षेपास्कन्दनं कार्य्यं काकस्येवाक्षपुष्क
लम् ॥ १५ ॥ सन्तारौ तौ तु सञ्चार्यौ कार्य वा कारणं तथा । आक्षिप्तमवरोहापि मोक्षमप्यन्तथैव च ॥ १६ ॥ द्वादशश्च कलास्थानमेकान्तरगतन्ततः ।
प्रेङ्खोलितमलङ्कारमेवं स्वरसमन्वितम् ॥ १७ ॥ स्वरसंक्रामकाश्चैव ततः प्रोक्तन्तु पुष्कलम् । प्रक्षिप्तमेव कलया पादानीतरयोर्भवेत् ॥ १८ ॥ द्विकलं वा
यथा भूतं यत्तद् हासितमुच्यते । उच्चाराद्विस्वरारूढा तथा चाष्टस्वरान्तरम् ॥ १९ ॥ यस्तु स्यादवरोहो वा तारतो मन्द्रतोऽपि वा । एकान्तरहिता स्रोते
तमेव स्वरमन्ततः ॥ २० ॥ मक्षिप्रच्छेदनो नाम चतुष्कलगणः स्मृतः । अलङ्कारा भवन्त्येते त्रिंशद्वै वै प्रकीर्त्तिताः । वर्णस्थानप्रयोगेण कलामात्रा
प्रमाणतः ॥२१॥ संस्थानञ्च प्रमाणं च विकारो लक्षणन्तथा । चतुर्विधमिदं ज्ञेयमलङ्कारप्रयोजनम् ॥२२॥ यथात्मनो ह्यलङ्कारो विपर्यस्तोऽतिगर्हितः ।
वर्णमेवाप्यलंकर्त्तुं विषमं ह्यात्मसम्भवात् ॥२३॥ नानाभरणसंयोगाद्यथा नार्या विभूषणम् । वर्णस्य चैवालङ्कारो विपर्यस्तोऽतिगर्हितः ॥ २४ ॥ न पादे
कुण्डले दृष्टे न कण्ठे रसना यथा । एवमेव ह्यलङ्कारो विपर्यस्तो विगर्हितः ॥ २५ ॥ क्रियमाणोऽप्यलङ्कारो रागं यश्चैव दर्शयेत् । यथोद्दिष्टस्य
मार्गस्य कर्त्तव्यस्य विधीयते ॥ २६ ॥ लक्षणं पर्य्यवस्थापि वर्णिकाभिः प्रवर्त्तनम् । याथातथ्येन वक्ष्यामि मासोद्भवमुखोद्भवे ॥ २७ ॥ त्रयोविंशत्य
शीतिस्तु तेषामेतद्विपर्ययः । षड्जपक्षोऽपि तत्त्वादौ मध्यो हीनस्वरो भवेत् ॥ २८ ॥ षड्जमध्यमयोश्चैव ग्रामयोः पर्य्यपस्तथा । मानोयोत्तरम
न्द्रस्य षडेवात्राविकस्य च ॥ २९ ॥ स्वरालंप्रत्ययश्चैव सर्व्वेषां प्रत्ययः स्मृतः । अनुगम्य बहिर्गीतं विज्ञातं पञ्चदैवतम् ॥३०॥ गोरूपाणां पुरस्तात्तु

मध्यमांशस्तु पर्य्ययः । तयोर्विभागो गीतानां लावण्यमार्गसंस्थितः ॥ २१ ॥ अनुपङ्गं मयोद्दिष्टं स्वसारञ्च स्वरान्तरम् । पर्य्ययः सं
सप्तस्वरपदक्रमम् ॥ ३२ ॥ गान्धारांशेन गीयन्ते चत्वारि मन्द्रकाणि च । पञ्चमो मध्यमश्चैव धैवते तु निषादजैः । षड्जर्षभैश्च जानीमो मन्द्र
नान्तरे ॥ ३३ ॥ द्वे चापरान्तिके विद्याद्धयशुद्धाष्टकस्य तु । प्राकृते वैणवेश्चैव गान्धारांशे प्रयुज्यते ॥ ३४ ॥ पदस्य तु त्रयं रूपं सप्त
कौशिकम् । गान्धारांशेन कार्त्स्न्येन पर्य्ययस्य विधिः स्मृतः । एवञ्चैव क्रमोद्दिष्टो मध्यमांशस्य मध्यमः ॥ ३५ ॥ यानि गीतानि प्रोक्तानि रू
विशेषतः । तत्तु सप्तस्वरं कार्य्यं सप्तरूपञ्च कौशिकम् ॥ ३६ ॥ अङ्गदर्शनमित्याहुर्माने द्वे समके तथा । द्वितीयभावाचरणा मात्रा नां
स्थिता ॥ ३७ ॥ उत्तरे च प्रकृत्येवं मात्रा तल्लीयते तथा । हन्तारः पिण्डको यत्र मात्रायां नातिवर्त्तते ॥ ३८ ॥ पादेनैकेन मात्रायां पादोः
वीरणा । संख्यायाश्चोपहननं तत्र यानमिति स्मृतम् ॥ ३९ ॥ द्वितीयं पादभङ्गञ्च ग्रहेणाभिप्रतिष्ठितम् । पूर्व्वमष्टतृतीये तु द्वितीयं चाप
॥ ४० ॥ अर्द्धेन पादसाम्यस्य पादभागाच्च पञ्चके । पादभागं सपादं तु प्रकृत्यामपि संस्थितम् ॥ ४१ ॥ चतुर्थमुत्तरे चैव मद्रवत्यां च मद्रके ।
दक्षिणस्यापि यथोक्ता वर्त्तते कला ॥ ४२ ॥ पूर्व्वमेवानुयोगन्तु द्वितीया वुद्धिरिष्यते । पादौ चाहरणं चास्मात् पारं नात्र विधीयते ॥
एकत्वमुपयोगस्य द्वयोर्यद्विं द्विजोत्तम । अनेकसमवायस्तु पताकाहरिणं स्मृतम् ॥ ४४ ॥ तिसृणां चैव वृत्तीनां वृत्तौ वृत्ता च दक्षिणा ।
तु समवायास्ते सौवीरा मूर्च्छना तथा । कुशस्यत्वुत्तरः सत्यं सप्त सप्तस्वरं तु यः ॥ ४५ ॥ इति श्रीमहापुराणे वायुप्रोक्ते गीतालङ्कार
नाम पंचविंशोऽध्यायः ॥ २५ ॥ ७ ॥ सूत उवाच ॥ ककुद्मिनस्तु तं लोकं रैवतस्य गतस्य ह । हताः पुण्यजनैः सर्व्वा राक्षसै
कुशस्थली ॥ १ ॥ तद्वै भ्रातृशतं तस्य धार्म्मिकस्य महात्मनः । निवध्यमाना रक्षोभिर्दिशः संप्राद्रवन् भयात् ॥ २ ॥ तेषान्तु ते
क्रान्ताः क्षत्रियास्तत्र तत्र हि । अन्ववायस्तु सुमहान् महांस्तत्र द्विजोत्तमाः ॥ ३ ॥ प्रयता इति विख्याता दिक्षु सर्व्वासु धार्म्मिकाः ।
धार्ष्टकं क्षत्रं रणधृष्टं बभूव ह ॥ ४ ॥ त्रिसाहस्रन्तु सगणं क्षत्रियाणां महात्मनाम् । नभगस्य च दायादो नाभागो नाम वीर्य्यवान् ॥ ५ ॥
रीषस्तु नाभागिर्विरूपस्तस्य चात्मजः । पृषदश्वो विरूपस्य तस्य पुत्रो रथीतरः ॥ ६ ॥ एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः । रथीत
प्रवराः क्षात्रोपेता द्विजातयः ॥ ७ ॥ क्षुवतस्तु मनोः पूर्व्वमिक्ष्वाकुरभिनिःसृतः । तस्य पुत्रशतं त्वासीदिक्ष्वाकोर्भूरिदक्षिणम् ॥ ८ ॥
ज्येष्ठो विकुक्षिश्च नेमिर्दण्डश्च ते त्रयः । शकुनिप्रमुखास्तस्य पुत्राः पंचाशतस्तु ते ॥ ९ ॥ उत्तरापथदेशस्य रक्षितारो महीक्षितः ।

रिंशत्तथाष्टौ च दक्षिणस्याञ्च ते दिशि ॥ १० ॥ विंशतिप्रमुखास्ते तु दक्षिणापथरक्षिणः । इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशेत् ॥ ११ ॥
राजोवाच ॥ मांसमानय श्राद्धेयं मृगान् हत्वा महाबल । श्राद्धमद्य तु कर्तव्यमष्टकायां न संशयः ॥ १२ ॥ स गतस्तु मृगव्यां वै वचनात्तस्य
धीमतः । मृगान् सहस्रशो हत्वा परिश्रान्तश्च वीर्य्यवान् । भक्षयच्छशकन्तत्र विकुक्षिर्मृगयाङ्गतः ॥ १३ ॥ आगते स विकुक्षौ तु समांसे सहसैनिके ।
वसिष्ठश्चोदयामास मांसं प्रोक्षयतामिति ॥ १४ ॥ तथेति चोदितो राज्ञा विधिवत्समुपस्थितः । स दृष्ट्वोपहतं मांसं क्रुद्धो राजानमब्रवीत् ॥ १५ ॥
शूद्रेणोपहतं मांसं पुत्रेण तव पार्थिव । शशभक्षादभोज्यं वै तव मांसं महाद्युते ॥ १६ ॥ शशो दुरात्मना पूर्वमरण्ये भक्षितोऽनघ । तेन मांसमिदं दुष्टं
पितॄणां नृपसत्तम ॥ १७ ॥ इक्ष्वाकुस्तु ततः क्रुद्धो विकुक्षिमिदमब्रवीत् । पितृकर्म्मणि निर्दिष्टो मया त्वं मृगयाङ्गतः । शशं भक्षयसेऽरण्ये निर्घृणः
पूर्व्वमद्य नु ॥ १८ ॥ तस्मात्परित्यजामि त्वां गच्छ त्वं स्वेन कर्म्मणा । एवमिक्ष्वाकुना त्यक्तो वसिष्ठवचनात् सुतः ॥ १९ ॥ इक्ष्वाकौ संस्थिते
तस्मिञ्छशी स पृथिवीमिमाम् । प्राप्तः परमधर्म्मात्मा स चायोध्याधिपोऽभवत् ॥२०॥ तदाकरोत्स राज्यं वै वसिष्ठपरिनोदितः । ततः स्तेनेन सा पूर्णा
राज्यावस्था महीपतेः ॥२१॥ कालेन गतवांस्तत्र स च न्यूनतराङ्गतिम् । ज्ञात्वैवमेतदाख्यानं ना विधिर्भक्षयेत्तु वै ॥ २२ ॥ मां स भक्षयितामुत्र
यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ २३ ॥ शशादस्य तु दायादः ककुत्स्थो नाम वीर्य्यवान् । इन्द्रस्य वृषभूतस्य
ककुत्स्थो जायते पुरा ॥ २४ ॥ पूर्व्वमार्डीवके युद्धे ककुत्स्थस्तेन स स्मृतः । अनेनास्तु ककुत्स्थस्य पृथुरोमा च स स्मृतः ॥ २५ ॥ वृषदश्वः पृथोः
पुत्रस्तस्मादन्ध्रस्तु वीर्य्यवान् । आन्ध्रस्तु यवनाश्वस्तु श्रावस्तस्तस्य चात्मजः ॥ २६॥ जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता । श्रावस्तस्य
तु दायादो बृहदश्वो महायशाः ॥ २७ ॥ बृहदश्वसुतश्चापि कुवलाश्व इति श्रुतिः । यः स धुन्धुवधाद्राजा धुन्धुमारत्वमागतः ॥ २८ ॥ ऋषय ऊचुः ॥
धुन्धुवधं महाप्राज्ञ श्रोतुमिच्छामि विस्तरात् । यदर्थं कुवलाश्वः स धुन्धुमारत्वमागतः ॥ २९ ॥ सूत उवाच ॥ बृहदश्वस्य पुत्राणां सह
स्राण्येकविंशतिः । सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ॥ ३० ॥ बभूवुर्धार्मिकाः सर्वे यज्वानो भूरिदक्षिणाः । कुवलाश्वं महावीर्यं शूरमुत्तमधार्मि
कम् ॥ ३१ ॥ बृहदश्वोऽभ्यषिञ्चत्तं तस्मिन् राष्ट्रे नराधिपः । पुत्रसंक्रामितश्रीस्तु वनं राजा विवेश ह ॥ ३२ ॥ बृहदश्वं महाराजं शूरमुत्तमधार्म्मिकम् ।
प्रयातं तमुत्तङ्कस्तु ब्रह्मर्षिः प्रत्यवारयत् ॥ ३३ ॥ उत्तङ्क उवाच ॥ भवतो रक्षणं कार्य्यं तत्तावत् कर्तुमर्हति । निरुद्विग्नस्तपः कर्तुं न हि शक्नोमि पा
र्थिव ॥ ३४ ॥ ममाश्रमसमीपेषु समेषु मरुधन्वसु । समुद्रो वालुकापूर्णस्तत्र तिष्ठति भूपते ॥ ३५ ॥ देवतानामवध्यस्तु महाकायो महाबलः । अन्तर्भूमि

जुहोति स कालेऽग्निं तां जरान्नाभिकामये ॥ ५१ ॥ ययातिरुवाच ॥ यस्त्वं मे हृदयाज्जातो वयः स्वन्न प्रयच्छसि । जरादोषस्त्वयोक्तो
मात्ते ऽतिपत्स्यते ॥ ५२ ॥ प्रजा च यौवनं प्राप्ता विनशिष्यत्यतस्तव । अग्निप्रस्कन्दनपरस्त्वं चाप्येव भविष्यसि ॥ ५३ ॥ पूरो त्वं प्रतिपद्य
प्मानञ्जरया सह । जरावली च मान्तात पलितानि च पर्यगुः ॥ ५४ ॥ काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने । कञ्चित्कालञ्जरेयं
पयान् वयसा तव ॥ ५५ ॥ पूर्णे वर्षसहस्रे ते प्रतिदास्यामि यौवनम् । स्वञ्चैव प्रतिपत्स्यामि पाप्मानञ्जरया सह ॥ ५६ ॥ सूत उवाच ॥ एवमु
युवाच पुत्रः पितरमञ्जसा । यथानुमन्यसे तात करिष्यामि तथैव च ॥ ५७ ॥ प्रतिपत्स्यामि ते राजन् पाप्मानं जरया सह । गृहाण यौ
श्वर कामान् यथेप्सितान् ॥ ५८ ॥ जरयाहं प्रतिच्छन्नो वयोरूपधरस्तव । यौवनं भवते दत्त्वा चरिष्यामि यथार्थवत् ॥ ५९ ॥ ययातिरुवाच
प्रीतोऽस्मि भद्रन्ते प्रीतश्चेदं ददामि ते । सर्वकामसमृद्धा तं प्रजा राज्ये भविष्यति ॥ ६० ॥ सूत उवाच ॥ पूरोरनुमतो राजा ययाति
जरान्ततः । संक्रामयामास तदा प्रसादाद्भार्गवस्य तु ॥ ६१ ॥ यौवनेनाथ वयसा ययातिर्नहुषात्मजः । प्रीतियुक्तो नरश्रेष्ठश्चचार विषया
कान् ॥ ६२ ॥ यथाकामं यथोत्साहं यथाकालं यथासुखम् । धर्म्माविरोधाद्राजेन्द्रो यथार्हति स एव हि ॥ ६३ ॥ देवानतर्पयद्यज्ञैः पितॄञ्श्राद्धै
च । दीनांश्चानुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ॥ ६४ ॥ अतिथीनन्नपानैश्च वैश्यांश्च परिपालनैः । आनृशंस्येन शूद्रांश्च दस्यून् संनिग्रहेण
६५ ॥ धर्म्मेण च प्रजाः सर्व्वा यथावदनुरञ्जयन् । ययातिः पालयामास साक्षादिन्द्र इवापरः ॥ ६६ ॥ स राजा सिंहविक्रान्तो युवा विषयगोचर
विरोधेन धर्मस्य चचार सुखमुत्तमम् ॥ ६७ ॥ स मार्गमाणः कामानामन्तदोषनिदर्शनात् । विश्वसहेतो रेमे वै वैभ्राजे नन्दने वने ॥ ६८ ॥
त्स यदा तां वै वर्द्धमानां नृपस्तदा । गत्वा पूरोः सकाशं वै स्वां जरां प्रत्यपद्यत ॥६९॥ स सम्प्राप्य तु तान् कामांस्तृप्तः खिन्नश्च पार्थिवः । क
सहस्रं वै सस्मार मनुजाधिपः ॥७०॥ परिसङ्ख्याय कालञ्च कलाकाष्ठास्तथैव च । पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ॥७१॥ यथासुखं यथोत्स
थाकालमरिंदम । सेविता विषयाः पुत्र यौवनेन मया तव ॥ ७२ ॥ पूरो प्रीतोऽस्मि भद्रं ते गृहाण त्वं स्वयौवनम् । राज्यञ्च त्वं गृहाणेदं त्वं हि मे
सुतः ॥७३॥ प्रतिपेदे जरां राजा ययातिर्नहुषात्मजः । यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मनः ॥७४॥ अभिषेक्तुकामञ्च नृपं पूरुं पुत्रं कनीयस
ह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥७५॥ कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो । ज्येष्ठं यदुमतिक्रम्य पूरो राज्यं प्रदास्यसि ॥ ७६ ॥ यदु
तव सुतो जातस्तमनु तुर्वसुः । शर्मिष्ठायाः सुतो द्रुह्युस्ततोऽनुः पूरुरेव च ॥७७॥ कथं ज्येष्ठानतिक्रम्य कनीयान् राज्यमर्हति । अतः सम्बोधयामि

धर्म्मं समनुपालय ॥ ७८ ॥ ययातिरुवाच ॥ ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः । ज्येष्ठं प्रति यथा राष्ट्रं न देयं मे कथञ्चन ॥ ७९ ॥ माता
पित्रोर्वचनकृत्तस हि पुत्रः प्रशस्यते । मम ज्येष्ठेन यदुना नियोगो नानुपालितः ॥ ८० ॥ प्रतिकूलं पितुर्यश्च न स पुत्रः सतां मतः । स पुत्रः पुत्रवद्
यश्च वर्त्तते पितृमातृषु ॥ ८१ ॥ यदुनाहमवज्ञातस्तथा तुर्वसुनापि च । द्रुह्युणा चानुना चैवमप्यवज्ञा कृता भृशम् ॥ ८२ ॥ पूरुणा तु कृतं वाक्यं
मानितश्च विशेषतः । कनीयान् मम दायादो जरा येन धृता मम । सर्वकामः सर्वकृतः पूरुणा पुत्रकारिणा ॥ ८३ ॥ शुक्रेण च वरो दत्तः काव्ये
नोशनसा स्वयम् । पुत्रो यस्त्वानुवर्त्तेत स राजा ते महामते ॥८४॥ भवतोऽनुमतोप्येवं पूरू राष्ट्रेऽभिषिच्यताम् । यः पुत्रो गुणसम्पन्नो मातापित्रोर्हितः
सदा । सर्वमर्हति कल्याणं कनीयानपि स प्रभुः ॥ ८५ ॥ अर्हः पूरुरिदं राष्ट्रं यः प्रियः प्रियकृत्तव । वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् ॥ ८६ ॥
पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा । अभिषिच्य ततः पूरुं स्वराष्ट्रे सुतमात्मनः ॥ ८७ ॥ दिशि दक्षिणपूर्वस्यां तुर्वसुं तु न्यवेशयत् । दक्षि
णापरतो राजा यदुं श्रेष्ठं न्यवेशयत् ॥ ८८ ॥ प्रतीच्यामुत्तरस्याञ्च द्रुह्युञ्चानुञ्च तावुभौ । सप्तद्वीपां ययातिस्तु जित्वा पृथ्वीं ससागराम् । व्यभजत्
पञ्चधा राजा पुत्रेभ्यो नाहुषस्तदा ॥ ८९ ॥ तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना । यथाप्रदेशं धर्मज्ञैर्धर्म्मेण प्रतिपाल्यते ॥ ९० ॥ एवं विसृज्य
पृथिवीं पुत्रेभ्यो नाहुषस्तदा । पुत्रसंक्रामितश्रीस्तु प्रीतिमानभवन्नृपः ॥ ९१ ॥ धनुर्न्यस्य पृपत्कांश्च राज्यञ्चैव सुतेषु तु । प्रीतिमानभवद्राजा भार
मावेश्य बन्धुषु ॥ ९२ ॥ अत्र गाथा महाराज्ञा पुरा गीता ययातिना । योऽभिप्रेत्याहरन् कामान् कूर्मोऽङ्गानीव सर्वशः ॥ ९३ ॥ न जातु कामः कामा
नामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ ९४ ॥ यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति
पश्यन्न मुह्यति ॥ ९५ ॥ यदा तु कुरुते भावं सर्व्वभूतेषु पावकम् । कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ ९६ ॥ यदा परान्न बिभेति यदा
त्वस्मान्न बिभ्यति । यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ॥ ९७ ॥ या दुस्त्यजा दुर्म्मतिभिर्या न जीर्यति जीर्य्यतः । दोषाप्राणान्तिको रागस्तां
तृष्णान्त्यजतः सुखम् ॥९८॥ जीर्य्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः । जीविताशा धनाशा च जीर्य्यतोपि न जीर्यति ॥ ९९ ॥ यच्चाकामसुखं
लोके यच्च दिव्यं महत् सुखम् । तृष्णास्य च सुखस्यैव कलां नार्हति षोडशीम् ॥१००॥ एवमुक्त्वा स राजर्षिः सदारः प्रस्थितो वनम् । भृगुतुङ्गे तपस्तप्त्वा
तत्रैव च महायशाः । पालयित्वा व्रतशतं तत्रैव स्वर्गमाप्नुयात् ॥ १०१ ॥ तस्य वंशास्तु पञ्चैते पुण्या देवर्षिसत्कृताः । यैर्व्याप्ता पृथिवी कृत्स्ना सूर्यस्येव
गभस्तिभिः ॥१०२॥ धन्यः प्रजावानायुष्मान् कीर्तिमांश्च भवेन्नरः । ययातेश्चरितं सर्वं पठञ्छृण्वन् द्विजोत्तमः॥१०३॥इति श्रीमहापुराणे वायुप्रोक्ते चन्द्र

वंशकीर्त्तनं नामैकत्रिंशोऽध्यायः ॥३१॥ छ॥ सूर्य उवाच ॥ यदोर्वंशं प्रवक्ष्यामि श्रेष्ठस्योत्तमतेजसः। विस्तरेणानुपूर्व्येण गदतो मे निबोधत
पुत्रा बभूवुर्हि पञ्च देवसुतोपमाः। सहस्रजिदथ श्रेष्ठः क्रोष्टुर्नीलो जितो लघुः ॥ २ ॥ सहस्रजित्सुतः श्रीमाञ्छतजिन्नाम पार्थिवः। शताजित
तास्त्रयः परमधार्मिकाः॥३॥हैहयश्च हयश्चैव राजा वेणुहयश्च यः। हैहयस्य तु दायादो धर्म्मतत्त्व इति श्रुतिः॥४॥ धर्म्मतन्त्रस्तु कीर्तिस्तु
चात्मजः। संज्ञेयस्य तु दायादो महिष्मान्नाम पार्थिवः॥५॥ आसीन्महिष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान्। वाराणस्यधिपो राजा कथितः पूर्व
भद्रश्रेण्यस्य दायादो दुर्मदो नाम पार्थिवः। दुर्मदस्य ततो धीमान् कनको नाम विश्रुतः॥ ७ ॥ कनकस्य तु दायादाश्चत्वारो लोकवि
वीर्यः कार्तवीर्यः कृतवर्मा तथैव च॥ ८ ॥ कृतौ जातश्चतुर्थोऽभूत्कृतवीर्यात्ततोऽर्जुनः। जज्ञे बाहुसहस्रेण सप्तद्वीपेश्वरो नृपः॥ ९ ॥ स
तप्त्वा तपः परमदुश्चरम्। दत्तमाराधयामास कार्त्तवीर्योऽत्रिसम्भवम् ॥ १० ॥ तस्मै दत्तो वरान् प्रादाच्चतुरो भूरितेजसः। पूर्वं बाहुसहस्र
प्रथमं वरम् ॥ ११ ॥ अधर्म्मे दीयमानस्य सद्भिस्तस्मान्निवारणम्। धर्म्मेण पृथिवीञ्जित्वा धर्म्मेणैवानुपालनम् ॥ १२ ॥ संग्राम
जित्वा हत्वा चारीन् सहस्रशः। संग्रामे युद्ध्यमानस्य वधः स्यादधिकाद्रणे ॥ १३ ॥ तेनेयं पृथिवी कृत्स्ना सप्तद्वीपा सपत्तना। सप्तोद
क्षात्रेण विधिना जनाः ॥ १४ ॥ तस्य बाहुसहस्रन्तु युद्ध्यतः किल धीमतः। यौद्धो ध्वजो रथश्चैव प्रादुर्भवति मायया ॥ १५ ॥ दशय
तेषु द्वीपेषु सप्तसु। निरर्गलाः स्म निर्वृत्ताः श्रूयन्ते तस्य धीमतः ॥ १६ ॥ सर्वे यज्ञा महाबाहोस्तस्यासन् भूरितेजसः। सर्वे का
सर्वे यूपैश्च काञ्चनैः ॥ १७ ॥ सर्वे देवैर्म्महाभागैर्विमानस्थैरलंकृताः। गन्धर्व्वैरप्सरोभिश्च नित्यमेवोपशोभिताः ॥ १८ ॥ तस्य राज्ञो ज
गन्धर्वो नारदस्तथा। चरितं तस्य राजर्षेर्महिमानं निरीक्ष्य च ॥ १९ ॥ न नूनं कार्त्तवीर्यस्य गतिं यास्यन्ति मानवाः। यज्ञैर्दानैस्तपोभिः
श्रुतेन च ॥ २० ॥ द्वीपेषु सप्तसु स वै खड्गी वरशरासनी। रथी राजाप्यनुचरोऽन्योऽगाच्चैवानुदृश्यते ॥ २१ ॥ अनष्टद्रव्यश्चैवासीन्न
विभ्रमः। प्रभावेण महाराज्ञः प्रजा धर्म्मेण रक्षतः ॥ २२ ॥ पञ्चाशीतिसहस्राणि वर्षाणां स नराधिपः। सप्त सप्त वारान् सम्राट् चक्रव
॥ २३ ॥ स एव पशुपालोऽभूत् क्षेत्रपालस्तथैव च। स एव वृष्ट्या पर्जन्यो योगित्वादर्ज्जुनोऽभवत् ॥ २४ ॥ स वै बाहुसहस्रेण ज्याघातव
भाति रश्मिसहस्रेण शारदेनेव भास्करः ॥ २५ ॥ स हि नागसहस्रेण माहिष्मत्यां नराधिपः। कर्कोटकसभाञ्जित्वा पुरीं तत्र न्यवेशय
स वै वेगे समुद्रस्य प्रावृट्कालाम्बुजेक्षणः। क्रीडन्निव सुखोद्विग्नः प्रावृट्कालञ्चकार ह ॥ २७ ॥ लुलिता क्रीडता तेन हेमस्रग्दाममालि

भ्रूकुटिसन्नादा शङ्किताभ्येति नर्मदा ॥ २८ ॥ पुरा स तामनुसरन्नवगाढो महार्णवम् । चकारोद्वृत्त्य वेलान्तं स कालः प्रावृणोद्गनम् ॥ २९ ॥ तस्य बाहु
सहस्रेण क्षोभ्यमाणे महादधौ । भवन्ति लीना निश्चेष्टाः पातालस्था महासुराः ॥ ३० ॥ चूर्णीकृतमहावीचिलीनमीनमहाविषाः । पतिता विद्धफेनौघमाव
र्त्तक्षिप्तदुस्सहम् ॥ ३१ ॥ चकार क्षोभयन्राजा दोःसहस्रेण सागरम् । देवासुरपरिक्षिप्तं क्षीरोदमिव सागरम् ॥ ३२ ॥ मन्दरक्षोभणकृता ह्यमृतोदकशङ्कि
ताः । सहसोत्पादिता भीता भीमं दृष्ट्वा नृपोत्तमम् ॥ ३३ ॥ नतनिश्चलमूर्द्धानो बभूवुश्च महोरगाः । सायाह्ने कदलीषण्डा निर्वातस्तिमिता इव ॥ ३४ ॥
स वै बद्ध्वा धनुर्ज्यान उत्सिक्तः पञ्चभिः शतैः । लङ्कायां मोहयित्वा तु सबलं रावणं बलात् । निर्जित्य बद्ध्वा चानीय माहिष्मत्यां बबन्ध तम् ॥ ३५ ॥
ततो गत्वा पुलस्त्यस्तु अर्जुनं च प्रसादयत् । मुमोच राजा पौलस्त्यं पुलस्त्येनानुपालितम् ॥ ३६ ॥ तस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः । युगा
न्तेऽम्बुदवृक्षस्य स्फुटितस्याशनेरिव ॥ ३७ ॥ अहो मृधे महावीर्यो भार्गवो यस्य सोऽच्छिनत् । मृधे सहस्रं बाहूनां हेमतालवनं यथा ॥ ३८ ॥ तृषितेन
कदाचित्स भिक्षितश्चित्रभानुना । सप्त द्वीपांश्चित्रभानोः प्रादाद्भिक्षां विशाम्पतिः ॥ ३९ ॥ पुराणि घोषान् ग्रामांश्च पत्तनानि च सर्व्वशः । जज्वाल
तस्य बाणेषु चित्रभानुर्दिधक्षया ॥ ४० ॥ स तस्य पुरुषेन्द्रस्य प्रभावेण महायशाः । ददाह कार्तवीर्यस्य शैलांश्चापि वनानि च ॥ ४१ ॥ स शून्यमा
श्रमं सर्वं वरुणस्यात्मजस्य वै । ददाह सवनद्वीपांश्चित्रभानुः सहैहयः ॥ ४२ ॥ संलेभे वरुणः पुत्रं पुरा भास्विनमुत्तमम् । वसिष्ठनामा स मुनिः
ख्यातश्चापः श्रितः श्रुतः ॥४३॥ तत्रापदस्तदा क्रोधादर्जुनं शप्तवान्विभुः । यस्मान्न वर्जितमिदं वनं ते मम हैहय ॥४४॥ तस्मात् ते दुष्करं कर्म्म कृतमन्यो
हनिष्यति । अर्जुनो नाम कौन्तेयो न च राजा भविष्यति ॥४५॥ अर्जुनं त्वां महावीर्यो रामः प्रहरतां वरः । छित्त्वा बाहुसहस्रं वै प्रमथ्य तरसा बली ॥४६॥
तपस्वी ब्राह्मणश्चैव वधिष्यति महाबलः । तस्य रामस्तदा ह्यासीन्मृत्युशापेन धीमतः ॥४७॥ राज्ञा तेन वरश्चैव स्वयमेव वृतः पुरा । तस्य पुत्रशतं ह्यासीत्
पञ्च तत्र महारथाः ॥ ४८ ॥ कृतास्त्रा बलिनः शूरा धर्म्मात्मानो यशस्विनः । शूरश्च शूरसेनश्च वृषघाद्यं वृष एव च ॥४९॥ जयध्वजश्च वै पुत्रा अवन्तिषु
विशांपतेः । जयध्वजस्य पुत्रस्तु तालजङ्घः प्रतापवान् ॥ ५० ॥ तस्य पुत्रशतं ह्येव तालजङ्घा इति श्रुतम् । तेषां पञ्च गणाः ख्याता हैहयानां महा
त्मनाम् ॥ ५१ ॥ वीरहोत्रा ह्यसङ्ख्याता भोजाश्चावर्तयस्तथा । तुण्डिकेराश्च विक्रान्तास्तालजङ्घास्तथैव च ॥ ५२ ॥ वीरहोत्रसुतश्चापि अनन्तो नाम
पार्थिवः । दुर्जयस्तस्य पुत्रस्तु बभूवामित्रदर्शनः ॥ ५३ ॥ अनष्टद्रव्यता चैव तस्य राज्ञो बभूव ह । प्रभावेण महाराजः प्रजास्ताः पर्य्यपालयत् ॥५४॥
न तस्य वित्तनाशश्च नष्टं प्रतिलभेत सः । कार्तवीर्यस्य यो जन्म कथयेदिह धीमतः ॥ ५५ ॥ वित्तवान् भवत्यत्रैव धर्म्मश्चास्य विवर्द्धते । यथा त्वष्टा यथा

तथा स्वर्गे महीयते ॥ ५६ ॥ इति श्रीमहापुराणे वायुप्रोक्ते कार्त्तवीर्य्यार्जुनोत्पत्तिविवरणं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ऋषय ऊचुः ॥
र्थं भुवनं दग्धमपवस्यं महात्मनाम् । कार्तवीर्येण विक्रम्य तन्नः प्रब्रूहि पृच्छताम् ॥ १ ॥ रक्षिता स तु राजर्षिः प्रजानामिति नः श्रुतम् ।
स रक्षिता भूत्वानाशयत्ततपोवनम् ॥ २ ॥ सूत उवाच ॥ आदित्यो विप्ररूपेण कार्तवीर्यमुपास्थितः । तृप्तिकामः प्रयच्छान्नमादित्योऽहं न
ः ॥ ३ ॥ राजोवाच ॥ भगवन् केन ते तुष्टिर्भवेद्ब्रूहि दिवाकर । कीदृशं भोजनं दद्मि श्रुत्वा च विदधाम्यहम् ॥ ४ ॥ सूर्य उवाच ॥
रं देहि मे सर्वमाहारं ददतां वर । तेन तृप्तो भवेयं वै न तुष्येऽन्येन पार्थिव ॥ ५ ॥ राजोवाच ॥ न शक्यं स्थावरं सर्व्वं तेजसा
ण तु । निर्दग्धुं तपतां श्रेष्ठ त्वामेव प्रणमाम्यहम् ॥ ६ ॥ आदित्य उवाच ॥ तुष्टस्तेऽहं शरान् दद्मि अक्षयान् सर्वतः सुखान् । प्रक्षिप्ताः
क्ष्यन्ति मम तेजःसमन्विताः ॥ ७ ॥ आदिष्टं तेजसा मेघसागरं शोषयिष्यति । शुष्कं भस्म करिष्यामि तेन प्रीतो नराधिप ॥ ८ ॥ ततः
थादित्यस्त्वर्जुनाय प्रयच्छति । ततः संप्राप्य सुमहत्स्थावरं सर्व्वमेव हि ॥ ९ ॥ आश्रमानथ ग्रामांश्च घोषांश्च नगराणि च । तपोवनानि
णे वनान्युपवनानि च ॥ १० ॥ एवं प्राचीनमदहत्ततः सूर्य्यप्रदक्षिणम् । निर्वृक्षा निस्तृणा भूमिर्दग्धा सूर्येण तेजसा ॥ ११ ॥ एतस्मिन्नेव काले
गे निलयमाश्रितः । दशवर्षसहस्राणि जलवासा महानृषिः ॥ १२ ॥ पूर्णे व्रते महातेजा उदातिष्ठत्तपोधनः । सोऽपश्यदाश्रमं दग्धमर्जुनेन
षिः । क्रोधाच्छशाप राजर्षिं कीर्त्तितं वो यथा मया ॥ १३ ॥ सूत उवाच ॥ क्रोष्टोः शृणुत राजर्षेर्वंशमुत्तमपूरुषम् । यस्यान्ववाये संभूतो
वृष्णिकुलोद्वहः ॥ १४ ॥ क्रोष्टोरेकोऽभवत् पुत्रो वृजिनीवान् महायशाः । वार्जिनीवतमिच्छन्ति स्वाहिं स्वाहोवतां वरम् ॥ १५ ॥ स्वाहेः पुत्रोऽभव
रशादुर्ददतां वरः । घृतम्प्रसूतमिच्छन्ति रशादोरग्र्यमात्मजम् ॥ १६ ॥ महाक्रतुभिरीजे स विविधैराप्तदक्षिणैः । चित्रैश्चित्ररथस्तस्य पुत्र
भिरन्वितः ॥ १७ ॥ एवं चित्ररथो वीरो यज्ञान् विपुलदक्षिणान् । शशविन्दुः परं वृत्तो राजर्षीणामनुष्ठितः ॥ १८ ॥ चक्रवर्त्ती महासत्त्वो महावीर्यो
जः । तत्रानुवंशश्लोकोऽयं यस्मिन् गीतः पुराविदैः ॥ १९ ॥ शशविन्दोस्तु पुत्राणां शतानामभवच्छतम् । धीमतामनुरूपाणां भूरिद्रविणतेज-
॥ २० ॥ तेषां पद् च प्रधानास्तु पृथुसाह्वा महाबलाः । पृथुश्रवा पृथुयशाः पृथुधर्म्मा पृथुञ्जयः ॥ २१ ॥ पृथुकीर्त्तिः पृथुन्दाता राजानः
विन्दवाः । शंसन्ति च पुराणानि पार्थश्रवसमन्तरम् । अन्तरः स पुरा यस्तु यज्ञस्य तनयोऽभवत् ॥ २२ ॥ उशना सुतधर्म्मात्मा अवाप्य पृथि
माम् । आजहाराश्वमेधानां शतमुत्तमधार्म्मिकः ॥ २३ ॥ मरुत्तस्तस्य तनयो राजर्षीणामनुष्ठितः । वीरः कम्बलवर्हिस्तु मरुत्ततनयः स्मृतः ॥२४॥

पुत्रस्तु रुक्मकवचो विद्वान् कम्बलवर्हिषः । निहत्य रुक्मकवचः पुरा कवचिनो रणे ॥ २५ ॥ धन्विनो निशितैर्वाणैरवाप श्रियमुत्तमाम् । ब्राह्मणेभ्यो ददौ वित्तमश्वमेधमहायशाः ॥ २६ ॥ राज्ञस्तु रुक्मकवचादपरावृत्त्य वीरहाः । जज्ञिरे पञ्च पुत्रास्तु महासत्त्वा महाबलाः ॥ २७ ॥ रुक्मेषुः पृथुरुक्मश्च ज्यामघः परिघो हरिः । परिघञ्च हरिञ्चैव विदेहे स्थापयात्पिता ॥ २८ ॥ रुक्मेषुरभवद्राजा पृथुरुक्मस्तदाश्रयः । तेभ्यः प्रव्राजितो राज्याज्ज्यामघोऽभवदाश्रमे ॥ २९ ॥ प्रशान्तस्तु वने घोरे ब्राह्मणेनावबोधितः । जगाम धनुरादाय देशमन्यं रथी ध्वजी ॥ ३० ॥ नर्म्मदानूप एकाकी मेकलावृत्तिका अपि । ऋक्षवन्तं गिरिं गत्वा शुक्तिमन्यामथाविशत् ॥ ३१ ॥ ज्यामघस्याभवद्भार्या शैब्या बलवती भृशम् । अपुत्रोऽपि स वै राजा भार्यामन्यां न विन्दति ॥ ३२ ॥ तस्यासीद्विजयो युद्धे ततः कन्यामवाप सः । भार्यामुवाच राजा स स्नुषेति तु नरेश्वरः ॥ ३३ ॥ एवमुक्ताब्रवीदेवं काम्येयन्ते स्नुषेति सा । यस्ते जनिष्यते पुत्रस्तस्य भार्या भविष्यति ॥ ३४ ॥ तस्य सा तपसोग्रेण शैब्या वैशं प्रसूयत । पुत्रं विदर्भं सुभगा शैब्या परिणता सती ॥ ३५ ॥ राजपुत्रौ तु विद्वांसौ स्नुषायां क्रथुकौशिकौ । पुत्रौ विदर्भोऽजनयच्छूरौ रणविशारदौ ॥ ३६ ॥ लोमपादं तृतीयन्तु पश्चाज्जज्ञे सुधार्मिकः । लोमपादात्मजो वभ्रुराहृतिस्तस्य चात्मजः ॥ ३७ ॥ कौशिकस्य चिदिः पुत्रस्तस्माच्चैद्या नृपाः स्मृताः । क्रथोर्विदर्भपुत्रस्तु कुन्तिस्तस्यात्मजोऽभवत् ॥ ३८ ॥ कुन्तेर्धृष्टसुतो जज्ञे पुरोधृष्टः प्रतापवान् । धृष्टस्य पुत्रो धर्मात्मा निर्वृतिः परवीरहा ॥ ३९ ॥ तस्य पुत्रो दशार्हस्तु महाबलपराक्रमः । दशार्हस्य सुतो व्योमा ततो जीमूत उच्यते ॥ ४० ॥ जीमूतपुत्रो विकृतिस्तस्य भीमरथः सुतः । अथ भीमरथस्यासीत् पुत्रो रथवरः किल ॥ ४१ ॥ दाता धर्म्मरतो नित्यं शीलसत्यपरायणः । तस्य पुत्रो नवरथस्ततो दशरथः स्मृतः ॥ ४२ ॥ तस्य चैकादशरथः शकुनिस्तस्य चात्मजः । तस्मात् करम्भको धन्वी देवरातोऽभवत्ततः ॥ ४३ ॥ देवक्षत्रोऽभवद्राजा देवरातिर्म्महायशाः । देवक्षत्रसुतो जज्ञे देवनः क्षत्रनन्दनः ॥ ४४ ॥ देवनात् स मधुर्जज्ञे यस्य मेधार्थसम्भवः । मधोश्चापि महातेजा मनुर्मनुवशस्तथा ॥ ४५ ॥ नन्दनश्च महातेजा महापुरुवशस्तथा । आसीत् पुरुवशात् पुत्रः पुरुद्वान् पुरुषोत्तमः ॥ ४६ ॥ जज्ञे पुरुद्वतः पुत्रो भद्रवत्यां पुरूद्वहः । ऐक्ष्वाकी त्वभवद्भार्या सत्त्वस्तस्यामजायत । सत्त्वात् सत्त्वगुणोपेतः सात्त्वतः कीर्तिवर्द्धनः ॥ ४७ ॥ इमां विसृष्टिं विज्ञाय ज्यामघस्य महात्मनः । प्रजावानेति सायुज्यं राज्ञः सोमस्य धीमतः ॥ ४८ ॥ इति श्रीमहापुराणे वायुप्रोक्ते ज्यामघवृत्तान्तकथनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ७ ॥ सूत उवाच ॥ सात्वती रूपसम्पन्नं कौशल्या सुषुवे सुतम् । भजिनं भजमानं च दिव्यं देवावृधं नृपम् ॥ १ ॥ अन्धकञ्च महाभोजं वृष्णिञ्च यदुनन्दनम् । तेषां हि सर्गाश्चत्वारः शृणुध्वं विस्तरेण वै ॥ २ ॥ भज

देवावृधो राजा चचार परमं तपः ॥ ६ ॥ पुत्रः सर्वगुणोपेतो मम भूयादिति स्म ह । संयोज्यात्मानमेवं सवर्णा सा जलमस्पृशत् ॥७
तस्य चकार ऋषिमापगा । कल्याणश्च नरपतेस्तस्य सा निम्नगोत्तमा ॥ ८ ॥ चिन्तयाभिपरीताङ्गा जगामाथ विनिश्चयम् । नाधि
यस्यामेवंविधः सुतः ॥ ९ ॥ भवेत्सर्वगुणोपेतो राज्ञो देवावृधस्य हि । तस्मादस्य स्वयं चाहं भवाम्यद्य सहव्रता । जज्ञे तस्याः स्व
प यथेरितः ॥ १० ॥ अथ भूत्वा कुमारी तु सावित्री परमं वचः । चिन्तयमास राजानं तामियेष स पार्थिवः ॥ ११ ॥ तस्यामाध
मुदारधीः । अथ सा नवमे मासि सुषुवे सरितांवरा ॥ १२ ॥ पुत्रं सर्वगुणोपेतं यथा देवावृधेप्सितः । तत्र वंशे पुराणज्ञा गाथ
: ॥ १३ ॥ गुणान् देवावृधस्यापि कीर्त्तयन्तो महात्मनः । यथैव शृणुते दूरात् संपश्यति तथान्तिकात् ॥ १४ ॥ बभ्रुः श्रेष्ठो मनु
धः समः । पुरुषाः षट्सष्टिश्च सहस्राणि च सप्ततिः । येऽमृतत्वमनुप्राप्ता बभ्रुर्देवावृधादपि ॥ १५ ॥ यज्वा दानपतिर्वीरो ब्रह्मण्यः सत
र्मांश्च महाभागः सात्त्वतानां महारथः ॥ १६ ॥ तस्यान्ववाये सुमहाभोजयेमार्तिकावलाः । गान्धारी चैव माद्री च वृष्णेर्भार्ये ब
न्धारी जनयामास सुमित्रं मित्रनन्दनम् । माद्री युधाजितं पुत्रं सा तु वै देवमीढुषम् ॥ १८ ॥ अनमित्रं सुतश्चैव तावुभौ पुरुषोत्तमौ
मो निघ्नस्य द्वौ बभूवतुः ॥१९॥ प्रसेनश्च महाभागः शक्रजिच्च सुतावुभौ । तस्य शक्रजितः पूर्वः सखा प्राणसमोऽभवत्॥२०॥ स कदा
रथिनांवरः । तोयकूलादपः स्प्रष्टुमुपस्थातुं ययौ रविम् ॥ २१ ॥ तस्योपतिष्ठतः सूर्यो विवस्वानग्रतः स्थितः । अस्पष्टमूर्तिर्भग
 विभुः॥२२॥अथ राजा विवस्वन्तमुवाच स्थितमग्रतः । यथैव व्योम्नि पश्यामि त्वामहं ज्योतिषाम्पते ॥२३॥ तेजोमण्डलिनश्चैव तं
म् । को विशेषो विवस्वंस्ते साक्षादुपगतेन वै ॥ २४ ॥ एतच्छ्रुत्वा स भगवान् मणिरत्नं स्यमन्तकम् । स्वकण्ठादवमुच्याथ बबन्ध नृप
तो विग्रहवन्तं तं ददर्श नृपतिस्तदा । प्रतिमामथ तां दृष्ट्वा मुहूर्त्तं कृतवांस्तथा ॥ २६ ॥ तमतिप्रस्थितं भूयो विवस्वन्तं स शक्रजित
त्वं येन लोकान् प्रयास्यति । तदेव मणिरत्नं तन्मां भवान् दातुमर्हति ॥ २७ ॥ स्यमन्तकं नाम मणिं दत्तवांस्तस्य भास्करः
गरं प्रविवेश महीपतिः ॥ २८ ॥ तं जनाः पर्यधावन्त सूर्योऽयं गच्छतीति ह । सभां विस्माययित्वाथ पुरीमन्तःपुरं तथा ॥ २९ ॥

प्रसेनिजितं दिव्यं मणिरत्नं स्यमन्तकम् । ददौ भ्रात्रे नरपतिः प्रेम्णा शत्राजिदुत्तमम् ॥२०॥ स्यमन्तको नाम मणिर्यस्य राष्ट्रे स्थितो भवेत् । कालवर्षी च पर्जन्यो न च व्याधिभयं तदा ॥ २१ ॥ लिप्सां चक्रे प्रसेनात्तु मणिरत्नं स्यमन्तकम् । गोविन्दो न च तं लेभे शक्तोऽपि न जहार च ॥ २२ ॥ कदाचिन्मृगयां यातः प्रसेनस्तेन भूषितः । स्यमन्तककृते सिंहाद्वधं प्राप्तः सुदारुणम् ॥२३ ॥ जाम्बवानृक्षराजस्तु तं सिंहं निजघान वै । आदाय च मणिं दिव्यं स्वं बिलं प्रविवेश ह ॥ २४ ॥ तत्कर्म कृष्णस्य ततो वृष्ण्यन्धकमहत्तराः । मणौ गृध्नुन्तु मन्वानास्तमेव विशशङ्किरे ॥ २५ ॥ मिथ्याभिशस्तिं तेभ्यस्तां बलवानरिसूदनः । अमृष्यमाणो भगवान् वनं स विचचार ह ॥ २६ ॥ स तु प्रसेनमृगयामचरत्तत्र चाप्यथ । प्रसेनस्य पदं गृह्य पुरुषैराप्तकारिभिः ॥ २७ ॥ ऋक्षवन्तं गिरिवरं विन्ध्यञ्च नगमुत्तमम् । अन्वेषणपरिश्रान्तः स ददर्श महामनाः ॥ २८ ॥ साश्वं हतं प्रसेनं तं नाविन्दत्तत्र वै मणिम् । अथ सिंहः प्रसेनस्य शरीरस्याविदूरतः ॥ २९ ॥ ऋक्षेण निहतो दृष्टः पदैर्ऋक्षस्य सूचिताम् । पदैरन्वेषयामास गुहामृक्षस्य यादवः ॥ ४० ॥ महत्यतिबिले वाणीं शुश्राव प्रमदेरिताम् । धात्र्या कुमारमादाय सुतं जाम्बवतो द्विजाः । प्रीतिमत्याथ मणिना मारोदीरित्युदीरिताम् ॥ ४१ ॥ धात्र्युवाच ॥ प्रसेनमवधीत् सिंहः सिंहो जाम्बवता हतः । सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥ ४२ ॥ व्यक्तीकृतश्च शब्दं तं तूर्णं सोऽपि ययौ बिलम् । अपश्यच्च बिलाभ्याशे प्रसेनमवदारितम् ॥ ४३ ॥ प्रविश्य चापि भगवांस्तदृक्षबिलमञ्जसा । ददर्श ऋक्षराजानं जाम्बवन्तमुदारधीः ॥ ४४ ॥ युयुधे वासुदेवस्तु बिले जाम्बवता सह । बाहुभ्यामेव गोविन्दो दिवसानेकविंशतिम् ॥ ४५ ॥ प्रविष्टे च बिलं कृष्णे वासुदेवपुरःसराः । पुनर्द्वारवतीमेत्य हतं कृष्णं न्यवेदयन् ॥ ४६ ॥ वासुदेवस्तु निर्जित्य जाम्बवन्तं महाबलम् । लेभे जाम्बवतीं कन्यामृक्षराजस्य सम्मताम् ॥ ४७ ॥ भगवत्तेजसा ग्रस्तो जाम्बवान् प्रसभं मणिम् । सुतां जाम्बवतीमाशु विष्वक्सेनाय दत्तवान् ॥ ४८ ॥ मणिं स्यमन्तकं चैव जग्राहात्मविशुद्धये । अनुनीय ऋक्षराजं निर्ययौ च तदा बिलात् ॥ ४९ ॥ एवं स मणिमादाय विशोद्ध्यात्मानमात्मना । ददौ सत्राजिते तं वै मणिं सात्वतसन्निधौ ॥५०॥ कन्यां पुनर्जाम्बवतीमुवाच मधुसूदनः । तस्मान्मिथ्याभिशापात् स व्यमुच्यत जनार्दनः ॥५१॥ इमां मिथ्याभिशस्तिं यः कृष्णस्येह व्यपोहिताम् । वेद मिथ्याभिशस्तेः स नाभिशस्यति कर्हिचित् ॥५२॥ दश त्वसृभ्यो भार्याभ्यः शत्राजित्तः शतं सुताः । ख्यातिमन्तस्त्रयस्तेषां भङ्गकारस्तु पूर्वजः । वीरो व्रतपतिश्चैव ह्यपस्वान्तश्च सुप्रियः ॥ ५३ ॥ अथ द्वारवती नाम भङ्गकारस्य सुप्रजा । सुषुवे सा कुमारीस्तु तिस्रो रूपगुणान्विताः ॥ ५४ ॥ सत्यभामोत्तमा स्त्रीणां व्रतिनीव दृढव्रता । तथा तपस्विनी चैव पिता कृष्णस्य तां ददौ ॥ ५५ ॥ यत्तत् सत्राजिते कृष्णो मणिरत्नं स्यमन्तकम् ।

प्रादात्तदाहरद्रत्नं भोजेन शतधन्वना ॥ ५६ ॥ तदा हि प्रार्थयामास सत्यभामामनिन्दिताम् । अक्रूरो रत्नमन्विच्छन् मणिश्चैव स्यमन्तकम् ॥ ५७ ॥ भद्रकारं ततो हत्वा शतधन्वा महाबलः । रात्रौ तं मणिमादाय ततोऽक्रूराय दत्तवान् ॥ ५८ ॥ अक्रूरस्तु तदा रत्नमादाय स नरर्षभः । समयं कारणं चक्रे बोध्यो नान्यैस्त्वयेत्युत ॥ ५९ ॥ वयमभ्युपपत्स्यामः कृष्णेन त्वं प्रधर्षितः । मम च द्वारकाः सर्वा वशे तिष्ठन्त्यसंशयम् ॥ ६० ॥ हते पितरि दुःखार्त्ता सत्यभामा यशस्विनी । प्रययौ रथमारुह्य नगरं वारणावतम् ॥ ६१ ॥ सत्यभामा तु तद्वृत्तं भोजस्य शतधन्वनः । भर्त्तुर्निवेद्य दुःखार्त्ता पार्श्वस्थाश्रूण्यवर्त्तयत् ॥ ६२ ॥ पाण्डवानान्तु दग्धानां हरिः कृत्वोदकक्रियाम् । तुल्यार्थे चैव भ्रातॄणां नियोजयति सात्यकिम् ॥ ६३ ॥ ततस्त्वरितमागम्य द्वारकां मधुसूदनः । पूर्व्वजं हलिनं श्रीमानिदं वचनमब्रवीत् ॥ ६४ ॥ हतः प्रसेनः सिंहेन सत्राजिच्छतधन्वना । स्यमन्तकमहं मार्गे तस्य प्रहर हे प्रभो ॥ ६५ ॥ तदारोह रथं शीघ्रं भोजं हत्वा महाबलम् । स्यमन्तको महाबाहो तदास्माकं भविष्यति ॥ ६६ ॥ ततः प्रवृत्ते युद्धे तु तुमुले भोजकृष्णयोः । शतधन्वा न चाक्रूरमवैक्षत् सर्वतो दिशि ॥ ६७ ॥ अनष्टाश्वावरोहन्तु कृत्वा भोजजनार्द्दनौ । शक्तोऽपि साध्याद्धार्द्दक्यान्नाक्रूरोऽभ्युपपद्यत ॥ ६८ ॥ अपयाने ततो बुद्धिं भूयश्चक्रे भयान्वितः । योजनानां शतं साग्रं यया च प्रत्यपद्यत ॥ ६९ ॥ विज्ञातहृदया नाम शतयोजनगामिनी । भोजस्य वडवादित्यो यया कृष्णमयोधयत् ॥ ७० ॥ प्रवृद्धवेगा वडवा त्वध्वनां शतयोजनम् । दृष्ट्वा रथगतिस्तस्य शतधन्वानमर्दयत् ॥ ७१ ॥ ततस्तस्य हयास्ते तु श्रमात् खेदाच्च वै द्विजाः । खमुत्पेतू रथप्राणाः कृष्णो राममथाब्रवीत् ॥ ७२ ॥ तिष्ठस्वेह महाबाहो दृष्टदोषा मया हयाः । पद्भ्यां गत्वा हरिष्यामि मणिरत्नं स्यमन्तकम् ॥ ७३ ॥ पद्भ्यामेव ततो गत्वा शतधन्वानमच्युतः । मिथिलाधिपतिं तं वै जघान परमास्त्रवित् ॥ ७४ ॥ स्यमन्तकं न चापश्यद्धत्वा भोजं महाबलम् । निवृत्तं चाब्रवीत् कृष्णं रत्नं देहीति लाङ्गली ॥ ७५ ॥ नास्तीति कृष्णश्चोवाच ततो रामो रुषान्वितः । धिक्छब्दमसकृत् पूर्व्वं प्रत्युवाच जनार्द्दनम् ॥ ७६ ॥ भ्रातृत्वान्मर्षयाम्येष स्वस्ति तेऽस्तु व्रजाम्यहम् । कृत्यं न मे द्वारकया न त्वया न च वृष्णिभिः ॥ ७७ ॥ प्रविवेश ततो रामो मिथिलामरिमर्द्दनः । सर्व्वकामैरुपहृतैर्मैथिलेनैव पूजितः ॥ ७८ ॥ एतस्मिन्नेव काले तु बभ्रुर्मतिमतांवरः । नानारूपान् क्रतून् सर्व्वानाजहार निरर्गलान् ॥ ७९ ॥ दीक्षामयं सकवचं रक्षार्थं प्रविवेश ह । स्यमन्तककृते राजा गाधिपुत्रो महायशाः ॥ ८० ॥ अर्थान् रत्नानि चाग्र्याणि द्रव्याणि विविधानि च । षष्टिवर्षगते काले यज्ञेषु विन्ययोजयत् ॥ ८१ ॥ अक्रूरयज्ञ इत्येते ख्यातास्तस्य महात्मनः । बह्वन्नदक्षिणाः सर्व्वे सर्व्वकामप्रदायिनः ॥ ८२ ॥ अथ दुर्य्योधनो राजा गत्वाऽथ मिथिलां प्रभुः । गदाशिक्षां ततो दिव्यां बलभद्रादवाप्तवान् ॥ ८३ ॥

प्रसाद्य तु ततो विप्रा वृष्ण्यन्धकमहारथैः । आनीतो द्वारकामेव कृष्णेन च महात्मना ॥ ८४ ॥ अक्रूरमन्धकैः सार्द्धमुपायात् पुरुषर्षभः । युद्धे हत्वा तु शत्रुघ्नं सह बन्धुमता बली ॥ ८५ ॥ श्वफल्कतनयायान्तु नरायां नरसत्तमौ । भङ्गकारस्य तनयो विश्रुतौ सुमहाबलौ ॥ ८६ ॥ जज्ञातेऽन्धकमुख्यस्य शत्रुघ्नो बन्धुमांश्च तौ । वधार्थं भङ्गकारस्य कृष्णो न प्रीतिमान् भवेत् ॥ ८७ ॥ ज्ञातिभेदभयाद्भीतः समुपेक्षितवांस्त था । अपयाते तथाक्रूरे नावर्षत्पाकशासनः ॥ ८८ ॥ अनावृष्ट्या हतं राष्ट्रमभवत्तद्धधोद्यतम् । ततः प्रसादयामासुरक्रूरं कुकुरान्धकाः ॥ ८९ ॥ पुनर्द्वारवतीं प्राप्ते तदा दानपतौ तथा । प्रववर्ष सहस्राक्षः कुक्षौ जलनिधेस्ततः ॥ ९० ॥ कन्याञ्च वासुदेवाय स्वसारं शीलसम्मताम् । अक्रूरः प्रददौ श्रीमान् प्रीत्यर्थं यदुपुङ्गवः ॥ ९१ ॥ अथ विज्ञाय योगेन कृष्णो बभ्रुगतं मणिम् । सभामध्ये तदा प्राह तमक्रूरं जनार्दनः ॥ ९२ ॥ यत्तु रत्नं मणिवरं तव हस्तगतं प्रभो । तत् प्रयच्छस्व मानार्ह विमतिश्चात्र मा कृथाः ॥ ९३ ॥ षष्टिवर्षगते काले यद्रोषोऽभूत्तदा मम । सुसंरूढः सकृत् प्राप्तस्तत्कालाश्रित्य स महान् ॥ ९४ ॥ ततः कृष्णस्य वचनात् सर्व्वसात्वतसंसदि । प्रददौ तं मणिं बभ्रुरक्लेशेन महामतिः ॥ ९५ ॥ तत आर्ज्जवसंप्राप्तबभ्रुहस्तादरिन्दमः । ददौ प्रहृष्टमनसा तं मणिं बभ्रवे पुनः ॥ ९६ ॥ स कृष्णहस्तात् संप्राप्य मणिरत्नं स्यमन्तकम् । आबद्धय गान्दिनीपुत्रो विरराजांशुमानिव ॥ ९७ ॥ इमां मिथ्याभिशस्तिं यो विशुद्धामपि चोत्तमाम् । वेद मिथ्याभिशस्तिं स न व्रजेच्च कथञ्चन ॥ ९८ ॥ अनिमित्राच्छिनिर्जज्ञे कनिष्ठाद्वृष्णिनन्दनात् ॥९९॥ सत्यवाक् सत्यसम्पन्नः सत्यकस्तस्य चात्मजः । सात्यकिर्युयुधानस्य तस्य भूतिः सुतोऽभवत् ॥ १०० ॥ भूतेर्युगन्धरः पुत्र इति भैत्याः प्रकीर्त्तिताः । जज्ञाते तनयौ पृश्नेः श्वफल्कश्चित्रकश्च यः ॥१०१॥ श्वफल्कस्तु महाराजो धर्मात्मा यत्र वर्त्तते । नास्ति व्याधिभयं तत्र न चावृष्टिभयं तथा ॥ १०२ ॥ कदाचित् काशिराजस्य विभोस्तु द्विजसत्तमाः । त्रीणि वर्षाणि विषये नावर्षत्पाकशासनः ॥ १०३ ॥ स तत्र वासयामास श्वफल्कं परमार्चितम् । श्वफल्कपरिवासेन प्रावर्षत्पाकशासनः ॥ १०४ ॥ श्वफल्कः काशिराजस्य सुतां भार्यामनिन्दिताम् । गान्दिनीं नाम गां सा हि ददौ विप्राय नित्यशः ॥ १०५ ॥ सा मातुरुदरस्था वै बहुवर्षशतान् किल । वसति स्म न वै जज्ञे गर्भस्थान्तां पिताब्रवीत् ॥ १०६ ॥ जायस्व शीघ्रं भद्रन्ते किमर्थं चापि तिष्ठसि । प्रोवाच चैनं गर्भस्था सा कन्या गौर्दिने दिने ॥ १०७ ॥ यदि दत्ता तदा स्यां हि यदि स्यामीहतां पितः । तथेत्युवाच तां तस्याः पिता काममपूपुरत् ॥ १०८ ॥ दाता यज्वा च शूरश्च श्रुतवानातिथिप्रियः । तस्याः पुत्रः स्मृतोऽक्रूरः श्वफल्को भूरिदक्षिणः ॥ १०९ ॥ उपमद्गुस्तथा मद्गुर्मृदुरश्चारिमेजयः ।

गिरिरक्षस्ततो यक्षः शत्रुघ्नो वारिमर्दनः ॥ ११० ॥ धर्मभृच्च धृष्टचयो वर्गमोचस्तथापरः । आषाढप्रतिवाहौ च वसुदेवा वराङ्गना ॥ १११ ॥ अक्रू
रादुग्रसेन्यान्तु सुतौ द्वौ कुलनन्दिनौ । देवश्चानुपदेवश्च जज्ञाते देवसंमितौ ॥ ११२ ॥ चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च । अश्व
ग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ ॥ ११३ ॥ अरिष्टनेमिरश्वश्च सुवर्मा वर्मचर्मभृत् । अभूमिर्बहुभूमिश्च श्रविष्ठाश्रवणे स्त्रियौ ॥ ११४ ॥ सत्यकात्
काशिदुहिता लेभे सा चतुरः सुतान् । ककुदं भजमानञ्च शमीकबलबर्हिषौ ॥ ११५ ॥ ककुदस्य सुतो वृष्टिर्वृष्टेस्तु तनयोऽभवत् । कपोतरोमा
तस्याथ रेवतोऽभवदात्मजः ॥ ११६ ॥ तस्यासीत्तुम्बुरुसखा विद्वान् पुत्रोऽभवत्किल । ख्यायते यस्य नाम्ना स चन्दनोदकदुन्दुभिः ।
॥ ११७ ॥ तस्माच्चाभिजितः पुत्र उत्पन्नस्तु पुनर्वसुः । अश्वमेधन्तु पुत्रार्थे आजहार नरोत्तमः ॥ ११८ ॥ तस्य मध्येऽतिरात्रस्य सदोमध्यात्समुत्थितम् ।
ततस्तु विद्वान् धर्मज्ञो दाता यज्वा पुनर्वसुः ॥ ११९ ॥ तस्यापि पुत्रमिथुनं बाहुबाणाजितः किल । आहुकश्चाहुकी चैव ख्यातौ मतिमतांवरौ ।
॥ १२० ॥ इमांश्चोदाहरन्त्यत्र श्लोकान् प्रति तमाहुकम् । सोपासङ्गानुकर्षाणां सध्वजानां वरूथिनाम् ॥ १२१ ॥ रथानां मेघघोषाणां सहस्राणि दशैव
तु । नासत्यवादी त्वासीत्तु नायज्वा नासहस्रदः ॥ १२२ ॥ नाशुचिर्नाप्यधर्मात्मा नाविद्वान्न कृशोऽभवत् । आहुकस्य धृतिः पुत्र इत्येवमनु
शुश्रुमः ॥ १२३ ॥ श्वेतेन परिचारेण किशोरप्रतिमान् हयान् । अशीतियुक्तनियुतान्याहुकप्रतिमोऽव्रजत् ॥ १२४ ॥ पूर्वस्यान्दिशि नागानां भोजस्य
प्रतिरेजिरे । रूप्यकाञ्चनकक्षाणां सहस्राण्येकविंशतिः ॥ १२५ ॥ तावन्त्येव सहस्राणि उत्तरस्यान्तथा दिशि । भूमिपालस्य भोजस्य उत्तिष्ठेत्
किङ्किणी किल ॥ १२६ ॥ आहुकश्चाहुकान्धाय स्वसारं त्वाहुकीन्ददौ । आहुकान्धस्य दुहिता द्वौ पुत्रौ सम्बभूवतुः ॥ १२७ ॥ देवक
श्चोग्रसेनश्च देवगर्भसमावुभौ । देवकस्य सुता वीरा जज्ञिरे त्रिदशोपमाः ॥ १२८ ॥ देवानामपि देवश्च सुदेवो देवरक्षिता । तेषां स्वसारः
सप्तासन् वसुदेवाय संददौ ॥ १२९ ॥ वृकदेवे पदेवा च तथान्या देवरक्षिता । श्रीदेवा शान्तिदेवा च महादेवा तथापरा ॥ १३० ॥ सप्तमी
देवकी तासां सुनामा चारुदर्शना । नवोग्रसेनस्य सुताः कंसस्तेषान्तु पूर्वजः ॥ १३१ ॥ न्यग्रोधश्च सुनामा च कङ्कशंकुश्च भूमयः । सुतनू
राष्ट्रपालश्च युद्धतुष्टः सुपुष्टिमान् ॥ १३२ ॥ तेषां स्वसारः पञ्चैव कर्मधर्मवती तथा । शताङ्कू राष्ट्रपाला च कङ्का चैव वराङ्गना ॥ १३३ ॥ उग्रसेनो
महापत्यो विख्यातः कुकुरोद्भवः । कुकुराणामिमं वंशं धारयन्नमितौजसाम् । आत्मनो विपुलं वंशं प्रजावांश्च भवेन्नरः ॥ १३४ ॥ भजमानस्य पुत्रस्तु
रथिमुख्यो विदूरथः । राज्याधिदेवः शूरश्च विदुरश्च सुतोऽभवत् ॥ १३५ ॥ तस्य शूरस्य तु सुता जज्ञिरे बलवत्तराः । वातश्चैव निवातश्च शोणितः

श्वेतवाहनः॥१३६॥ शमी च गदवर्मा च निदातः शक्रशक्रजित् । शमिपुत्रः प्रतिक्षित्रः प्रतिक्षिप्तस्य चात्मजः॥१३७॥ स्वयम्भोजः स्वयम्भोज
सम्बभूव ह । हृदिकस्य सुतास्त्वासन् दश भीमपराक्रमाः ॥ १३८ ॥ कृतवर्मा कृतस्तेषां शतधन्वा तु मध्यमः । देवार्हश्च वनार्हश्च भिषग्
यः ॥ १३९ ॥ सुदान्तश्च धियान्तश्च नकवान् कनकोद्भवः । देवार्हस्य सुतो विद्वान् जज्ञे कम्बलबर्हिषः ॥ १४० ॥ असमौजाः सुतस्तस्य
जाश्च विश्रुतः । अजावपुत्राय ततः प्रददावसमौजसे । सुदंष्ट्रश्च सुरूपश्च कृष्ण इत्यन्धकाः स्मृताः ॥ १४१ ॥ अन्धकानामिमं वंशं कीर्त
नित्यशः । आत्मानो विपुलं वंशं लभते नात्र संशयः ॥ १४२ ॥ अश्मक्यां जनयामास शूरो वै देवमानुषिम् । माष्यान्तु जनयामास शूरो वै
षम् ॥ १४३ ॥ भाष्यान्तु जज्ञिरे शूराद्भोजायां पुरुषा दश । वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः॥१४४॥ जज्ञे तस्य प्रसूतस्य दुन्दुभिः प्राण
आनकानाञ्च संह्रादः सुमहानभवद्दिवि ॥ १४५ ॥ पपात पुष्पवर्षञ्च शूरस्य भवने महत् । मनुष्यलोके कृत्स्नेऽपि रूपे नास्ति समो भुवि ॥
यस्यासीत् पुरुषाग्र्यस्य कीर्त्तिश्चन्द्रमसो यथा । देवभागस्ततो जज्ञे ततो देवश्रवाः पुनः ॥१४७॥ अनादृष्टिकडश्चैव नन्दनश्चैव भृञ्जिनः । श्याम
गण्डूषः चतस्रस्तु वराङ्गनाः ॥१४८॥ पृथा च श्रुतवेदा च श्रुतकीर्त्तिः श्रुतश्रवाः । राजाधिदेवी च तथा पञ्चैता वीरमातरः॥१४९॥पृथां दुहितरं च
स्तां पाण्डुरावहत् । अनपत्याय वृद्धाय कुन्तिभोजाय तां ददौ॥१५०॥तस्मात् कुन्तीति विख्याता कुन्तीभोजात्मजा पृथा । कुरुवीरः पाण्डुमुख्
द्भार्यामविन्दत ॥ १५१॥ पृथा जज्ञे ततः पुत्रान् त्रीनग्निसमतेजसः । लोकेऽप्रतिरथान् वीरान् शक्रतुल्यपराक्रमान् ॥ १५२ ॥ धर्माद्युधिष्ठिरं
ताच्च वृकोदरम् । इन्द्राद्धनञ्जयश्चैव पृथा पुत्रानजीजनत् ॥१५३॥ माद्रवत्यान्तु जनितावाश्विनाविति विश्रुतम् । नकुलः सहदेवश्च रूपसत्त्वगु
॥ १५४ ॥ जज्ञे च श्रुतदेवायां तनयो वृद्धशर्मणः । करूपाधिपतिर्वीरो दन्तवक्रो महाबलः ॥ १५५ ॥ कैकेयां श्रुतकीर्त्यान्तु जज्ञे सन्तर्दन
चेकितानबृहत्क्षत्रौ तथैवान्यौ महाबलौ ॥ १५६ ॥ विन्दानुविन्दावावन्त्यौ भ्रातरौ सुमहाबलौ । श्रुतश्रवायां चैद्यस्तु शिशुपालो
॥ १५७ ॥ दमघोषस्य राजर्षेः पुत्रो विख्यातपौरुषः । यः पुरासीद्दशग्रीवः संबभूवारिमर्दनः ॥ १५८ ॥ यदुश्रवानुजस्तस्य रुजकन्योऽनुज
पत्न्यस्तु वसुदेवस्य त्रयोदश वराङ्गनाः ॥ १५९ ॥ पौरवी रोहिणी चैव मदिरा चापरा तथा । तथैव भद्रा वैशाखी देवकी सप्तमी तथा ॥
सुगन्धिर्वनराजी च द्वे चान्ये परिचारिके ॥ रोहिणी पौरवी चैव वाल्मीकस्यात्मजाभवत् ॥ १६१ ॥ ज्येष्ठा पत्नी महाभागा दयितानकदु
ज्येष्ठं लेभे सुतं रामं सारणं निशठं तथा ॥ १६२ ॥ दुर्दमं दमनं शुभ्रं पिण्डारककुशीतकौ । चित्रां नाम कुमारीञ्च रोहिण्यष्टौ व्यजायत

पौत्रौ रामस्य जज्ञाते विज्ञातौ निशितोत्सुकौ। पार्श्वी च पार्श्वनन्दी च शिशुः सत्यधृतिस्तथा ॥ १६४ ॥ मन्दबाह्योऽथ रामाणगिरिकौ गिर एव च। शुक्लगुल्मेति गुल्मश्च दरिद्रान्तक एव च ॥ १६५ ॥ कुमार्यश्चापि पञ्चाद्या नामतस्ता निबोधत। अर्चिष्मती सुनन्दा च सुरसा सुवचास्तथा ॥१६६॥ तथा शतबला चैव सारणस्य सुतास्त्विमाः। भद्राश्वो भद्रगुप्तिश्च भद्रविघ्नस्तथैव च ॥१६७॥ भद्रबाहुर्भद्ररथो भद्रकल्पस्तथैव च। सुपार्श्वकः कीर्त्तिमांश्च रोहिताश्वश्च भद्रजः ॥ १६८ ॥ दुर्म्मदश्चाभिभूतश्च रोहिण्याः कुलजाः स्मृताः। नन्दोपनन्दौ मित्रश्च कुक्षिमित्रस्तथाचलः ॥ १६९ ॥ चित्रोपचित्रे कन्ये च स्थितः पुष्टिरथापरः। मदिरायाः सुता ह्येते सुदेवोऽथ विजज्ञिरे ॥ १७० ॥ उपबिम्बोऽथ बिम्बश्च सत्त्वदन्तमहौजसौ। चत्वार एते विख्याता भद्रापुत्रा महाबलाः ॥ १७१ ॥ वैशाख्यां समदाच्छौरिः पुत्रं कौशिकमुत्तमम्। देवक्यां जज्ञिरे शौरेः सुषेणः कीर्तिमानपि ॥ १७२ ॥ तदयो भद्रसेनश्च यजुदायश्च पञ्चमः। षष्ठो भद्रविदेकश्च कंसः सर्वाञ्जघान तान् ॥ १७३ ॥ अथ तस्यामवस्थायामायुष्मान् संबभूव ह। लोकनाथः पुनर्विष्णुः पूर्वकृष्णः प्रजापतिः ॥१७४॥ अनुजाताऽभवत् कृष्णा सुभद्रा भद्रभाषिणी। कृष्णा सुभद्रेति पुनर्व्याख्याता वृष्णिनन्दिनी ॥१७५॥ सुभद्रायां रथी पार्थादभिमन्युरजायत। वसुदेवस्य भार्यासु महाभागासु सप्तसु। ये पुत्रा जज्ञिरे शूरा नामतस्तान्निबोधत ॥ १७६ ॥ अतोऽस्य सहदेवायां शूरो जज्ञेऽभयासखः। शार्ङ्गदेवाजनत्तम्बुं शौरी जज्ञे कुलोद्वहम् ॥ १७७ ॥ उपसङ्गं वसुञ्चापि तनयौ देवरक्षितौ। एवं दश सुतास्तस्य कंसस्तानप्यघातयत् ॥ १७८ ॥ विजयं रोचनञ्चैव वर्द्धमानं तथैव च। एतान् सर्व्वान् महाभागानुपदेवा व्यजायत ॥ १७९ ॥ स्वगाहवं महात्मानं वृकदेवी त्वजायत। आगाही च स्वसा चैव सुरूपा शिशिरायिणी ॥ १८० ॥ सप्तमं देवकीपुत्रं सुनासा सुषुवे भुवम्। गवेषणं महाभागं सङ्ग्रामे चित्रयोधिनम् ॥ १८१ ॥ श्राद्धदेवं पुरा येन वने विरचिता द्विजाः। शैव्यायामदधच्छौरिः पुत्रं कौशिकमव्ययम् ॥१८२॥ सुगन्धी वनराजी च शौरेरास्तां परिग्रहः। पुण्ड्रश्च कपिलश्चैव वसुदेवात्मजौ हि तौ। तयो राजाऽभवत् पुण्ड्रः कपिलस्तु वनं ययौ ॥ १८३ ॥ तस्यां समभवद्वीरो वसुदेवात्मजो वली। राजा नाम निषादोऽसौ प्रथमः स धनुर्द्धरः ॥ १८४ ॥ विख्यातो देवरातस्य महाभागः सुतोऽभवत्। पण्डितानां मतं प्राहुर्देवश्रवसमुद्भवम् ॥ १८५ ॥ अस्मक्यां लभते पुत्रमनादृष्टिं यशस्विनम्। निवर्त्तः शत्रुशत्रुघ्नं श्राद्धदेवं महाबलम् ॥ १८६ ॥ अजायत श्राद्धदेवो निषधादिर्यतः श्रुतः। एकलव्यो महावीर्यो निषादैः परिवर्द्धितः ॥१८७॥ गण्डूपायानपत्याय कृष्णस्तुष्टोऽददत् सुतौ। चारुदेष्णश्च साम्बश्च कृतास्त्रौ शस्तलक्षणौ ॥१८८॥ तन्तिजस्तान्तिमालश्च स्वपुत्रौ कनकस्य तु। वस्तावनेस्त्वपुत्राय वसुदेवः प्रतापवान्। सौतिर्ददौ सुतं वीरं शौरिं कौशिकमेव च ॥ १८९ ॥

तपाश्च कोधनुश्चैव विरजाः श्यामसृञ्जिमौ। अनपत्योऽभवच्छयामः श्यामकस्तु वनं ययौ। जुगुप्समानो भोजत्वं राजर्षित्वमवाप्नुयात् ॥ १९० ॥
य इदं जन्म कृष्णस्य पठते नियतव्रतः। श्रावयेद्ब्राह्मणश्चापि सुमहत्सुखमाप्नुयात् ॥ १९१ ॥ देवदेवो महातेजाः पूर्वं कृष्णः प्रजापतिः। विहा
रार्थं मनुष्येषु जज्ञे नारायणः प्रभुः ॥ १९२ ॥ देवक्यां वसुदेवेन तपसा पुष्करेक्षणः। चतुर्बाहुः स विज्ञेयो दिव्यरूपः श्रियान्वितः ॥ १९३ ॥
प्रकाशो भगवान् योगी कृष्णो मानुषमागतः। अव्यक्तोऽव्यक्तलिङ्गस्थः स एव भगवान् प्रभुः ॥ १९४ ॥ नारायणो यतश्चक्रे प्रभवं चाव्ययो हि
सः। देवो नारायणो भूत्वा हरिरासीत्सनातनः ॥ १९५ ॥ योऽसृजच्चादिपुरुषं पुरा चक्रे प्रजापतिम्। अदितेरपि पुत्रत्वमेत्य यादवनन्दनः। देवो
विष्णुरिति ख्यातः शक्रादवरजोऽभवत् ॥ १९६ ॥ प्रसादजं यस्य विभोरदित्याः पुत्रकारणम्। वधार्थं सुरशत्रूणां दैत्यदानवरक्षसाम् ॥ १९७ ॥
ययातिवंशजस्याथ वसुदेवस्य धीमतः। कुलं पुण्यं यतः कर्म भेजे नारायणः प्रभुः ॥ १९८ ॥ सागराः समकम्पन्त चेलुश्च धरणीधराः। जज्वलुश्चा
ग्निहोत्राणि जायमाने जनार्दने ॥ १९९ ॥ शिवाश्च प्रववुर्वाताः प्रशान्तिमभवद्रजः। ज्योतींष्यभ्यधिकं रेजुर्जायमाने जनार्दने ॥ २०० ॥ अभिजिन्नाम
नक्षत्रं जयन्ती नाम शर्वरी। मुहूर्तो विजयो नाम यत्र जातो जनार्दनः ॥२०१॥ अव्यक्तः शाश्वतः कृष्णो हरिर्नारायणः प्रभुः। जायते स्मैव भगवान्
नयनैर्मोहयन् प्रजाः ॥ २०२ ॥ आकाशात् पुष्पवृष्टीश्च ववर्ष त्रिदशेश्वरः। गीर्भिर्मङ्गलयुक्ताभिः स्तुवन्तो मधुसूदनम्। महर्षयः सगन्धर्वा उपतस्थुः
सहस्रशः ॥ २०३ ॥ वसुदेवस्तु तं रात्रौ जातं पुत्रमधोक्षजम्। श्रीवत्सलक्षणं दृष्ट्वा दिवि दिव्यैः सुलक्षणैः। उवाच वसुदेवः स्वं रूपं संहर वै प्रभो
॥२०४॥ भीतोऽहं कंसतस्तात एतदेव ब्रवीम्यहम्। मम पुत्रा हतास्तेन ज्येष्ठास्तेऽद्भुतदर्शनाः ॥ २०५ ॥ वसुदेववचः श्रुत्वा रूपं स हृतवान् प्रभुः।
अनुज्ञातः पिता त्वेनं नन्दगोपगृहं गतः। उग्रसेनमते तिष्ठन् यशोदायै तदा ददौ ॥ २०६ ॥ तुल्यकालन्तु गर्भिण्यौ यशोदा देवकी तथा। यशोदा
नन्दगोपस्य पत्नी सा नन्दगोपतेः ॥ २०७ ॥ यामेव रजनीं कृष्णो जज्ञे वृष्णिकुलप्रभुः। तामेव रजनीं कन्यां यशोदापि व्यजायत ॥ २०८ ॥
तं जातं रक्षमाणस्तु वसुदेवो महायशाः। प्रादात् पुत्रं यशोदायै कन्यान्तु जगृहे स्वयम् ॥ २०९ ॥ दत्त्वैनं नन्दगोपस्य रक्ष मामिति चाब्रवीत्।
सुतस्ते सर्व्वकल्याणो यादवानां भविष्यति। अयं स गर्भो देवक्या अस्मत्क्लेशान् हनिष्यति ॥ २१० ॥ उग्रसेनात्मजायाश्च कन्यामानकदुन्दुभेः।
निवेदयामास तदा कन्येति शुभलक्षणा ॥ २११ ॥ स्वसायां तनयं कंसो जातं नैवावधारयत्। अथ तामपि दुष्टात्मा ह्युत्ससर्ज मुदान्वितः ॥ २१२ ॥
हता वै या यदा कन्या जपत्येष वृथामतिः। कन्या सा ववृधे तत्र वृष्णिसद्मनि पूजिता ॥ २१३ ॥ पुत्रवत्पारिपाल्यन्तो देवा देवान् यथा तदा।

तामेव विधिनोत्पन्नामाहुः कन्यां प्रजापतिम् ॥ २१४ ॥ एकादशा तु जज्ञे वै रक्षार्थं केशवस्य ह । तां वै सर्वे सुमनसः पूजयिष्यन्ति यादवाः । देवदेवो दिव्यवपुः कृष्णः संरक्षितोऽनया ॥ २१५ ॥ ऋषय ऊचुः ॥ किमर्थं वसुदेवस्य भोजः कंसो नराधिपः । जघान पुत्रान् बालान् वै तन्नो व्याख्यातुमर्हसि ॥ २१६ ॥ सूत उवाच ॥ शृणुध्वं वै यथा कंसः पुत्रानानकदुन्दुभेः । जाताञ्जाताञ्छिशून् सर्वान् निष्पिपेष वृथामतिः ॥ २१७ ॥ भयाद्यथा महाबाहुर्जातः कृष्णो विवासितः । तथा च गोषु गोविन्दः संवृद्धः पुरुषोत्तमः ॥ २१८ ॥ उक्तं हि किल देवक्या वसुदेवस्य धीमतः । सारथ्यं कृतवान् कंसो युवराजस्तदाऽभवत् ॥ २१९ ॥ ततोऽन्तरिक्षे वागासीद्दिव्या भूतस्य कस्यचित् । कंसो यया सदा भीतः पुष्कला लोकसाक्षिणी ॥ २२० ॥ यामेतां वहसे कंस रथेन परकारणात् । अस्या यः सप्तमो गर्भः स ते मृत्युर्भविष्यति ॥२२१॥ तां श्रुत्वा व्यथितो वाणीं तदा कंसो वृथामतिः । निष्क्रम्य खड्गं तां कन्यां हन्तुकामोऽभवत्तदा ॥ २२२ ॥ तमुवाच महाबाहुर्वसुदेवः प्रतापवान् । उग्रसेनात्मजं कंसं सौहृदात्प्रणयेन च ॥ २२३ ॥ न स्त्रियं क्षत्रियो जातु हन्तुमर्हति कश्चन । उपायः परिदृष्टोऽत्र मया यादवनन्दन ॥२२४॥ योऽस्याः सम्भवते गर्भः सप्तमः पृथिवीपते । तमहन्ते प्रयच्छामि तत्र कुर्य्यां यथाक्रमम् ॥ २२५ ॥ त्वं त्विदानीं यथेष्टत्वं वर्तेथा भूरिदक्षिण । सर्वानस्यास्तु वै गर्भान् सत्यं नेष्यामि ते वशम् ॥ २२६ ॥ एवं मिथ्या नरश्रेष्ठ वागेषा न भविष्यति । एवमुक्तोऽनुनीतः स जग्राह तनयांस्तदा ॥ २२७ ॥ वसुदेवश्च तां भार्य्यामवाप्य मुदितोऽभवत् । कंसश्चास्यावधीत् पुत्रान् पापकर्म्मा वृथामतिः ॥ २२८ ॥ ऋषय ऊचुः ॥ क एष वसुदेवश्च देवकी च यशस्विनी । नन्दगोपस्तु कस्त्वेष यशोदा च महायशाः । यो विष्णुं जनयामास या चैनं चाभ्यवर्द्धयत् ॥२२९॥ सूत उवाच ॥ पुरुषाः कश्यपस्यासन्नादित्यास्तु स्त्रियास्तथा । अथ कामान् महाबाहुर्देवक्याः समवर्द्धयत् ॥ २३० ॥ अचरत् स महीं देवः प्रविष्टो मानुषीं तनुम् । मोहयन् सर्वभूतानि योगात्मा योगमायया ॥२३१॥ नष्टे धर्म्मे तदा जज्ञे विष्णुर्वृष्णिकुले स्वयम् । कर्तुं धर्म्मव्यवस्थानमसुराणां प्रणाशनम् ॥ २३२ ॥ आहृता रुक्मिणी कन्या सत्या नग्नजितस्तदा । सात्राजिती सत्यभामा जाम्बवत्यपि रोहिणी ॥ २३३ ॥ शैब्या सुदेवी माद्री च सुशीला नाम चापरा । कालिन्दी मित्रविन्दा च लक्ष्मणा जालवासिनी ॥ २३४ ॥ एवमादीनि देवानां सहस्राणि च षोडश । चतुर्दश तु ये प्रोक्ता गणाश्चाप्सरसां दिवि । विचिन्त्य देवैः शक्रेण विशिष्टास्त्विह प्रेषिताः ॥ २३५ ॥ पत्न्यर्थं वासुदेवस्य उत्पन्ना राजवेश्मसु । एताः पत्न्यो महाभागा विष्वक्सेनस्य विश्रुताः ॥ २३६ ॥ प्रद्युम्नश्चारुदेष्णश्च सुदेष्णः शरभस्तथा । चारुश्च चारुभद्रश्च भद्रचारुस्तथाऽपरः ॥ २३७ ॥ चारुविन्ध्यश्च रुक्मिण्यां कन्या चारुमती तथा । सानुर्भानुस्तथाक्षश्च रोहितो मन्त्रय

स्तथा ॥ २३८ ॥ जरान्धकस्ताम्रवक्षा भौमरिश्च जरन्धमः । चतस्रो जज्ञिरे तेषां स्वसारो गरुडध्वजात् ॥ २३९ ॥ भानुर्भौमरिका चैव ताम्रपर्णी जरन्धमा । सत्यभामासुतानेताञ्जाम्बवत्याः प्रजाः शृणु ॥ २४० ॥ भद्रश्च भद्रगुप्तश्च भद्रविन्द्रस्तथैव च । सप्तबाहुश्च विख्यातः कन्या भद्रावती तथा । सम्बोधनी च विख्याता ज्ञेया जाम्बवतीसुताः ॥ २४१ ॥ संग्रामजिच्च शतजित् त प च सहस्रजित् । एते पुत्राः सुदेव्याश्च विष्वक्सेनस्य कीर्त्तिताः ॥ २४२ ॥ वृको वृकाश्वो वृकजिद्वृजिनी च सुराङ्गना । मित्रबाहुः सुनीथश्च नाग्नजित्याः प्रजास्त्विह ॥ २४३ ॥ एवमादीनि पुत्राणां सहस्राणि निबोधत । प्रयुतन्तु समाख्यातं वासुदेवस्य ये सुताः ॥ २४४ ॥ अयुतानि तथाष्टौ च शूरा रणविशारदाः । जनार्दनस्य वंशो वः कीर्त्तितोऽयं यथातथम् ॥ २४५ ॥ बृहती नर्तकोन्नेयी सुनये सङ्गता तथा । कन्या सा बृहदुच्छस्य शौनेयस्य महात्मनः ॥ २४६ ॥ तस्याः पुत्रास्तु विख्यातास्त्रयः समितिशोभनाः । अङ्गदः कुमुदः श्वेतः कन्या श्वेता तथैव च ॥ २४७ ॥ अवगाहश्च चित्रश्च शूरश्चित्ररथश्च यः । चित्रसेनः सुतश्चास्य कन्या चित्रवती तथा ॥ २४८ ॥ तुम्बश्च तुम्बवाणश्च जनस्तम्बश्च तावुभौ । उपाङ्गस्य स्मृतौ द्वौ तु वज्रारः क्षिप्र एव च ॥ २४९ ॥ भूरीन्द्रसेनो भूरिश्च गवेषस्य सुतावुभौ । युधिष्ठिरस्य कन्या तु सुतनुर्नाम विश्रुता ॥ २५० ॥ तस्यामश्वसुतो जज्ञे वज्रो नाम महायशाः । वज्रस्य प्रतिबाहुस्तु सुचारुस्तस्य चात्मजः ॥ २५१ ॥ काश्मा सुपार्श्वं तनयं जज्ञे साम्बा तरस्विनम् । तिस्रः कोट्यस्तु पुत्राणां यादवानां महात्मनाम् ॥२५२॥ षष्टिंशतसहस्राणि वीर्य्यवन्तो महाबलाः । देवांशाः सर्व्व एवेह उत्पन्नास्ते महौजसः ॥ २५३ ॥ दैवासुरे हता ये च असुरा वै महातपाः । इहोत्पन्ना मनुष्येषु बाधन्ते सर्व्वमानवान् । तेषामुत्सादनार्थन्तु उत्पन्ना यादवे कुले ॥ २५४ ॥ कुलानि दश चैकञ्च यादवानां महात्मनाम् । सर्व्वमेककुलं यद्वद्वर्त्तते वैष्णवे कुले ॥ २५५ ॥ विष्णुस्तेषां प्रमाणे च प्रभुत्वे च व्यवस्थितः । निदेशस्थायिभिस्तस्य बद्ध्यन्ते सर्वमानुषाः ॥ २५६ ॥ इति प्रसूतिर्वृष्णीनां समासव्यासयोगतः । कीर्त्तिता कीर्त्तनाच्चैव कीर्त्तिसिद्धिमभीप्सिताम् ॥ २५७ ॥ इति श्रीमहापुराणे वायुप्रोक्ते विष्णुवंशानुकीर्त्तनं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ छ ॥ मनुष्यप्रकृतीन् देवान् कीर्त्यमानान्निबोधत । सङ्कर्षणो वासुदेवः प्रद्युम्नः साम्ब एव च ॥ १ ॥ अनिरुद्धश्च पञ्चैते वंशवीराः प्रकीर्त्तिताः । सप्तर्षयः कुबेरश्च यक्षो मणिवरस्तथा ॥ २ ॥ शालकी बदरश्चैव विद्वान् धन्वन्तरिस्तथा । नन्दिनश्च महादेवः शालङ्कायन उच्यते । आदिदेवस्तदा जिष्णुरेभिश्च सह दैवतैः ॥ ३ ॥ ऋषय ऊचुः ॥ विष्णुः किमर्थं सम्भूतः स्मृताः सम्भूतयः कति । भविष्याः कति वान्ये तु प्रादुर्भावा महात्मनः ॥ ४ ॥ ब्रह्मक्षेत्रे युगान्तेषु किमर्थमिह जायते । पुनः पुनर्म्मनुष्येषु तन्नः प्रब्रूहि

पृच्छताम् ॥ ५ ॥ विस्तरेणैव सर्वाणि कर्म्माणि रिपुघातिनः । श्रोतुमिच्छामहे सम्यग् देहैः कृष्णस्य धीमतः ॥ ६ ॥ कर्म्मणामानुपूर्व्यञ्च प्रादुर्भावाश्च
ये प्रभो । या चास्य प्रकृतिः सूत ताश्चास्मान् वक्तुमर्हसि ॥ ७ ॥ कथं स भगवान् विष्णुः सुरेश्वरिनिषूदनः । वसुदेवकुले धीमान् वासुदेवत्व
मागतः ॥ ८ ॥ अमरैः सूत किं पुण्यं पुण्यकृद्भिरलंकृतम् । देवलोकं समुत्सृज्य मर्त्यलोकमिहागतः ॥ ९ ॥ देवमानुषयोर्नेता भूर्भुवःप्रसवो हरिः ।
किमर्थं दिव्यमात्मानं मानुषे समवेशयत् ॥ १० ॥ यश्चक्रं वर्तयत्येको मनुष्याणां मनोमयम् । मनुष्ये स कथं बुद्धिं चक्रे चक्रभृतां वरः ॥ ११ ॥
गोपायनं यः कुरुते जगतां सार्व्वलौकिकम् । स कथं गां गतो विष्णुर्गोपमन्वकरोत्प्रभुः ॥ १२ ॥ महाभूतानि भूतात्मा यो दधार चकार ह । श्रीगर्भः
स कथं गर्भे स्त्रिया भूचरया धृतः ॥ १३ ॥ येन लोकान् क्रमैर्जित्वा त्रिभिस्त्रींस्त्रिदशेप्सया । स्थापिता जगतो मार्गास्त्रिवर्गप्रवरास्त्रयः ॥ १४ ॥
योऽन्तकाले जगत्पीत्वा कृत्वा तोयमयं वपुः । लोकमेकार्णवं चक्रे दृश्यादृश्येन वर्त्मना ॥ १५ ॥ यः पुराणे पुराणात्मा वाराहं वपुरास्थितः । ददौ
जित्वा वसुमतीं सुराणां सुरसत्तमः ॥ १६ ॥ येन सैंहं वपुः कृत्वा द्विधा कृत्वा च यत्पुनः । पूर्व्वदैत्यो महावीर्य्यो हिरण्यकशिपुर्हतः ॥ १७ ॥ यः पुरा
ह्यनलो भूत्वा और्व्वः संवर्त्तको विभुः । पातालस्थोऽर्णवगतः पपौ तोयमयं हविः ॥ १८ ॥ सहस्रचरणं देवं सहस्रांशुं सहस्रशः । सहस्रशिरसं देवं यमा
हुर्वै युगे युगे ॥ १९ ॥ नाभ्यारण्याः समुद्भूतं यस्य पैतामहं गृहम् । एकार्णवगते लोके तत्पङ्कजमपङ्कजम् ॥ २० ॥ येन ते निहता दैत्याः संग्रामे
तारकामये । सर्व्वदेवमयं कृत्वा सर्वायुधधरं वपुः ॥ २१ ॥ गरुडस्थेन चोत्सिक्तः कालनेमिर्निपातितः । उत्तरांशे समुद्रस्य क्षीरोदस्यामृतोदधेः । यः
शेते शाश्वतं योगमास्थाय तिमिरं महत् ॥ २२ ॥ पुरारणी गर्भमधत्त दिव्यं तपःप्रकर्षाददितिः पुरा यम् । शक्रश्च यो दैत्यगणावरुद्धं गर्भावमानेन भृशं
चकार ॥ २३ ॥ यदानिलो लोकपदानि हृत्वा चकार दैत्यान् सलिलेशयांस्तान् । कृत्वादिदेवस्त्रिदिवस्य देवांश्चक्रे सुरेशं पुरुहूतमेव ॥ २४ ॥ गार्हपत्येन
विधिना अन्वाहार्य्येण कर्म्मणा । अग्निमाहवनीयञ्च वेदिञ्चैव कुशास्रवम् ॥ २५ ॥ प्रोक्षणीयं स्रुवञ्चैव अवभृथं तथैव च । अथ त्रीनिह यश्चक्रे हव्यभाग
प्रदान्मखे ॥ २६ ॥ हव्यादांश्च सुरांश्चक्रे कव्यादांश्च पितॄनपि । भोगार्थे यज्ञविधिना यो यज्ञो यज्ञकर्म्माणि ॥ २७ ॥ यूपान् समित्स्रुवं सोमं पवित्रं परिधी
नपि । यज्ञियानि च द्रव्याणि यज्ञीयांश्च तथानलान् ॥ २८ ॥ सदस्यान् यजमानांश्च अश्वमेधान् क्रतूत्तमान् । विबभ्राज पुरा यश्च पारमेष्ठ्येन कर्म्मणा
॥ २९ ॥ युगानुरूपं यः कृत्वा त्रींल्लोकान् हि यथाक्रमम् । क्षणा निमेषाः काष्ठाश्च कलास्त्रैकालमेव च ॥ ३० ॥ मुहूर्त्तास्तिथयो मासा दिनसंवत्सरा
स्तथा । ऋतवः कालयोगाश्च प्रमाणं त्रिविधन्तथा ॥ ३१ ॥ आयुः क्षेत्राण्युपचयं लक्षणं रूपसौष्ठवम् । मेधा वित्तं च शौर्य्यञ्च शास्त्रस्यैव च पार

णम् ॥३२॥ त्रयो वर्णास्त्रयो लोकास्त्रैविद्यं पावकास्त्रयः । त्रैकाल्यं त्रीणि कर्म्माणि तिस्रो मायास्त्रयो गुणाः ॥३३॥ सृष्टा लोकाः सुराश्चैव येनात्यन्तेन कर्म्मणा । सर्व्वभूतगणाः सृष्टाः सर्व्वभूतगणात्मना ॥ ३४ ॥ नृणामिन्द्रियपूर्व्वेण योगेन रमते च यः । गतागतानां यो नेता सर्व्वत्र विविधेश्वरः ॥३५॥ यो गतिर्धर्मयुक्तानामगतिः पापकर्म्मणाम् । चातुर्वर्ण्यस्य प्रभवश्चातुर्वर्ण्यस्य रक्षिता ॥ ३६ ॥ चातुर्विद्यस्य यो वेत्ता चतुराश्रमसंश्रयः । दिगन्तरं नभो भूमिरापो वायुर्विभावसुः ॥ ३७ ॥ चन्द्रसूर्य्यद्वयं ज्योतिर्युगेशः क्षणदाचरः । यः परः श्रूयते देवो यः परं श्रूयते तपः ॥ ३८ ॥ यः परन्तपसः प्राहुर्यः परम्परमात्मवान् । आदित्यादिस्तु यो देवो यश्च दैत्यान्तको विभुः ॥ ३९ ॥ युगान्तेष्वन्तको यश्च यश्च लोकान्तकान्तकः । सेतुर्यो लोकसेतूनां मेध्यो यो मेध्यकर्म्मणाम् ॥ ४० ॥ वेद्यो यो वेदविदुषां प्रभुर्यः प्रभवात्मनाम् । सोमभूतस्तु भूतानामग्निभूतोऽग्निवर्चसाम् ॥ ४१ ॥ मनुष्याणां मनोभूतस्तपोभूतस्तपस्विनाम् । विनयो नयतृप्तानां तेजस्तेजस्विनामपि ॥ ४२ ॥ विग्रहो विग्रहाणां यो गतिर्गतिमतामपि । आकाशप्रभवो वायुर्वायुप्राणा हुताशनः ॥ ४३ ॥ दिवा हुताशनप्राणाः प्राणोऽग्नेर्मधुसूदनः । रसोऽभवच्छोणितं वै शोणितान्मांसमुच्यते ॥ ४४ ॥ मांसात्तु मेदसो जन्म मेदसोऽस्थि निरूप्यते । अस्थ्रा मज्जा समभवन्मज्ज्ञातः शुक्रसम्भवः ॥ ४५ ॥ शुक्राद्गर्भः समभवद्रसमूलेन कर्म्मणा । तत्रापि प्रथमश्चापस्ताः सौम्यराशिरुच्यते ॥ ४६ ॥ गर्भोष्मसम्भवो ज्ञेयो द्वितीयो राशिरुच्यते । शुक्रं सोमात्मकं विद्यादार्त्तवं पावकात्मकम् ॥ ४७ ॥ भावौ रसानुगावेतौ वीर्य्यं च शशिपावकौ । कफवर्गेऽभवच्छुक्रं पित्तवर्गे च शोणितम् ॥ ४८ ॥ कफस्य हृदयं स्थानं नाभ्यां पित्तं प्रतिष्ठितम् । देहस्य मध्ये हृदयं स्थानन्तु मनसः स्मृतम् ॥ ४९ ॥ नाभिकोष्ठान्तरं यत्तु तत्र देवो हुताशनः । मनः प्रजापतिर्ज्ञेयं कफः सोमो विभाव्यते ॥ ५० ॥ पित्तमग्निः स्मृतावेतावग्निसोमात्मकं जगत् । एवं प्रवर्त्तितो गर्भो वर्त्ततेऽम्बुदसन्निभः ॥ ५१ ॥ वायुः प्रवेशनं चक्रे सङ्गतः परमात्मना । स पञ्चधा शरीरस्थो विद्यते वर्द्धयेत् पुनः ॥ ५२ ॥ प्राणापानौ समानश्च उदानो व्यान एव च । प्राणोऽस्य परमात्मानं वर्द्धयन् परिवर्त्तते ॥ ५३ ॥ अपानः पश्चिमं कायमुदानोर्द्ध्वशरीरगः । व्यानो व्यानस्यते येन समानः सर्व्वसन्धिषु ॥ ५४ ॥ भूतावाप्तिस्ततस्तस्य जायतेन्द्रियगोचरा । पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ ५५ ॥ सर्व्वेन्द्रिया निविष्टास्तं स्वं स्वं योगं प्रचक्रिरे । पार्थिवं देहमाहुस्तं प्राणात्मानं च मारुतम् ॥ ५६ ॥ छिद्राण्याकाशयोनीनि जलास्रावं प्रवर्त्तते । तेजश्चक्षुःस्थिता ज्योत्स्ना तेषां यन्नामतः स्मृतम् । सङ्ग्रामा विषयाश्चैव यस्य वीर्य्यात्प्रवर्त्तिताः ॥ ५७ ॥ इत्येतान् पुरुषः सर्व्वान् सृजँल्लोकान् सनातनः । नैधनेऽस्मिन् कथं लोके नरत्वं विष्णुरागतः ॥ ५८ ॥ एष नः संशयो धीमन्नेष वै विस्मयो महान् । कथं गतिर्गतिमतामापन्नो मानुषीं

तनुम् ॥ ५९ ॥ श्रोतुमिच्छामहे विष्णोः कर्म्माणि च यथाक्रमम् । आश्चर्य्याणि परं विष्णुर्देवदेवेश्च कथ्यते ॥ ६० ॥ विष्णोरुत्पत्तिमाश्चर्य्यं क
महामते । एतदाश्चर्य्यमाख्यानं कथ्यतां वै सुखावहम् ॥ ६१ ॥ प्रख्यातबलवीर्य्यस्य प्रादुर्भावा महात्मनः । कर्म्मणाश्चर्य्यभूतस्य विष्णोः र
ह्योच्यताम् ॥ ६२ ॥ सूत उवाच ॥ अहञ्च कीर्त्तयिष्यामि प्रादुर्भावं महात्मनः । यथा स भगवाञ्जातो मानुषेषु महातपाः ॥ ६३ ॥ सप्तसप्ततपः
भृगुशापेन मानुषे । जायते च युगान्तेषु देवकार्य्यार्थसिद्धये ॥ ६४ ॥ तस्य दिव्यतनुं विष्णोर्गदतो मे निबोधत । युगधर्म्मे परावृत्ते काले च
प्रभुः ॥ ६५ ॥ कर्त्तुं धर्म्मव्यवस्थानं जायते मानुषेष्विह । भृगोः शापनिमित्तेन देवासुरकृतेन च ॥ ६६ ॥ ऋषय ऊचुः ॥ कथं देवासुरकृते
हारमवाप्नुयात् । एतद्वेदितुमिच्छामो वृत्तं देवासुरं कथम् ॥ ६७ ॥ सूत उवाच ॥ देवासुरं यथावृत्तं ब्रुवतस्तन्निबोधत । हिरण्यकशिपुर्दैत्यस्त्रै
प्राक् प्रशासति ॥ ६८ ॥ बलिनाधिष्ठितं राष्ट्रं पुनर्लोकत्रये क्रमात् । सख्यमासीत्परं तेषां देवानामसुरैः सह ॥ ६९ ॥ युगं वै दशसङ्कीर्णं
दव्याहतं जगत् । निदेशस्थायिनश्चैव तयोर्देवासुराभवन् ॥ ७० ॥ बलवान् वै विवादोऽयं संप्रवृत्तः सुदारुणः । देवासुराणां च तदा घोरक्ष
महान् ॥ ७१ ॥ तेषां दायनिमित्तं वै संग्रामा बहवोऽभवन् । वाराहेऽस्मिन् दश द्वौ च षण्डामार्कोत्तराः स्मृताः ॥ ७२ ॥ नामतस्तु स
शृणुध्वं तान् विवक्षतः । प्रथमो नारसिंहस्तु द्वितीयश्चापि वामनः ॥ ७३ ॥ तृतीयः स तु वाराहश्चतुर्थोऽमृतमन्थनः । संग्रामः पञ्चमश्चैव सुघ
रकामयः ॥ ७४ ॥ षष्ठो ह्याडीबकस्तेषां सप्तमस्त्रैपुरः स्मृतः । अन्धकारोऽष्टमस्तेषां ध्वजश्च नवमः स्मृतः ॥ ७५ ॥ वार्त्तश्च दशमो ज्ञेयस्ततो
हलः स्मृतः । स्मृतो द्वादशमस्तेषां घोरकोलाहलोऽपरः ॥ ७६ ॥ हिरण्यकशिपुर्दैत्यो नरसिंहेन सूदितः । वामनेन बलिर्बद्धस्त्रैलोक्याक्रम
॥ ७७ ॥ हिरण्याक्षो हतो द्वन्द्वे प्रतिवादे तु दैवतैः । महाबलो महासत्त्वः संग्रामेष्वपराजितः ॥७८॥ दंष्ट्रायान्तु वराहेण समुद्राद्भूर्यदा कृता । प्र
निर्जितो युद्धे इन्द्रेणामृतमन्थने ॥ ७९ ॥ विरोचनस्तु प्राह्लादिर्नित्यमिन्द्रवधोद्यतः । इन्द्रेणैव स विक्रम्य निहतस्तारकामये ॥ ८० ॥ भवाद्
प्राप्य विशेषास्त्रादिभिस्तु यः । सजम्भो निहतः षष्ठे शक्राविष्टेन विष्णुना ॥८१॥ अशक्नुवन्तो देवेषु पुरं गोप्तुं त्रिदैवतम् । निहता दानवाः सर्वे
त्र्यम्बकेण तु ॥ ८२ ॥ अष्टमे त्वसुराश्चैवं राक्षसाश्चान्धकारकाः । जितदेवमनुष्यैस्तु पितृभिश्चैव सङ्गतान् ॥ ८३ ॥ संभृतान्
श्चैव सङ्गतान् कृत्स्नशश्च तान् । तथा विष्णुसहायेन महेन्द्रेण निबर्हिताः ॥ ८४ ॥ हतो ध्वजो महेन्द्रेण मायाच्छन्नश्च योधयन् । ध्वजे
समाविश्य विप्रवर्त्तिर्महाभुजः ॥ ८५ ॥ दैत्यांश्च दानवांश्चैव संहतान् कृत्स्नशश्च तान् । रजिः कोलाहले सर्वान् देवैः परिवृतोऽजयत् । यज्ञ

विजितो षण्डामार्कौ तु दैवतैः ॥ ८६ ॥ एते दैवासुरा वृत्ताः संग्रामा द्वादशैव तु । देवासुरक्षयकराः प्रजानामशिवाय च ॥ ८७ ॥ हिरण्यकशिपू राजा वर्षाणामर्बुदं बभौ । तथा शतसहस्राणि ह्यधिकानि द्विसप्ततिः । अशीतिं च सहस्राणि त्रैलोक्यस्येश्वरोऽभवत् ॥ ८८ ॥ पर्याये तस्य राजाऽनु बलिर्वर्षार्बुदं पुनः । षष्टिं चैव सहस्राणि त्रिंशतं नियुतानि च ॥ ८९ ॥ बले राज्याधिकारस्तु यावत्कालं बभूव ह । प्रह्लादेन गृहीतोऽभूत्तावत्कालं तदासुरैः ॥ ९० ॥ इन्द्रास्त्रयस्ते विख्याता असुराणां महौजसः । दैत्यसंस्थमिदं सर्वमासीद्दशयुगं किल ॥ ९१ ॥ असपत्नं ततः सर्वं राष्ट्रं दशयुगं पुरा । त्रैलोक्यमव्ययमिदं महेन्द्रेण तु पाल्यते ॥ ९२ ॥ प्रह्लादस्य ततश्चादस्त्रैलोक्यं कालपर्ययात् । पर्यायेण च संप्राप्ते त्रैलोक्ये पाकशासनः ॥ ९३ ॥ ततोऽसुरान् परित्यज्य यज्ञे देवा उपागमन् । यज्ञे देवानथ गते काव्यं ते ह्यसुराब्रुवन् ॥ ९४ ॥ कृतं नो मिषतां राष्ट्रं त्यक्त्वा यज्ञं पुनर्गताः । स्थातुं न शक्नुमो ह्यद्य प्रविशामो रसातलम् ॥९५॥ एवमुक्तोऽब्रवीदेतान् विषण्णः सान्त्वयन् गिरा । माभैष्ट धारयिष्यामि तेजसा स्वेन चासुराः ॥ ९६ ॥ वृष्टिरोषधयश्चैव रसा वसु च यद्द्वयम् । कृत्स्ना मयि च तिष्ठन्ति पादस्तेषां सुरेषु वै । युष्मदर्थं प्रदास्यामि तत्सर्वं धार्यते मया ॥ ९७ ॥ ततो देवासुरान् दृष्ट्वा धृतान् काव्येन धीमता । अमन्त्रयंस्तदा ते वै संविग्ना विजिगीषया ॥ ९८ ॥ एष काव्य इदं सर्वं व्यावर्त्तयति नो बलात् । साधु गच्छामहे तूर्णं क्षीणान्नाप्याययस्व तान् । प्रसह्य हत्वा शिष्टान् वै पातालं प्रापयामहे ॥ ९९ ॥ ततो देवाः सुसंरब्धा दानवानभिसृत्य वै । जघ्नुस्तैर्वध्यमानास्ते काव्यमेवाभिदुद्रुवुः ॥ १०० ॥ ततः काव्यस्तु तान्दृष्ट्वा तूर्णं देवैरभिद्रुतान् । समरेऽस्त्रक्षतार्त्तांस्तान् देवेभ्यस्तान् द्रुतैः सुतान् ॥ १०१ ॥ काव्यो दृष्ट्वा स्थितान् देवान् तत्र देवोऽभ्यचिन्तयत् । तानुवाच ततो ध्यात्वा पूर्ववृत्तमनुस्मरन् ॥ १०२ ॥ त्रैलोक्यं विजितं सर्वं वामनेन त्रिभिः क्रमैः । बलिर्बद्धो हतो जम्भो निहतश्च विरोचनः ॥ १०३ ॥ महाहवेषु द्वादशसु संग्रामेषु सुरैर्हताः । तैस्तैरुपायैर्भूयिष्ठा निहता ये प्रधानतः ॥१०४॥ किञ्चिच्छिष्टास्तु वै यूयं युद्धेष्वन्त्येषु वै स्वयम् । नीतिं वो हि विधास्यामि कालः कश्चित्प्रतीक्ष्यताम् ॥ १०५ ॥यास्याम्यहं महादेवं मन्त्रार्थं विजयाय वः । अग्निमाप्याययेद्धोता मन्त्रैरेव बृहस्पतिः ॥ १०६ ॥ ततो यास्याम्यहं देवं मन्त्रार्थं नीललोहितम् । युष्माननुग्रहीष्यामि पुनः पश्चादिहागतः ॥ १०७ ॥ यूयं तपश्चरध्वं वै संवृता वल्कलैर्वने । न वै देवा वधिष्यन्ति यावदागमनं मम ॥ १०८ ॥ अप्रतीपांस्ततो मन्त्रान् देवात् प्राप्य महेश्वरात् । योत्स्यामहे पुनर्देवांस्ततः प्राप्स्यथ वै जयम् ॥ १०९ ॥ ततस्ते कृतसंवादा देवानूचुस्ततोऽसुराः । न्यस्तवादा वयं सर्वे लोकान् यूयं क्रमन्तु वै ॥११०॥ वयं तपश्चरिष्यामः संवृता वल्कलैर्वने । प्रह्लादस्य वचः श्रुत्वा सत्यव्याहरणं तु तत् ॥१११॥ ततो देवा निवृत्ता वै विज्वरा मुदिताश्च

ह । न्यस्तशस्त्रेषु दैत्येषु स्वान् वै जग्मुर्यथागतान् ॥ ११२ ॥ ततस्तानब्रवीत्काव्यः कश्चित्कालमुपास्यताम् । निरुत्सुकैस्तपोयुक्तैः कालं कार्यार्थसाधकैः ।
पितुर्ममाश्रमस्था वै सर्वे देवाः सवासवाः ॥ ११३ ॥ स सन्दिश्यासुरान् काव्यो महादेवं प्रपद्य च । प्रणम्यैनमुवाचाथ जगत्प्रभवमीश्वरम् ॥ ११४ ॥
मन्त्रानिच्छाम्यहं देव मे न सन्ति बृहस्पतौ । पराभवाय देवानामसुरेष्वभयावहान् ॥ ११५ ॥ एवमुक्तोऽब्रवीद्देवो मन्त्रानिच्छसि वै द्विज । व्रतं चर मयो
द्दिष्टं ब्रह्मचारी समाहितः ॥ ११६ ॥ पूर्णं वर्षसहस्रं वै कुण्डधूममवाक्शिराः । यद्युपास्यसि भद्रन्ते मत्तो मन्त्रमवाप्स्यसि ॥ ११७ ॥ तथोक्तो देव
देवेन स शुक्रस्तु महातपाः । पादौ संस्पृश्य देवस्य बाढमित्यभ्यभाषत ॥ ११८ ॥ व्रतं चराम्यहं शेषं यथोद्दिष्टोऽस्मि वै प्रभो । ततो नियुक्तो देवेन
कुण्डधारोऽस्य धूमकृत् ॥११९॥ असुराणां हितार्थाय तस्मिञ्छुक्रे गते तदा । मन्त्रार्थं तत्र वसति ब्रह्मचर्यं महेश्वरः ॥ १२० ॥ तद्बुद्धा नातिपूर्वन्तु राज्यं
न्यस्तं तदासुरैः । तस्मिञ्छिद्रे तदामर्षा देवास्तान् समभिद्रवन् । निशितात्तायुधाः सर्वे बृहस्पतिपुरोगमाः ॥ १२१ ॥ दृष्ट्वासुरगणा देवान् प्रगृहीतायुधान्
पुनः । उत्पेतुः सहसा सर्वे सन्त्रस्तास्ते ततोऽभवन् ॥ १२२ ॥ न्यस्तशस्त्रे जये दत्ते आचार्यव्रतमास्थिते । सन्त्यज्य समयं देवास्ते सपत्नजिघांसवः ॥ १२३ ॥
अनाचार्यास्तु भद्रं वो विश्वस्तास्तपसि स्थिताः । चीरवल्काजिनधरा निष्क्रिया निष्परिग्रहाः ॥ १२४ ॥ रणे विजेतुं देवान् वै न शक्ष्यामः कथ
ञ्चन । अशुद्धेन प्रपद्यामः शरणं काव्यमातरम् ॥ १२५ ॥ ज्ञापयामस्ततमिदं यावदागमनं गुरोः । विनिवृत्ते ततः काव्ये योत्स्यामो युधि तान्
सुरान् ॥ १२६ ॥ एवमुक्त्वा सुरान् योग्यं शरणं काव्यमातरम् । प्रापद्यन्त ततो भीतास्तदा चैव तदाऽभयम् ॥ १२७ ॥ दत्तन्तेपान्तु भीतानां दैत्या
नामभयार्थिनाम् । न भेतव्यं न भेतव्यं भयन्त्यजत दानवाः ॥ १२८ ॥ मत्सन्निधौ वर्ततां वो न भीर्भवितुमर्हति । भयाच्चाप्यभिपन्नांस्तान् दृष्ट्वा
देवासुरांस्तदा ॥ १२९ ॥ अभिजग्मुः प्रसह्यैतानविचार्य बलाबलम् । तांस्त्रस्तान् वध्यमानांश्च दैवैर्दृष्ट्वासुरांस्तदा ॥ १३० ॥ देवी क्रुद्धाब्रवीदेनाननि
न्द्रत्वं करोम्यहम् । संस्तभ्य शीघ्रं संरम्भादिन्द्रं साऽभ्यचरत्ततः ॥ १३१ ॥ ततः संस्तम्भितं दृष्ट्वा शक्रं देवास्तु यूपवत् । व्यद्रवन्त ततो भीता दृष्ट्वा
शक्रं वशीकृतम् ॥ १३२ ॥ गतेषु सुरसङ्घेषु विष्णुरिन्द्रमभाषत । मां त्वं प्रविश भद्रन्ते नेष्यामि त्वां सुरेश्वर ॥ १३३ ॥ एवमुक्तस्ततो विष्णुं प्रविवेश पुरन्दरः ।
विष्णुना रक्षितं दृष्ट्वा देवी क्रुद्धा वचोऽवदत् ॥ १३४ ॥ एषा त्वां विष्णुना सार्द्धं दहामि मघवानिव । मिषतां सर्वभूतानां दृश्यतां मे तपोबलम् ॥ १३५ ॥
तयाभिभूतौ तौ देवाविन्द्रविष्णू जजल्पतुः । कथं मुच्येव सहितौ विष्णुरिन्द्रमभाषत ॥ १३६ ॥ इन्द्रोऽब्रवीज्जहि ह्येनां यावन्नौ न दहेद्विभो । विशेषेणाभिभूतो
ऽहमतस्त्वञ्च हि मा चिरम् ॥ १३७ ॥ ततः समीक्ष्य तां विष्णुः स्त्रीवधं कर्तुमास्थितः । अभिध्याय ततश्चक्रमापन्नः सत्वरं प्रभुः ॥ १३८ ॥ तस्याः सत्वरमाणायाः

शीघ्रकारी सुरारिहा । स्त्रिया विष्णुस्ततो देव्या क्रूरं बुद्धा चिकीर्षितम् । क्रुद्धस्तदस्त्रमाविद्धय शिरश्चिच्छेद माधवः॥१३९॥तं दृष्ट्वा स्त्रीवधं घोरं चुकोप भृगुरीश्वरः । ततोऽभिशस्तो भृगुणा विष्णुर्भार्यावधे तदा॥१४०॥यस्मात्ते जानता धर्मानवध्या स्त्री निषूदिता । तस्मात्त्वं सप्तकृत्वो वै मानुषेषु प्रपत्स्य सि॥१४१॥ततस्तेनाभिशापेन नष्टे धर्मे पुनः पुनः । लोके सर्वहितार्थाय जायते मानुषेष्विह॥१४२॥अनुव्याहृत्य विष्णुं स तदादाय शिरः स्वयम् । समानीय ततः काये अपो गृह्येदमब्रवीत् ॥ १४३ ॥ एष त्वां विष्णुना सत्ये हतां संजीवयाम्यहम् । यदि कृत्स्नो मया धर्मश्चरितो ज्ञायतेऽपि वा । तेन सत्येन जीवस्व यदि सत्यं ब्रवीम्यहम् ॥१४४॥ सत्याभिव्याहृता तस्य देवी संजीविता तदा । तदा तां प्रोक्ष्य शीताभिरद्भिर्जीवेति सोऽब्रवीत् ॥ १४५ ॥ ततस्तां सर्वभूतानि दृष्ट्वा सुप्तोत्थितामिव । साधु साध्वित्यदृश्यानां वाचस्ताः सस्वरुर्दिशः ॥ १४६ ॥ दृष्ट्वा सञ्जीवितामेवं देवीं तां भृगुणा तदा । मिषतां सर्वभूतानां तदद्भुतमिवाभवत् ॥ १४७ ॥ असंभ्रान्तेन भृगुणा पत्नीं सञ्जीवितां ततः । दृष्ट्वा शक्रो न लेभेऽथ शर्म काव्यभयात्ततः ॥ १४८ ॥ प्रजागरे ततश्चेन्द्रो जयन्तीमात्मनः सुताम् । प्रोवाच मतिमान् वाक्यं स्वां कन्यां पाकशासनः ॥ १४९ ॥ एष काव्यो ह्यनिन्द्राय चरते दारुणं तपः । तेनाहं व्याकुलः पुत्रि कृतो धृतिमता दृढम् ॥१५०॥ गच्छ सम्भावयस्वैनं श्रमापनयनैः शुभैः । तैस्तैर्मनोनुकूलैश्च ह्युपचारैरतन्द्रिता ॥ १५१ ॥ देवी सा हीन्द्रदुहिता जयन्ती शुभचारिणी । युक्तव्यानञ्च शाम्यं तं दुर्बलं धृतिमास्थितम् ॥ १५२ ॥ पित्रा यथोक्तं काव्यं सा काव्ये कृत वती तदा । गीर्भिश्चैवानुकूलाभिः स्तुवती वल्गुभाषिणी ॥ १५३ ॥ गात्रसंवाहनैः काले सेवमाना सुखावहैः । शुश्रूषन्त्यनुकूला च उवास बहुलाः समाः ॥ १५४ ॥ पूर्णे धूमव्रते चापि घोरे वर्षसहस्रिके । वरेण च्छन्दयामास काव्यं प्रीतोऽभवत्तदा ॥ १५५ ॥ एवं ब्रुवंस्त्वयैकेन चीर्णं नान्येन केनचित् । तस्मात्त्वं तपसा बुद्धया श्रुतेन च बलेन च ॥ १५६ ॥ तेजसा चापि विबुधान् सर्वानभिभविष्यसि । यच्च किञ्चिन्मम ब्रह्मन् विद्यते भृगुनन्दन ॥ १५७ ॥ साङ्गञ्च सरहस्यञ्च यज्ञोपनिषदान्तथा । प्रतिभास्यति ते सर्वं तच्चाख्यन्तं न कस्यचित् ॥ १५८ ॥ सर्वाभिभावी तेन त्वं द्विजश्रेष्ठो भविष्यसि । एवं दत्त्वा वरांस्तस्मै भार्गवाय पुनः पुनः ॥ १५९ ॥ अजेयत्वं धनेशत्वमवध्यत्वं च वै ददौ । एतान् लब्ध्वा वरान् काव्यः सम्प्रहृष्टतनूरुहः ॥१६०॥ हर्षात् प्रादुर्बभौ तस्य देवस्तोत्रं महेश्वरम् । तदा तिर्यक्स्थितस्त्वेवं तुष्टुवे नीललोहितम् ॥ १६१ ॥ नमोऽस्तु शितिकण्ठाय सुरापाय सुवर्चसे । रिरिहाणाय लोपाय वत्सराय जगत्पते ॥ १६२ ॥ कपर्दिने ह्यूर्द्धरोम्णे हयाय करणाय च । संस्कृताय सुती र्थाय देवदेवाय रंहसे ॥ १६३ ॥ उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे । वसुरेताय रुद्राय तपसे चीरवाससे ॥ १६४ ॥ हस्वाय मुक्तकेशाय सेनान्ये

रोहिताय च ॥ १६५ ॥ कवये राजवृद्धाय तक्षकक्रीडनाय च । गिरिशायार्कनेत्राय यतिने जाम्बवाय च । सुवृत्ताय सुहस्ताय धन्विने भार्गवाय च ॥ १६६ ॥ सहस्रबाहवे चैव सहस्रामलचक्षुषे । सहस्रकुक्षये चैव सहस्रचरणाय च ॥ १६७ ॥ सहस्रशिरसे चैव बहुरूपाय वेधसे । भवाय विश्वरूपाय श्वेताय पुरुषाय च ॥ १६८ ॥ निषङ्गिणे कवचिने सूक्ष्माय क्षपणाय च । ताम्राय चैव भीमाय उग्राय च शिवाय च ॥ १६९ ॥ बभ्रवे च पिशङ्गाय पिङ्गलायारुणाय च । महादेवाय शर्वाय विश्वरूपाशिवाय च ॥ १७० ॥ हिरण्याय च शिष्टाय श्रेष्ठाय मध्यमाय च । पिनाकिने चेषुमते चित्राय रोहिताय च ॥ १७१ ॥ दुन्दुभ्यायैकपादाय अर्हाय बुद्धये तथा । मृगव्याधाय सर्पाय स्थाणवे भीषणाय च ॥ १७२ ॥ बहुरूपाय चोग्राय त्रिनेत्रायेश्वराय च । कपिलायैकवीराय मृत्यवे त्र्यम्बकाय च ॥ १७३ ॥ वास्तोष्पते विनाकाय शङ्कराय शिवाय च । आरण्याय गुहस्थाय यतिने ब्रह्मचारिणे ॥ १७४ ॥ साङ्ख्याय चैव योगाय ध्यानिने दीक्षिताय च । अन्तर्हिताय शर्वाय मान्याय मालिने तथा ॥ १७५ ॥ बुद्धाय चैव शुद्धाय मुक्तये केवलाय च । रोधसे चेकितानाय ब्रह्मिष्ठाय महर्षये ॥ १७६ ॥ चतुष्पादाय मेध्याय धर्मिणे शीघ्रगाय च । शिखण्डिने कपालाय दंष्ट्रिणे विश्वमेधसे ॥ १७७ ॥ अप्रतीघाताय दीप्ताय भास्कराय सुमेधसे । क्रूराय विकृतायैव बीभत्साय शिवाय च ॥ १७८ ॥ सौम्याय चैव पुण्याय धार्मिकाय शुभाय च । अवध्याय मृताङ्गाय नित्याय शाश्वताय च ॥ १७९ ॥ साद्याय शरभायैव शूलिने च त्रिचक्षुषे । सोमपायाज्यपायैव धूमपायोष्मपाय च ॥ १८० ॥ शुचये रेरिहाणाय सद्योजाताय मृत्यवे । पिशिताशाय सर्वाय मेघाय वैद्युताय च ॥ १८१ ॥ व्याश्रिताय श्रविष्ठाय भारतायान्तरिक्षये । क्षमाय सहमानाय सत्याय तपनाय च ॥ १८२ ॥ त्रिपुरघ्नाय दीप्ताय चक्राय रोमशाय च । तिग्मायुधाय मेध्याय सिद्धाय च पुलस्तये ॥ १८३ ॥ रोचमानाय चण्डाय स्फीताय ऋषभाय च । भोगिने पुञ्जमानाय शान्तायैवोर्ध्वरेतसे ॥ १८४ ॥ अघघ्नाय मखघ्नाय मृत्यवे यज्ञियाय च । कृशानवे प्रचेताय वह्नये किशलाय च ॥ १८५ ॥ सिकत्याय प्रसन्नाय वरेण्यायैव चक्षुषे । क्षिप्रगवे सुधन्वाय प्रमेध्याय पिवाय च ॥ १८६ ॥ रक्षोघ्नाय पशुघ्नाय विघ्नाय शयनाय च । विभ्रान्ताय महन्ताय अन्तये दुर्गमाय च ॥ १८७ ॥ दक्षाय च जघन्याय लोकानामीश्वराय च । अनामयाय चोर्ध्वाय संहत्याधिष्ठिताय च ॥ १८८ ॥ हिरण्यबाहवे चैव सत्याय शमनाय च । असिकल्याय माघाय रीरिण्यायैकचक्षुषे ॥ १८९ ॥ श्रेष्ठाय वामदेवाय ईशानाय च धीमते । महाकल्पाय दीप्ताय रोदनाय हसाय च ॥ १९० ॥ वृतधन्वने कवचिने रथिने च वरूथिने । भृगुनाथाय शुक्राय वह्निरिष्टाय धीमते ॥ १९१ ॥ अघाय अघशंसाय विप्रियाय प्रियाय च । दिग्वासःकृत्तिवासाय भगघ्नाय नमोऽस्तु ते ॥ १९२ ॥ पशूनां

पतये चैव भूतानां पतये नमः। प्रणवे ऋग्यजुःसाम्ने स्वधायै च सुधाय च ॥ १९३ ॥ वषट्कारतमायैव तुभ्यमन्तात्मने नमः। स्रष्ट्रे धात्रे तथा होत्रे हर्त्रे च क्षपणाय च ॥ १९४ ॥ भूतभव्यभवायैव तुभ्यं कालात्मने नमः। वसवे चैव साध्याय रुद्रादित्याश्विनाय च ॥ १९५ ॥ विश्वाय मरुते चैव तुभ्यन्देवात्मने नमः। अग्निसोमार्त्विगिज्याय पशुमन्त्रौषधाय च ॥ १९६ ॥ दाक्षिणावभृथायैव तुभ्यं यज्ञात्मने नमः। तपसे चैव सत्याय त्यागाय च शमाय च ॥ १९७ ॥ अहिंसायाप्यलोभाय सुवेशायातिशाय च। सर्वभूतात्मभूताय तुभ्यं योगात्मने नमः ॥ १९८ ॥ पृथिव्यै चान्तरिक्षाय दिवाय च महाय च। जनस्तपाय सत्याय तुभ्यं लोकात्मने नमः ॥ १९९ ॥ अव्यक्तायाथ महते भूतायैवेन्द्रियाय च। तन्मात्राय महान्ताय तुभ्यं तत्त्वात्मने नमः ॥ २०० ॥ नित्याय चार्थलिङ्गाय सूक्ष्माय चेतनाय च। शुद्धाय विभवे चैव तुभ्यं नित्यात्मने नमः ॥ २०१ ॥ नमस्ते त्रिषु लोकेषु स्वरान्तेषु भवादिषु। सत्यान्तेषु महान्तेषु चतुर्षु च नमोऽस्तु ते ॥२०२॥ नमःस्तोत्रे मया ह्यस्मिन् सदसद्व्याहृतं विभो। मद्भक्त इति ब्रह्मण्य सर्वन्तत् क्षन्तुमर्हसि॥२०३॥ इति श्रीमहापुराणे वायुप्रोक्ते विष्णुमाहात्म्ये शम्भुस्तवकीर्त्तनं नाम पञ्चत्रिंशोऽध्यायः ॥३५॥ छ॥ सूत उवाच॥ एवमाराध्य देवेशमीशानं नीललोहितम्। ब्रह्मोति प्रणतस्तस्मै प्राञ्जलिर्वाक्यमब्रवीत्॥१॥ काव्यस्य गात्रं संस्पृश्य हस्तेन प्रीतिमान् भवः। निकामं दर्शनं दत्त्वा तत्रैवान्तरधीयत ॥ २ ॥ ततः सोऽन्तर्हिते तस्मिन् देवेशानुचरे तदा। तिष्ठन्तीं प्राञ्जलिर्भूत्वा जयन्तीमिदमब्रवीत् ॥३॥ कस्य त्वं सुभगे का वा दुःखिते मयि दुःखिता। महता तपसा युक्तं किमर्थं माञ्जुगोपसि ॥ ४ ॥ अनया सततं भक्त्या प्रश्रयेण दमेन च। स्नेहेन चैव सुश्रोणि प्रीतोऽस्मि वरवर्णिनि ॥ ५ ॥ किमिच्छसि वरारोहे कस्ते कामः समृध्यताम्। तं ते संपूरयाम्यद्य यद्यपि स्यात् सुदुर्लभम् ॥ ६ ॥ एवमुक्ताऽऽब्रवीदेनं तपसा ज्ञातुमर्हसि। चिकीर्षितं मे ब्रह्मिष्ठ त्वं हि वेत्थ यथातथम् ॥ ७ ॥ एवमुक्तोऽब्रवीदेनां दृष्ट्वा दिव्येन चक्षुषा। माहेन्द्री त्वं वरारोहे मद्धितार्थमिहागता ॥ ८ ॥ मया सह त्वं सुश्रोणि दश वर्षाणि भामिनि। अदृश्यं सर्वभूतैस्तु संप्रयोगमिहेच्छसि ॥ ९ ॥ देवेन्द्रानलवर्णाभे वरारोहे सुलोचने। इमं वृणीष्व कामं ते मत्तो वै वल्गुभाषिणि ॥ १० ॥ एवं भवतु गच्छामो गृहान् वै मत्तकाशिनि। ततः स्वगृहमागम्य जयन्त्या सहितः प्रभुः ॥ ११ ॥ स तया संवसद्देव्या दश वर्षाणि भागशः। अदृश्यः सर्वभूतानां मायया संवृतस्तदा ॥ १२ ॥ कृतार्थमागतं दृष्ट्वा काव्यं सर्वे दितेः सुताः। अभिजग्मुर्गृहं तस्य मुदितास्ते दिदृक्षवः ॥ १३ ॥ गता यदा न पश्यन्तो जयन्त्या संवृतं गुरुम्। दाक्षिण्यं तस्य तद्बुध्वा प्रतिजग्मुर्यथागतम् ॥ १४ ॥ बृहस्पतिस्तु संरुद्धं ज्ञात्वा काव्यं चकार ह। पित्रर्थं दश वर्षाणि जयन्त्या हितकाम्यया ॥ १५ ॥ बुद्ध्वा तदन्तरं सोऽथ दैत्यानामिव चोदितः। काव्यस्य

रूपमास्थाय सोऽसुरान्समभाषत ॥ १६ ॥ ततः समागतान् दृष्ट्वा बृहस्पतिरुवाच तान्। स्वागतं मम याज्यानां संप्राप्तोऽस्मि हिताय च ॥ १७ ॥ अहं वोऽध्यापयिष्यामि प्राप्ता विद्या मया हि सा। ततस्ते हृष्टमनसो विद्यार्थमुपपेदिरे ॥ १८॥ पूर्णकामस्तदा तस्मिन् समये दशवार्षिके। ययौ च समकालं स सद्योत्पन्नमतिस्तदा ॥ १९ ॥ समयान्ते देवयानी सद्यो जाता सुता तदा। बुद्धिं चक्रे ततश्चापि याज्यानां प्रत्यवेक्षणे ॥ २० ॥ शुक्र उवाच ॥ देवि गच्छामहे द्रष्टुं तव याज्यान् शुचिस्मिते । विभ्रान्तप्रेक्षिते साध्वि त्रिवर्णायतलोचने ॥ २१ ॥ एवमुक्ताऽब्रवीद्देवी भज भक्तान् महाव्रत। एष ब्रह्मन् सतां धर्मो न धर्मं लोपयामि ते ॥ २२ ॥ सूत उवाच ॥ ततो गत्वासुरान् दृष्ट्वा देवाचार्येण धीमता। वञ्चितान् काव्यरूपेण वेधसाऽसुरमब्रवीत् ॥ २३ ॥ काव्यं मां तात जानीध्वं एष ह्याङ्गिरसो भुवि। वञ्चिता बत यूयं वै मयि शक्ते तु दानवाः॥ २४ ॥ श्रुत्वा तथा ब्रुवाणन्तं सम्भ्रान्ता दितिजास्ततः। प्रेक्षन्ते स्म ह्युभौ तत्र सितासितशुचिस्मितौ ॥ २५ ॥ सम्प्रमूढाः स्थिताः सर्वे प्रापद्यन्त न किञ्चन। ततस्तेषु प्रमूढेषु काव्यस्तान् पुनरब्रवीत् ॥२६॥ आचार्य्यो वो ह्यहं काव्यो देवाचार्योऽयमाङ्गिराः। अनुगच्छत मां सर्वे त्यजतैनं बृहस्पतिम् ॥ २७ ॥ एवमुक्तासुराः सर्वे तावुभौ समवेक्षत। तदाऽसुरा विशेषन्तु न व्यजानंस्तयोर्द्वयोः ॥ २८ ॥ बृहस्पतिरुवाचैतानसम्भ्रान्तोऽयमाङ्गिराः। काव्योऽहं यो गुरुर्दैत्या मद्रूपोऽयं बृहस्पतिः ॥ २९ ॥ स मोहयति रूपेण मामकेनैष वोऽसुराः। श्रुत्वा तस्य ततस्ते वै संमन्त्र्यार्थवचोऽब्रुवन् ॥३०॥ अयन्नो दश वर्षाणि सततं शास्ति वै प्रभुः। एष वै गुरुरस्माकमन्तरेप्सुरयं द्विजः ॥ ३१ ॥ ततस्ते दानवाः सर्वे प्रणिपत्याभिवाद्य च। वचनं जगृहुस्तस्य चिराभ्यासेन मोहिताः ॥ ३२ ॥ ऊचुस्तमसुराः सर्वे क्रुद्धाः संरक्तलोचनाः। अयङ्गुरुर्हितेऽस्माकं गच्छ त्वं नासि नो गुरुः ॥ ३३ ॥ भार्गवोऽङ्गिरसो वाथं भवत्वेवैष नो गुरुः। स्थिता वयं निदेशेऽस्य गच्छ त्वं साधु मा चिरम् ॥३४॥ एवमुक्त्वासुराः सर्वे प्रापद्यन्त बृहस्पतिम्। यदा न प्रतिपद्यन्ते तेनोक्तं तन्महद्धितम् ॥ ३५ ॥ चुकोप भार्गवस्तेषामवलेपेन वै तदा। बोधिता हि मया यस्मान्न मां भजत दानवाः ॥ ३६ ॥ तस्मात् प्रनष्टसंज्ञा वै पराभवङ्गमिष्यथ। इति व्याहृत्य तान् काव्यो जगामाथ यथागतम् ॥ ३७ ॥ ज्ञात्वाऽभिशस्तानसुरान् काव्येन तु बृहस्पतिः। कृतार्थः स तदा हृष्टः स्वं रूपं प्रत्यपद्यत। बुद्धाऽसुरांस्तदा भ्रष्टान् कृतार्थोऽन्तरधीयत ॥ ३८ ॥ ततः प्रनष्टे तस्मिंस्ते विभ्रान्ता दानवास्तदा। अहो धिग् वञ्चिताः स्मेह परस्परमथाब्रुवन् ॥ ३९ ॥ पृष्ठतो विमुखाश्चैव ताडिता वेधसा वयम्। दग्धाश्चैवोपयोगाच्च स्वेस्वे चार्थेषु मायया ॥ ४० ॥ ततोऽसुराः परित्रस्ता देवेभ्यस्त्वरिता ययुः। प्रह्लादमग्रतः कृत्वा काव्यस्यानुगमं पुनः ॥ ४१ ॥ ततः काव्यं समासाद्य अभितस्थु

रवाङ्मुखाः । तानागतान् पुनर्दृष्ट्वा काव्यो याज्यानुवाच ह ॥ ४२ ॥ मयापि बोधिताः काले यतो मां नाभिनन्दथ । ततस्तेनावले
गता यूयं पराभवम् ॥ ४३ ॥ प्रह्लादस्तमथोवाच मानं त्वं त्यज भार्गव । स्वान् याज्यान् भजमानांश्च भक्तांश्चैव विशेषतः ॥ ४४
त्वया पृष्टा वयं तेन देवाचार्य्येण मोहिताः । भक्तानर्हसि नस्त्रातुं ज्ञात्वा दीर्घेण चक्षुषा ॥ ४५ ॥ यदि नस्त्वं न कुरुषे प्रसादं भृगुनन्दन । अपध्य
स्त्वया ह्यद्य प्रवेक्ष्यामो रसातलम् ॥ ४६ ॥ सूत उवाच ॥ ज्ञात्वा काव्यो यथातत्त्वं कारुण्येनानुकम्पया । एवमुक्तोऽनुनीतः स स्तुतः
न्ययच्छत ॥ ४७ ॥ उवाचेदन्न भेतव्यं न गन्तव्यं रसातलम् । अवश्यम्भावी ह्यर्थोऽयं प्राप्तो वो मयि जाग्रति ॥ ४८ ॥ न शक्यमन्यथा कर्तुं दृष्टं
बलवत्तरम् । संज्ञा प्रनष्टा या वोऽद्य कामं तां प्रतिलप्स्यथ ॥ ४९ ॥ प्राप्तः पर्य्यायकालो व इति ब्रह्माऽभ्यभाषत । मत्प्रसादाच्च युष्माभिर्भुक्तं
क्यमूर्जितम् ॥ ५० ॥ युगाख्यो दश संपूर्णा देवानाक्रम्य मूर्द्धनि । तावन्तमेव कालं वै ब्रह्मा राज्यमभाषत ॥ ५१ ॥ सावर्णिके पुनस्तुभ्यं रा
किल भविष्यति । लोकानामीश्वरो भावी पौत्रस्तव पुनर्बलिः ॥ ५२ ॥ एवं किलमहं प्रोक्तः पौत्रस्ते ब्रह्मणा स्वयम् । तथाहृतेषु लोकेषु तपोऽ
न किलाभवत् ॥ ५३ ॥ यस्मात् प्रवृत्तयश्चास्य न कामानाभिसन्धिताः । तस्मादजेन प्रीतेन दत्तं सावर्णिकेऽन्तरे ॥ ५४ ॥ देवराज्यं बलेर्भा
मिति मामीश्वरोऽब्रवीत् । तस्माददृश्यो भूतानां कालाकाङ्क्षी स तिष्ठति ॥ ५५ ॥ प्रीतेन चामरत्वं वै दत्तं तुभ्यं स्वयम्भुवा । तस्मान्निर
कस्त्वं वै पर्य्यायं सह माकुलः ॥ ५६ ॥ न च शक्यं मया तुभ्यं पुरस्ताद्वै विसार्पितुम् । ब्रह्मणा प्रतिषिद्धोऽस्मि भविष्यं जानता प्रभो ॥ ५७ ॥
च शिष्यौ द्वौ मह्यं तुल्यावेतौ बृहस्पतेः । दैवतैः सह संरब्धान् सर्व्वान् वो धारयिष्यतः ॥ ५८ ॥ एवमुक्तस्तु दैतेयाः काव्येनाक्लिष्टकर्म्मण
ततस्ताभ्यां ययुः सार्द्धं प्रह्लादप्रमुखास्तदा ॥ ५९ ॥ अवश्यम्भावमर्थत्वं श्रुत्वा शुक्राच्च दानवाः । सकृदाशंसमानास्ते जयं काव्येन भाषितम् ॥६
दंशिताः सायुधाः सर्वे ततो देवान् समाह्वयन् । अथ देवासुरान् दृष्ट्वा संग्रामे समुपस्थितान् ॥ ६१ ॥ ततः संवृत्तसन्नाहा देवास्तान् समयोधय
दैवासुरे ततस्तस्मिन् वर्त्तमाने शतं समाः । अजयन्नसुरा देवान् भग्ना देवा अमन्त्रयन् ॥ ६२ ॥ देवा ऊचुः ॥ षण्डामार्कप्रभावं न जानीम
सुरैर्वयम् । तस्माद्यज्ञं समुद्दिश्य कार्य्यं चात्महितश्च यत् ॥ ६३ ॥ तज्ज्ञानापहृतावेतौ कृत्वा जेष्यामहेऽसुरान् । अथोपामन्त्रयन् देवाः ष
मार्कौ तु तावुभौ ॥ ६४ ॥ यज्ञे समाह्वयिष्यामस्त्यजतमसुरान् द्विजौ । ग्रहं तं वा ग्रहीष्यामो ह्यनुजित्य तु दानवान् ॥ ६५ ॥ एवं तत्यजतुस्तं
षण्डामार्कौ तदासुरान् । ततो देवा जयं प्राप्ता दानवाश्च पराभवम् ॥ ६६ ॥ देवासुरान् पराभाव्य षण्डामार्कावुपागमन् । काव्यशापाभिभूत

घनाधाराश्च ते पुनः ॥ ६७ ॥ वध्यमानास्तदा देवैर्विविशुस्ते रसातलम् । एवं निरुद्यमास्ते वै कृताः शक्रेण दानवाः । ततःप्रभृति शापेन भृगुनैमित्तिकेन च ॥ ६८ ॥ जज्ञे पुनः पुनर्विष्णुर्यज्ञे च शिथिले प्रभुः । कर्त्तुं धर्म्मव्यवस्थानमधर्म्मस्य च नाशनम् ॥ ६९ ॥ प्रह्लादस्य निदेशे तु येऽसुरा न व्यवस्थिताः । मनुष्यवध्यांस्तान् सर्व्वान् ब्रह्मा व्याहारयत् प्रभुः ॥ ७० ॥ धर्म्मान्नारायणस्तस्मात् सम्भूतश्चाक्षुषेऽन्तरे । यज्ञं प्रवर्तयामास चैत्ये वैवस्वतेऽन्तरे ॥ ७१ ॥ प्रादुर्भावे तदान्यस्य ब्रह्मैवासीत् पुरोहितः । चतुर्थ्यान्तु युगाख्यायामापन्नेष्वसुरेष्वथ ॥ ७२ ॥ सम्भूतः स समुद्रान्तर्हिरण्यकशिपोर्वधे । द्वितीयो नरसिंहोऽभूद्रुद्रः सुरपुरस्सरः ॥ ७३ ॥ बलिसंस्थेषु लोकेषु त्रेतायां सप्तमे युगे । दैत्यैस्त्रैलोक्य आक्रान्ते तृतीयो वामनोऽभवत् ॥ ७४ ॥ संक्षिप्यात्मानमङ्गेषु बृहस्पतिपुरस्सरम् । यजमानन्तु दैत्येन्द्रमदित्याः कुलनन्दनः । द्विजो भूत्वा शुभे काले बलिं वैरोचनम्पुरा ॥ ७५ ॥ त्रैलोक्यस्य भवान् राजा त्वयि सर्व्वं प्रतिष्ठितम् । दातुमर्हसि मे राजन् विक्रमांस्त्रीनिति प्रभुः ॥ ७६ ॥ ददामीत्येव तं राजा बलिर्वैरोचनोऽब्रवीत् । वामनन्तं च विज्ञाय ततोऽनुमुदितः स्वयम् ॥ ७७ ॥ स वामनो दिवं खं च पृथिवीं च द्विजोत्तमाः । त्रिभिः क्रमैर्विश्वमिदं जगदाक्रामत प्रभुः ॥ ७८ ॥ अत्यरिच्यत भूतात्मा भास्करं स्वेन तेजसा । प्रकाशयन् दिशः सर्व्वाः प्रदिशश्च महायशाः ॥७९॥ शुशुभे स महाबाहुः सर्व्वलोकान् प्रकाशयन् । आसुरीं श्रियमाहृत्य त्रींल्लोकांश्च जनार्दनः । सपुत्रपौत्रानसुरान् पातालतलमानयत् ॥ ८० ॥ नमुचिः शम्बरश्चैव प्रह्लादश्चैव विष्णुना । क्रूरा हता विनिर्द्धूता दिशः संप्रतिपेदिरे ॥ ८१ ॥ महाभूतानि भूतात्मा सविशेषाणि माधवः । कालञ्च सकलं विप्रास्तत्राद्भुतमदर्शयत् ॥ ८२ ॥ तस्य गात्रे जगत्सर्वमात्मानमनुपश्यति । न किञ्चिदस्ति लोकेषु यदव्याप्तं महात्मना ॥ ८३ ॥ तद्धि रूपमुपेन्द्रस्य देवदानवमानवाः । दृष्ट्वा सम्मुमुहुः सर्वे विष्णुतेजोविमोहिताः ॥ ८४ ॥ बलिः सितो महापाशैः सबन्धुः ससुहृद्गणः । विरोचनकुलं सर्वं पाताले सन्निवेशितम् ॥ ८५ ॥ ततः सर्वामरैश्वर्यं दत्त्वेन्द्राय महात्मने । मानुषेषु महाबाहुः प्रादुरासीज्जनार्दनः ॥ ८६ ॥ एतास्तिस्रः स्मृतास्तस्य दिव्याः सम्भूतयः शुभाः । मानुष्याः सप्त यास्तस्य शापजास्तान्निबोधत ॥ ८७ ॥ त्रेतायुगे तु दशमे दत्तात्रेयो बभूव ह । नष्टे धर्मे चतुर्थश्च मार्कण्डेयपुरःसरः ॥ ८८ ॥ पञ्चमः पञ्चदश्यां तु त्रेतायां सम्बभूव ह । मान्धातुश्चक्रवर्त्तित्वे तस्थौ तथ्यपुरःसरः ॥ ८९ ॥ एकोनविंशे त्रेतायां सर्व्वक्षत्रान्तकोऽभवत् । जामदग्न्यस्तथा षष्ठो विश्वामित्रपुरःसरः ॥ ९० ॥ चतुर्विंशे युगे रामो वसिष्ठेन पुरोधसा । सप्तमो रावणस्यार्थे जज्ञे दशरथात्मजः ॥ ९१ ॥ अष्टमो द्वापरे विष्णुरष्टाविंशे पराशरात् । वेदव्यासस्ततो जज्ञे जातूकर्णपुरःसरः ॥ ९२ ॥ तथैव नवमो

विष्णुरदित्याः कश्यपात्मजः । देवक्यां वसुदेवात्तु ब्रह्मगार्ग्यपुरःसरः ॥ ९३ ॥ अप्रमेयो नियोज्यश्च यत्र कामचरो वशी । क्रीडते भगवाँ
ल्लोके बालः क्रीडनकैरिव ॥ ९४ ॥ न प्रमातुं महाबाहुः शक्योऽसौ मधुसूदनः । परं परममेतस्माद्विश्वरूपान्न विद्यते ॥ ९५ ॥ अष्टाविंश
तिमे तद्वद्द्वापरस्यांशसङ्क्षये । नष्टे धर्मे तदा जज्ञे विष्णुर्वृष्णिकुले प्रभुः ॥ ९६ ॥ कर्त्तुं धर्मव्यवस्थानमसुराणां प्रणाशनम् । मोहयन् सर्वभूतानि
योगात्मा योगमायया ॥ ९७ ॥ प्रविष्टो मानुषीं योनिं प्रच्छन्नश्चरते महीम् । विहारार्थं मनुष्येषु सान्दीपनिपुरःसरम् ॥ ९८ ॥ यत्र कंसश्च
शाल्वश्च द्विविदश्च महासुरम् । अरिष्टं वृषभञ्चैव पूतनां केशिनं हयम् ॥ ९९ ॥ नागं कुवलयापीडं मल्लराजगृहाधिपम् । दैत्यान् मानुषदेहस्थान्
सूदयामास वीर्यवान् ॥ १०० ॥ छिन्नं बाहुसहस्रञ्च बाणस्याद्भुतकर्मणः । नरकश्च हतः सङ्ख्ये यवनश्च महाबलः ॥ १०१ ॥ हृतानि च महीपानां
सर्वरत्नानि तेजसा । दुराचाराश्च निहताः पार्थिवा ये रसातले ॥ १०२ ॥ एते लोकहितार्थाय प्रादुर्भावा महात्मनः । अस्मिन्नेव युगे क्षीणे सन्ध्या
श्लिष्टे भविष्यति ॥ १०३ ॥ कल्किर्विष्णुयशा नाम पाराशर्यः प्रतापवान् । दशमो भाव्यसम्भूतो याज्ञवल्क्यपुरःसरः ॥ १०४ ॥ अनुकर्षन् सर्वसेनां
हस्त्यश्वरथसङ्कुलाम् । प्रगृहीतायुधैर्विप्रैर्वृतः शतसहस्रशः ॥ १०५ ॥ नात्यर्थं धार्मिका ये च ये च धर्मद्विषः क्वचित् । उदीच्यान्मध्यदेशांश्च तथा
विन्ध्यापरान्तिकान् ॥ १०६ ॥ तथैव दाक्षिणात्यांश्च द्रविडान् सिंहलैः सह । गान्धारान् पारदांश्चैव पह्लवान् यवनाञ्छकान् ॥ १०७ ॥ तुषारान्
बर्बरांश्चैव पुलिन्दान् दरदान् खसान् । लम्पाकानन्धकान् रुद्रान् किरातांश्चैव स प्रभुः ॥ १०८ ॥ प्रवृत्तचक्रो बलवान् म्लेच्छानामन्तकृद्बली । अदृश्यः
सर्वभूतानां पृथिवीं विचरिष्यति ॥ १०९ ॥ मानवः स तु संजज्ञे देवस्यांशेन धीमतः । पूर्वजन्मनि विष्णुर्यः प्रमितिर्नाम वीर्यवान् ॥ ११० ॥
गोत्रेण वै चन्द्रसमः पूर्णे कलियुगेऽभवत् । इत्येतास्तस्य देवस्य दश सम्भूतयः स्मृताः ॥ १११ ॥ तं तं कालञ्च कार्यञ्च तत्तदुद्दिश्य कारणम् ।
अंशेन त्रिषु लोकेषु तास्ता योनीः प्रपत्स्यते ॥ ११२ ॥ पञ्चविंशोत्थिते कल्पे पञ्चविंशति वै समाः । विनिघ्नन् सर्व्वभूतानि मानुषानेव सर्व्वशः ॥११३॥
कृत्वा बीजावशेषान्तु महीं क्रूरेण कर्म्मणा । संशातयित्वा वृषलान् प्रायशस्तानधार्म्मिकान् ॥ ११४ ॥ ततः स वै तदा कल्किश्चरितार्थः ससैनिकः ।
कर्मणा निहता ये तु सिद्धास्ते तु पुनः स्वयम् ॥ ११५ ॥ अकस्मात् कुपितान्योन्यं भविष्यन्ति च मोहिताः । क्षपयित्वा तु तान् सर्वान् भाविनार्थेन
चोदितान् ॥११६॥ गङ्गायमुनयोर्मध्ये निष्ठां प्राप्स्यति सानुगः । ततो व्यतीते कल्कौ तु सामान्यैः सह सैनिकैः॥११७॥नृपेष्वथ विनष्टेषु तदा त्वप्रग्रहाः
प्रजाः । रक्षणे विनिवृत्ते तु हत्वा चान्योन्यमाहवे॥११८॥परस्परहृताश्वासा निराक्रन्दाः सुदुःखिताः । पुराणि हित्वा ग्रामांश्च तुल्यास्ता निष्परिग्रहाः॥११९॥

प्रनष्टश्रुतिधर्मांश्च नष्टधर्माश्रमास्तथा । ह्रस्वा अल्पायुषश्चैव वनौकस इमे स्मृताः ॥ १२० ॥ सरित्पर्वतसेविन्यः पत्रमूलफलाशनाः । चीर
पत्राजिनधराः सङ्करं घोरमास्थिताः ॥ १२१ ॥ अल्पायुषो नष्टवार्त्ता बह्वाबाधाः सुदुःखिताः । एवं कष्टमनुप्राप्ताः कलिसन्ध्यंशके तदा ॥ १२२ ॥
प्रजाः क्षयं प्रयास्यन्ति सार्द्धं कलियुगेन तु । क्षीणे कलियुगे तस्मिन् प्रवृत्ते च कृते पुनः ॥ १२३ ॥ प्रपत्स्यन्ते यथान्यायं स्वभावादेव नान्यथा ।
इत्येतत् कीर्तितं सर्वं देवासुरविचेष्टितम् ॥ १२४ ॥ यदुवंशप्रसङ्गेन महद्वो वैष्णवं यशः । तुर्वसोस्तु प्रवक्ष्यामि पूरोर्द्रुह्योरनोस्तथा ॥ १२५ ॥ इति
श्रीमहापुराणे वायुप्रोक्ते विष्णुमाहात्म्यकथनं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ७ ॥ सूत उवाच ॥ तुर्वसोस्तु सुतो वह्निर्वह्नेर्गोभानुरात्मजः ।
गोभानोस्तु सुतो वीरस्त्रिसानुरपराजितः ॥ १ ॥ करन्धमस्त्रिसानोस्तु मरुत्तस्य न चात्मजः । अन्यस्त्ववीक्षितो राजा मरुत्तः कथितः पुरा ॥ २ ॥
अनपत्यो मरुत्तस्तु स राजासीदिति श्रुतम् । दुष्कृतं पौरवं चापि सर्वं पुत्रमकल्पयन् ॥ ३ ॥ एवं ययातिशापेन जरायाः संक्रमेण तु । तुर्वसोः
पौरवं वंशं प्रविवेश पुरा किल ॥ ४ ॥ दुष्कृतस्य तु दायादः शरूथो नाम पार्थिवः । शरूथात्तु जनापीडश्चत्वारस्तस्य चात्मजाः ॥ ५ ॥ पाण्ड्यश्च
केरलश्चैव चोलः कुल्यस्तथैव च । तेषां जनपदाः कुल्याः पाण्ड्याश्चोलाः सकेरलाः ॥ ६ ॥ द्रुह्योस्तु तनयौ वीरौ बभ्रुः सेतुश्च विश्रुतौ । अरुद्धः
सेतुपुत्रस्तु बाभ्रवो रिपुरुच्यते ॥ ७ ॥ यौवनाश्वेन समिति कृच्छ्रेण निहतो बली । युद्धं सुमहदासीत्तु मासान् परि चतुर्दश ॥ ८ ॥ अरुद्धस्य तु
दायादो गान्धारो नाम पार्थिवः । ख्यायते यस्य नाम्ना तु गान्धारविषयो महान् ॥ ९ ॥ गान्धारदेशजाश्चापि तुरगा वाजिनां वराः । गान्धारपुत्रो
धर्म्मस्तु घृतस्तस्य सुतोऽभवत् ॥ १० ॥ घृतस्य दुर्दमो जज्ञे प्रचेतास्तस्य चात्मजः । प्रचेतसः पुत्रशतं राजानः सर्व एव ते ॥ ११ ॥ म्लेच्छराष्ट्रा
धिपाः सर्वे ह्युदीचीं दिशमाश्रिताः । अनोः पुत्रा महात्मानस्त्रयः परमधार्म्मिकाः ॥ १२ ॥ सभानरश्च पक्षश्च परपक्षस्तथैव च । सभानरस्य पुत्रस्तु
विद्वान् कालानलो नृपः ॥ १३ ॥ कालानलस्य धर्म्मात्मा सृञ्जयो नाम धार्मिकः । सृञ्जयस्याभवत् पुत्रो वीरो राजा पुरञ्जयः ॥ १४ ॥ जनमेजयो महा
सत्वः पुरञ्जयसुतोऽभवत् । जनमेजयस्य राजर्षेर्महाशालोऽभवन्नृपः ॥ १५ ॥ आसीदिन्द्रसमो राजा प्रतिष्ठितयशा दिवि । महामनाः सुतस्तस्य महा
शालस्य धार्मिकः ॥ १६ ॥ सप्तद्वीपेश्वरो राजा चक्रवर्त्ती महायशाः । महामनास्तु पुत्रौ द्वौ जनयामास विश्रुतौ ॥ १७ ॥ उशीनरञ्च धर्मज्ञं तितिक्षुञ्चैव
धार्मिकम् । उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः ॥ १८ ॥ मृगा कृमी नवा दर्वा पञ्चमी च दृषद्वती । उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः ।
तपसा ते सुमहता जातवृद्धाश्च धार्मिकाः ॥ १९ ॥ मृगायास्तु मृगः पुत्रो नवाया नव एव तु । कृम्याः कृमिस्तु दर्वायाः सुव्रतो नाम धार्मिकः ॥ २० ॥

दृषद्वतीसुतश्चापि शिविरौशीन ो द्विजाः । शिवेः शिवपुरं ख्यातं यौधेयन्तु मृगस्य तु ॥ २१ ॥ नवस्य नवराष्ट्रन्तु कृमेस्तु कृमिला पुरी । सुव्रतस्य
तथा वृष्टा शिविपुत्रान्निबोधत ॥ २२ ॥ शिवेस्तु शिवयः पुत्राश्चत्वारो लोकसम्मताः । वृषदर्भः सुवीरस्तु केकयो मद्रकस्तथा ॥ २३ ॥ तेषाञ्ज
नपदाः स्फीताः केकया माद्रकास्तथा । वृषदर्भाः सुचिदर्भास्तितिक्षोः शृणुत प्रजाः ॥ २४ ॥ तैतिक्षुरभवद्राजा पूर्वस्यान्दिशि विश्रुतः । उशद्रथो
महाबाहुस्तस्य हेमः सुतोऽभवत् ॥ २५ ॥ हेमस्य सुतपा जज्ञे सुतः सुतयशा बली । जातो मनुष्ययोन्यां वै क्षीणे वंशे प्रजेप्सया ॥ २६ ॥
महायोगी स तु बलिर्बद्धो यः स महामनाः । पुत्रानुत्पादयामास चातुर्वर्ण्यकरान् भुवि ॥ २७ ॥ अङ्गं स जनयामास वङ्गं सुह्मं तथैव च । पुण्ड्रं
कलिङ्गञ्च तथा बालेयं क्षत्रमुच्यते ॥ २८ ॥ बालेया ब्राह्मणाश्चैव तस्य वंशकराः प्रभोः । बलेस्तु ब्रह्मणा दत्ता वराः प्रीतेन धीमते ॥ २९ ॥
महायोगित्वमायुश्च कल्पायुःपरिमाणकम् । संग्रामे चाप्यजेयत्वं धर्मे चैव प्रभावना ॥ ३० ॥ त्रैलोक्यदर्शनञ्चैव प्राधान्यं प्रसवे तथा । बले चाप्रति
मत्वं वै धर्मतत्त्वार्थदर्शनम् ॥ ३१ ॥ चतुरो नियतान् वर्णान् त्वं वै स्थापयितेति च । इत्युक्तो विभुना राजा बलिः शान्तिम्परां ययौ ॥ ३२ ॥
कालेन महता विद्वान् स्वं वै स्थानमुपागतः । तेषां जनपदाः स्फीता वङ्गाङ्गसुह्मकास्तथा ॥ ३३ ॥ पुण्ड्राः कलिङ्गाश्च तथा तेषां वंशं निबोधत ।
तस्य ते तनयाः सर्वे क्षेत्रजा मुनिसम्भवाः । सम्भूता दीर्घतमसः सुदेष्णायां महौजसः ॥ ३४ ॥ ऋषय ऊचुः ॥ कथं बलेः सुताः
पञ्च जनिताः क्षेत्रजाः प्रभो । ऋषिणा दीर्घतमसा एतन्नो ब्रूहि पृच्छताम् ॥ ३५ ॥ सूत उवाच ॥ अशिजो नाम विख्यात आसीद्धीमा
नृषिः पुरा । भार्या वै समता नाम बभूवास्य महात्मनः ॥ ३६ ॥ अशिजस्य कनीयांस्तु पुरोधा यो दिवौकसाम् । बृहस्पतिर्बृहत्तेजा ममतां
सोऽभ्यपद्यत ॥ ३७ ॥ उवाच ममता तन्तु बृहस्पतिमनिच्छती । अन्तर्वत्न्यस्मि ते भ्रातुर्ज्येष्ठस्याद्यमिता इति ॥ ३८ ॥ अयं हि मे महागर्भो
रोदतेऽति बृहस्पते । अशिजं ब्रह्म चाभ्यस्य षडङ्गं वेदमुद्गिरन् ॥ ३९ ॥ अमोघरेतास्त्वञ्चापि न मां भजितुमर्हसि । अस्मिन्नेव गते काले यथा
वा मन्यसे प्रभो ॥ ४० ॥ एवमुक्तस्तया सम्यग् बृहत्तेजा बृहस्पतिः । कामात्मानं महात्मा च नात्मानं सोऽभ्यधारयत् ॥ ४१ ॥ सम्ब
भूवैव धर्मात्मा तया सार्द्धं बृहस्पतिः । उत्सृजन्तं तदा रेतो गर्भस्थः सोऽभ्यभाषत ॥ ४२ ॥ नो स्नातको न्यसेद्ध्यस्मिन् द्वयोर्नेहास्ति सम्भवः ।
अमोघरेतास्त्वञ्चापि पूर्वञ्चाहमिहागतः ॥ ४३ ॥ शशाप तं तदा क्रुद्ध एवमुक्तो बृहस्पतिः । आशिजन्तं सुतं भ्रातुर्गर्भस्थं भगवानृषिः ॥ ४४ ॥
यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति । मामेवमुक्तवान् मोहात्तमो दीर्घं प्रवेक्ष्यसि ॥ ४५ ॥ ततो दीर्घतमा नाम शापादृषिरजायत ।

अथाशिजो बृहत्कीर्त्तिर्बृहस्पतिरिवौजसा ॥ ४६ ॥ ऊर्द्ध्वरेतास्ततश्चापि न्यवसद्भ्रातुराश्रमे । गोधर्मं सौरभेयात्तु वृषभाच्छ्रुतवान् प्रभो ॥ ४७ ॥ तस्य
भ्राता पितृव्यस्तु चकार भवनं तदा । तस्मिन् हि तत्र वसति यदृच्छाभ्यागतो वृषः ॥ ४८ ॥ दर्शार्थमाहृतान् दर्भांश्चचार सुरभीवृतः । जग्राह
तं दीर्घतमा विस्फुरन्तञ्च शृङ्गयोः ॥ ४९ ॥ स तेन निगृहीतस्तु न चचाल पदात्पदम् । ततोऽब्रवीद्वृषस्तं वै मुञ्च मां बलिनां वर ॥ ५० ॥
न मयासादितस्तात बलवांस्त्वद्विधः क्वचित् । त्र्यम्बकं वहता देवं यतो जातोऽस्मि भूतले ॥ ५१ ॥ मुञ्च मां बलिनां श्रेष्ठ प्रीतस्तेऽहं वरं वृणु ।
एवमुक्तोऽब्रवीदेनं जीवंस्त्वं मे क्व यास्यसि ॥ ५२ ॥ तेन त्वाहं न मोक्ष्यामि परस्वाहं चतुष्पदम् । ततस्तं दीर्घतमसं स वृषः प्रत्युवाच ह ॥ ५३ ॥
नास्माकं विद्यते तात पातकं स्तेयमेव वा । भक्ष्याभक्ष्यं न जानीमः पेयापेयञ्च सर्वशः ॥ ५४ ॥ कार्याकार्यं न वै विप्रो गम्यागम्यं तथैव च ।
न पाप्मानो वयं विप्र धर्मो ह्येषां गवां स्मृतः ॥ ५५ ॥ गवां नाम स वै श्रुत्वा संभ्रान्तस्त्वनुमुच्य तम् । भक्त्या चानुश्रविकया गोषु तं वै प्रसाद
यत् ॥ ५६ ॥ प्रसादिते गते तस्मिन् गोधर्मं भक्तितस्तु तम् । मनसैव तदादत्ते तन्निष्ठस्तत्परायणः ॥ ५७ ॥ ततो यवीयसः पत्नीमौतथ्यस्या
भ्यमन्यत । विचेष्टमानां रुदतीं दैवात् स मूढचेतनः ॥ ५८ ॥ अवलेपन्तु तं मत्वा शरद्वांस्तस्य नाक्षमत् । गोधर्मं वै बलं कृत्वा स्नुषां स समभ्मन्य
त ॥ ५९ ॥ विपर्ययन्तु तं दृष्ट्वा शरद्वान् प्रत्यचिन्तयत् । भविष्यमर्थं ज्ञात्वा च महात्मा च न मृत्युताम् ॥ ६० ॥ प्रोवाच दीर्घतमसं क्रोधात् संरक्त
लोचनः । गम्यागम्यं न जानीषे गोधर्मात् प्रार्थयत् स्नुषाम् ॥ ६१ ॥ दुर्वृत्तस्त्वं त्यजाम्येव गच्छ त्वं स्वेन कर्मणा । यस्मात्त्वमन्धो वृद्धश्च भर्त्तव्यो
दुरनुष्ठितः । तेनासि त्वं परित्यक्तो दुराचारोऽसि मे मतिः ॥ ६२ ॥ सूत उवाच ॥ कर्मण्यस्मिंस्ततः क्रूरे तस्य बुद्धिरजायत । निर्भर्त्स्य चैव
बहुशो बाहुभ्यां परिगृह्य च । कोष्ठे समुद्गे प्रक्षिप्य गङ्गाम्भसि समुत्सृजत् ॥ ६३ ॥ उह्यमानः समुद्गस्तु सप्ताहं स्रोतसा तदा । तं सस्त्रीको बलि
र्नाम राजा धर्मार्थतत्त्ववित् । अपश्यन्मज्जमानन्तु स्रोतसाभ्याशमागतम् ॥ ६४ ॥ तं गृहीत्वा स धर्मात्मा बलिर्वैरोचनस्तदा । अन्तःपुरे जुगोपैनं
भक्ष्यैर्भोज्यैश्च तर्पयन् ॥ ६५ ॥ प्रीतः स वै वरेणाथ च्छन्दयामास वै बलिम् । स च तस्माद्वरं वव्रे पुत्रार्थं दानवर्षभः ॥ ६६ ॥ बलिरुवाच ॥ सन्ता
नार्थं महाभाग भार्यया मम मानद । पुत्रान् धर्मार्थसंयुक्तानुत्पादयितुमर्हसि ॥ ६७ ॥ एवमुक्तस्तु तेनर्षिस्तथास्त्वित्युक्तवान् हि तम् । सुदेष्णां
नाम भार्यां वै राजास्मै प्राहिणोत्तदा ॥ ६८ ॥ अन्धं वृद्धञ्च तं दृष्ट्वा न सा देवी जगाम ह । स्वाञ्च धात्रेयकीं तस्मै भूषयित्वा व्यसर्जयत् ॥ ६९ ॥
कक्षीवच्चक्षुषौ तस्यां शूद्रयोन्यामृषिर्वशी । जनयामास धर्मात्मा पुत्रावेतौ महौजसौ ॥ ७० ॥ कक्षीवच्चक्षुषौ तौ तु दृष्ट्वा राजा बलिस्तदा । प्राधीतौ

विधिवत्सम्यगीश्वरौ ब्रह्मवादिनौ ॥ ७१ ॥ सिद्धौ प्रत्यक्षधर्माणौ बुद्धौ श्रेष्ठतमावपि । ममैताविति होवाच बलिर्वैरोचनस्त्वृषिम् ॥ ७२ ॥ नेत्युवाच
ततस्तन्तु ममैताविति चाब्रवीत् । उत्पन्नौ शूद्रयोनौ तु भवच्छन्ना सुरोत्तमौ ॥ ७३ ॥ अन्धं वृद्धं च मां मत्वा सुदेष्णा महिषी तव । प्राहिणोदव
मानाय शूद्रां धात्रेयकीं मम ॥ ७४ ॥ ततः प्रसादयामास पुनस्तमृषिसत्तमम् । बलिर्भार्यां सुदेष्णां च भर्त्सयामास वै प्रभुः ॥ ७५ ॥ पुनश्चैना
मलंकृत्य ऋषये प्रत्यपादयत् । तां स दीर्घतमा देवीमब्रवीद्यदि मां शुभे ॥ ७६ ॥ दध्ना लवणमिश्रेण स्वभ्य(क्त्य)क्तं नग्नकं तथा । लिहिष्यस्यजुगु
प्सन्ती ह्यापादतलमस्तकम् ॥ ७७ ॥ ततस्त्वं प्राप्स्यसे देवि पुत्रांश्च मनसेप्सितान् । तस्य सा तद्वचो देवी सर्वं कृतवती तथा ॥ ७८ ॥ अपा
नञ्च समासाद्य जुगुप्सन्ती न्यवर्जयत् । तामुवाच ततः सर्षिर्यत्ते परिहृतं शुभे । विनापानं कुमारं त्वं जनयिष्यसि पूर्वजम् ॥ ७९ ॥ ततस्तं दीर्घतमसं
सा देवी प्रत्युवाच ह । नार्हसि त्वं महाभाग पुत्रं दातुं ममेदृशम् ॥ ८० ॥ ऋषिरुवाच ॥ तवापराधो देव्येष नान्यथा भवितानु वै । देवी
दानीञ्च ते पुत्रमहं दास्यामि सुव्रते ॥ ८१ ॥ तस्यापानं विना चैव योग्याभावो भविष्यति । तां स दीर्घतमाश्चैव कुक्षौ स्पृष्ट्वेदमब्रवीत् ॥ ८२ ॥
प्राशितं दधि यत्तेऽद्य ममाङ्गाद्धि शुचिस्मिते । तेन ते पूरितो गर्भः पौर्णमास्यामिवोदधिः ॥ ८३ ॥ भविष्यन्ति कुमारास्ते पञ्च देवसुतोपमाः ।
तेजस्विनः पराक्रान्ता यज्वानो धार्मिकास्तथा ॥८४॥ ततोऽङ्गस्तु सुदेष्णाया ज्येष्ठपुत्रो व्यजायत । वङ्गस्तस्मात्कलिङ्गस्तु पुण्ड्रो ब्रह्मस्तथैव च ॥८५॥
वंशभाजस्तु पञ्चैते बलेः क्षेत्रेऽभवंस्तदा । इत्येते दीर्घतमसा बलेर्दत्ताः सुताः पुरा ॥ ८६ ॥ प्रजास्त्वपहतास्तस्य ब्रह्मणा कारणं प्रति । अपत्या
मात्यदारेषु स्वेषु मा भून्महात्मनः ॥ ८७ ॥ ततो मनुष्ययोन्यां वै जनयामास स प्रजाः । सुरभिर्दीर्घतमसमथ प्रीतो वचोऽब्रवीत् ॥ ८८ ॥ विचार्य
यस्माद्गोधर्मं त्वमेवं कृतवानसि । तेन न्यायेन मुमुचे ह्यहं प्रीतोऽस्मि तेन ते ॥ ८९ ॥ तस्मात्तव तमो दीर्घं निस्तुदाम्यद्य पश्य वै । बार्हस्पत्यञ्च
यत्तेऽन्यत्पापं सन्तिष्ठते तनौ ॥ ९० ॥ जरामृत्युभयञ्चैव आघ्राय प्रणुदामि ते । घ्राणातमात्रः सोऽपश्यत सद्यस्तमसि नाशिते ॥ ९१ ॥ आयुष्मांश्च
युवा चैव चक्षुष्मांश्च ततोऽभवत् । गवा दीर्घतमाः सोऽथ गौतमः समपद्यत ॥९२॥ कक्षीवांस्तु ततो गत्वा सह पित्रा गिरिव्रजम् । यथोद्दिष्टं हि पित्रर्थे
चचार विपुलं तपः ॥ ९३ ॥ ततः कालेन महता तमसा भावितः स वै । विधूय मनुजो दोषान् ब्रह्मण्यं प्राप्तवान् प्रभुः ॥ ९४ ॥ ततोऽब्रवीत् पिता
चैनं पुत्रवानस्म्यहं प्रभो । सत्पुत्रेण त्वया तात कृतार्थोऽस्मि यशस्विना ॥ ९५ ॥ युक्तात्मा हि ततः सोऽथ प्राप्तवान् ब्रह्मणा क्षयम् । ब्रह्मण्यं प्राप्य
कक्षीवान् सहस्रमसृजत् सुतान् ॥ ९६ ॥ कूष्माण्डा गौतमास्ते वै स्मृताः कक्षीवतः सुताः । इत्येष दीर्घतमसो बलेर्वैरोचनस्य वै ॥ ९७ ॥ समागमः

समाख्यातः सन्तानश्चोभयोस्तयोः । बलिस्तानभिषिच्येह पञ्च पुत्रानकल्मषान् ॥ ९८ ॥ कृतार्थः सोऽपि योगात्मा योगमाश्रित्य च प्रभुः । अदृश्यः सर्वभूतानां कालाकाङ्क्षी चरत्युत ॥ ९९ ॥ तत्राङ्गस्य तु राजर्षे राजासीद्दधिवाहनः । सापराधसुदेष्णाया अनपानोऽभवन्नृपः ॥ १०० ॥ अनपानस्य पुत्रस्तु राज्ञा दिविरथः स्मृतः । पुत्रो दिविरथस्यासीद्विद्वान् धर्मरथो नृपः ॥ १०१ ॥ स वै धर्मरथः श्रीमान् येन विष्णुपदे गिरौ । सोमः शक्रेण सह वै यज्ञे पीतो महात्मना ॥ १०२ ॥ शृणु धर्मरथस्यापि राजा चित्ररथोऽभवत् । लोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत् ॥ १०३ ॥ जज्ञे वै चण्डिकस्तस्य वारणः शक्रवारणः । आनयामास स महीं मन्धोर्वाहनमुत्तमम् ॥ १०४ ॥ हर्य्यङ्गस्य तु दायादो राजा भद्ररथः किल । अथ भद्ररथस्यासीद्बृहत्कर्मा प्रजेश्वरः ॥ १०५ ॥ बृहद्रथः सुतस्तस्य तस्माज्जज्ञे बृहन्मनाः । बृहन्मनास्तु राजेन्द्रं जनयामास वै सुतम् ॥ १०६ ॥ नाम्ना जयद्रथं नाम तस्माद्दृढरथो नृपः । आसीद्दृढरथस्यापि विश्वजिज्जनमेजयः ॥ १०७ ॥ दायादस्तस्य चाङ्गेभ्यो यस्मात् कर्णोऽभवन्नृपः । कर्णस्य शूरसेनस्तु द्विजस्तस्यात्मजः स्मृतः ॥ १०८ ॥ ऋषय ऊचुः ॥ सूतात्मजः कथं कर्णः कथं चाङ्गस्य वंशजः । एतदिच्छामहे श्रोतुमत्यर्थं कुशलो ह्यसि ॥ १०९ ॥ सूत उवाच ॥ बृहद्भानोः सुतो जज्ञे नाम्ना राजा बृहन्मनाः । तस्य पत्नीद्वयं चासीच्चैद्यस्योभे च ते सुते ॥ ११० ॥ यशोदेवी च सत्या च ताभ्यां वंशस्तु भिद्यते । जयद्रथस्तु राजेन्द्रो यशोदेव्यां व्यजायत ॥ १११ ॥ ब्रह्मक्षत्रान्तरः सत्याविजयो नाम विश्रुतः । विजयस्य धृतिः पुत्रस्तस्य पुत्रो धृतव्रतः ॥ ११२ ॥ धृतव्रतस्य पुत्रस्तु सत्यकर्मा महायशाः । सत्यकर्मसुतश्चापि सूतस्त्वधिरथस्तु वै ॥ ११३ ॥ स कर्णं परिजग्राह तेन कर्णस्तु सूतजः । एतद्वः कथितं सर्वं कर्णे यद्वै प्रचोदितम् ॥ ११४ ॥ एतेऽङ्गवंशजाः सर्वे राजानः कीर्त्तिता मया । विस्तरेणानुपूर्व्या च पूरोस्तु शृणुत प्रजाः ॥ ११५ ॥ सूत उवाच ॥ पूरोः पुत्रो महाबाहू राजासीज्जनमेजयः । अविद्धस्तु सुतस्तस्य यः प्राचीमजयद्दिशम् ॥ ११६ ॥ अविद्धतः प्रवीरस्तु मनस्युरभवत्सुतः । राजाथो जयदो नाम मनस्योरभवत्सुतः ॥ ११७ ॥ दायादस्तस्य चाप्यासीद्धुन्धुर्नाम महीपतिः । धुन्धोर्बहुगवी पुत्रः सञ्जातिस्तस्य चात्मजः ॥ ११८ ॥ सञ्जातेरथ रौद्राश्वस्तस्य पुत्रान्निबोधत । रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ॥ ११९ ॥ रजेयुश्च कृतेयुश्च वक्षेयुः स्थण्डिलेयु च । घृतेयुश्च जलेयुश्च स्थलेयुश्चैव सप्तमः ॥ १२० ॥ धर्मेयुः सन्नतेयुश्च वनेयुर्दशमस्तु सः । रुद्रा शूद्रा च मद्रा च शुभा जामलजा तथा ॥ १२१ ॥ तला खला च सप्तैता या च गोपजला स्मृता । तथा ताम्ररसा चैव रत्नकूटी च तादृशी ॥ १२२ ॥ आत्रेयो वंशतस्तासां भर्त्ता नाम्ना प्रभाकरः । अनाधृष्टस्तु राजर्षी रिवेयुस्तस्य चात्मजः ॥ १२३ ॥ रिवेयोर्ज्वलना नाम भार्या वै तक्षकात्मजा । यस्यां देव्यां स राजर्षी रन्तिं नाम व्यजीजनत् ॥ १२४ ॥

रन्तिनारः सरस्वत्यां पुत्रानजनयच्छुभान् । त्रसुं तथा प्रतिरथं ध्रुवञ्चैवातिधार्मिकम् ॥ १२५ ॥ गौरी कन्या च विख्याता मान्धातुर्जननी शुभा । ध्रुवं:
प्रतिरथस्यापि कण्ठस्तस्याभवत् सुतः ॥ १२६ ॥ मेधातिथिः सुतस्तस्य यस्मात् काण्ठायना द्विजाः । इतिनात्नुयमस्यासीत् कन्या साजनयत्सुतान्
॥ १२७ ॥ त्रसुः सुदर्शितं पुत्रं मलिनं ब्रह्मवादिनम् । उपदातं ततो लेभे चतुरस्त्विति सात्मजान् ॥ १२८ ॥ सुष्मन्तमथ दुष्यन्तं प्रवीरमनघन्तथा ।
चक्रवर्त्ती ततो जज्ञे दौष्यन्तिर्नृपसत्तमः ॥ १२९ ॥ शकुन्तलायां भरतो यस्य नाम्ना तु भारतम् । दुष्यन्तं प्रति राजानं वागुवाचाशरीरिणी ॥१३०॥
माता भस्त्रा पितुः पुत्रो येन जातः स एव सः । भरस्व पुत्रं दुष्यन्तं सत्यमाह शकुन्तला ॥१३१॥ रेतोधाः पुत्रं नयति नरदेव यमक्षयात् । त्वञ्चास्य
धाता गर्भस्य मावमंस्थाः शकुन्तलाम् ॥ १३२ ॥ भरतस्त्रिसृषु स्त्रीषु नव पुत्रानजीजनत् । नाभ्यनन्दश्च तान् राजा नानुरूपान्ममेत्युत ॥ १३३ ॥
ततस्ता मातरः क्रुद्धाः पुत्रान्निन्युर्यमक्षयम् । ततस्तस्य नरेन्द्रस्य विततं पुत्रजन्म तत् ॥ १३४ ॥ ततो मरुद्भिरानीय पुत्रस्तु स बृहस्पतेः । सङ्क्रा
मितो भरद्वाजो मरुद्भिः क्रतुभिर्विभुः ॥ १३५ ॥ तत्रैवोदाहरन्तीदं भरद्वाजस्य धीमतः । जन्मसङ्क्रमणञ्चैव मरुद्भिर्भरताय वै ॥ १३६ ॥ पत्न्यामास
न्नगर्भायामशिजः संस्थितः किल । भ्रातुर्भार्यां स दृष्ट्वाथ बृहस्पतिरुवाच ह । अलंकृत्य तनुं स्वान्तु मैथुनं देहि मे शुभे ॥ १३७ ॥ एवमुक्ताऽब्रवीदेन
मन्तर्वत्नी ह्यहं विभो । गर्भः परिणतश्चायं ब्रह्म व्याहरते गिरा ॥ १३८ ॥ अमोघरेतास्त्वञ्चापि धर्मश्चैव विगर्हितः । एवमुक्तोऽब्रवीदेनां स्मयमानो
बृहस्पतिः ॥ १३९ ॥ विनयो नोपदेष्टव्यस्त्वया मम कथञ्चन । हर्षमाणः प्रसह्यैनां मैथुनायोपचक्रमे ॥ १४० ॥ ततो बृहस्पतिं गर्भो हर्षमाणमुवाच
ह । सन्निविष्टो ह्यहं पूर्वमिह तात बृहस्पते ॥ १४१ ॥ अमोघरेताश्च भवान्नावकाशोऽस्ति च द्वयोः । एवमुक्तः स गर्भेण कुपितः प्रत्युवाच ह
॥ १४२ ॥ यस्मान्मामीदृशे काले सर्वभूतेप्सिते सति । प्रतिषेधसि तत्तस्मात् तमो दीर्घं प्रवेक्ष्यसि ॥ १४३ ॥ पादाभ्यान्तेन तच्छुक्रं मातुर्द्वारं बृहस्पतेः ।
तद्रेतस्तु तयोर्मध्ये निवार्यः शिशुकोऽभवत् ॥ १४४ ॥ सद्यो जातं कुमारन्तं दृष्ट्वाऽथ ममताऽब्रवीत् । गमिष्यामि गृहं स्वं वै भर द्वाजं बृहस्पते ।
॥ १४५ ॥ एवमुक्त्वा गतायां स पुत्रन्त्यजति तत्क्षणात् । भरस्व बाढमित्युक्तो भरद्वाजस्ततोऽभवत् ॥ १४६ ॥ मातापितृभ्यां संत्यक्तं दृष्ट्वाथ
मरुतः शिशुम् । गृहीत्वैनं भरद्वाजं जग्मुस्ते कृपया ततः ॥ १४७ ॥ तस्मिन् काले तु भरतो मरुद्भिः क्रतुभिः क्रमात् । काम्यनैमित्तिकैर्यज्ञैर्य
जते पुत्रलिप्सया ॥ १४८ ॥ यदा स यजमानो वै पुत्रान्नासादयत् प्रभुः । यज्ञं ततो मरुत्सोमं पुत्रार्थे पुनराहरत् ॥१४९॥ तेन ते मरुतस्तस्य मरुत्सो
मेन तोषिताः । भरद्वाजं ततः पुत्रं बार्हस्पत्यं मनीषिणम् ॥ १५० ॥ भरतस्तु भरद्वाजं पुत्रं प्राप्य तदाब्रवीत् । प्रजायां संहृतायां वै कृतार्थोऽहं त्वया

विभो ॥ १५१ ॥ पूर्वन्तु वितथं तस्य कृतं वै पुत्रजन्म हि । ततः स वितथो नाम भरद्वाजस्तथाऽभवत् ॥ १५२ ॥ तस्माद्दिव्यो भरद्वाजो ब्राह्मण्यात्
क्षत्रियोऽभवत् । द्विमुख्यायननामा स स्मृतो द्विपितृकस्तु वै ॥ १५३ ॥ ततोऽथ वितथे जाते भरतः स दिवं ययौ। वितथस्य तु दायादो भुवमन्युर्बभूव
ह ॥ १५४ ॥ महाभूतोपमाश्चासंश्चत्वारो भुवमन्युजाः । बृहत्क्षत्रो महावीर्यो नरो गार्ग्यश्च वीर्यवान् ॥ १५५ ॥ नरस्य सांकृतिः पुत्रस्तस्य
पुत्रौ महौजसौ । गुरुवीर्यस्त्रिदेवश्च सांकृत्यावचरौ स्मृतौ ॥ १५६ ॥ दायादाश्चापि गार्ग्यस्य शिनिबद्धात् बभूव ह । स्मृताश्चैते ततो गार्ग्याः
क्षात्रोपेता द्विजातयः ॥ १५७ ॥ महावीर्यसुतश्चापि भीमस्तस्मादुभक्षयः । तस्य भार्या विशाला तु सुषुवे वै सुतांस्त्रयः ॥ १५८ ॥ त्र्य्यारुणिं
पुष्कारिणं तृतीयं सुषुवे कपिम् । कपेः क्षत्रवरा ह्येते तयोः प्रोक्ता महर्षयः ॥ १५९ ॥ गार्ग्याः सांकृतयो वीर्याः क्षात्रोपेता द्विजातयः । संश्रि
ताङ्गिरसं पक्षं बृहत्क्षत्रस्य वक्ष्यति ॥ १६० ॥ बृहत्क्षत्रस्य दायादः सुहोत्रो नाम धार्मिकः । सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह । तेनेदं
निर्मितं पूर्वं नाम्ना वै हास्तिनं पुरम् ॥ १६१ ॥ हस्तिनश्चापि दायादास्त्रयः परमधार्मिकाः । अजमीढो द्विमीढश्च पुरुमीढस्तथैव च ॥ १६२ ॥
अजमीढस्य पुत्रास्तु शुभाः शुभकुलोद्वहाः । तपसोऽन्ते सुमहतो राज्ञो वृद्धस्य धार्मिकाः ॥ १६३ ॥ भरद्वाजप्रसादेन शृणुध्वं तस्य विस्तरम् । अज
मीढस्य केशिन्यां कण्ठः समभवत्किल ॥१६४॥ मेधातिथिः सुतस्तस्य तस्मात् कण्ठायना द्विजाः । अजमीढस्य धूमिन्यां जज्ञे बृहद्वसुर्नृपः ॥१६५॥
बृहद्वसोर्बृहद्विष्णुः पुत्रस्तस्य महाबलः । बृहत्कर्मा सुतस्तस्य पुत्रस्तस्य बृहद्रथः ॥ १६६ ॥ विश्वजित्तनयस्तस्य सेनजित्तस्य चात्मजः । अथ
सेनजितः पुत्राश्चत्वारो लोकविश्रुताः ॥ १६७ ॥ रुचिराश्वश्च काव्यश्च रामो दृढधनुस्तथा । वत्सश्चावन्तको राजा यस्य ते परिवत्सराः ॥ १६८ ॥
रुचिराश्वस्य दायादः पृथुषेणो महायशाः । पृथुषेणस्य पारस्तु पारान्नीपोऽथ जज्ञिवान् ॥ १६९ ॥ यस्य चैकशतञ्चासीत् पुत्राणामिति नः श्रुतम् ।
नीपा इति समाख्याता राजानः सर्व एव ते ॥ १७० ॥ तेषां वंशकरः श्रीमान् राजासीत्कीर्त्तिवर्द्धनः । काम्पिल्ये समरो नाम स चेष्टसमरोऽभवत्
॥ १७१ ॥ समरस्य परः पारः सत्वदश्च इति त्रयः । पुत्राः सर्वगुणोपेताः पारपुत्रो वृषुर्बभौ ॥ १७२ ॥ वृषोस्तु सुकृतिर्नाम सुकृतेनेह कर्मणा ।
जज्ञे सर्वगुणोपेतो विभ्राजस्तस्य चात्मजः ॥ १७३ ॥ विभ्राजस्य तु दायादस्त्वणुहो नाम पार्थिवः । बभूव शुकजामाता ऋचीभर्त्ता महायशाः॥१७४॥
अणुहस्य तु दायादो ब्रह्मदत्तो महातपाः । योगसूनुः सुतस्तस्य विष्वक्सेनोऽभवन्नृपः॥१७५॥विभ्राजपुत्रा राजानः सुकृतेनेह कर्म्मणा । विष्वक्सेनस्य
पुत्रस्तु उदक्सेनो बभूव ह ॥१७६॥ भल्लाटस्तस्य दायादो येन राजा पुरा हतः । भल्लाटस्य तु दायादो राजासीज्जनमेजयः। उग्रायुधेन तस्यार्थे सर्वे नीपाः

प्रणाशिताः ॥१७७॥ ऋषय ऊचुः ॥ उग्रायुधः कस्य सुतः कस्मिन् वंशे च कीर्त्यते। किमर्थञ्चैव नीपास्ते तेन सर्वे प्रणाशिताः ॥१७८॥ सूत उवाच ॥ द्विमीढस्य तु दायादो विद्वान् जज्ञे यवीनरः। धृतिमांस्तस्य पुत्रस्तु तस्य सत्यधृतिः सुतः ॥१७९॥ अथ सत्यधृतेः पुत्रो दृढनेमिः प्रतापवान्। दृढनेमिसुतश्चापि सुवर्मा नाम पार्थिवः ॥१८०॥ आसीत्सुवर्म्मणः पुत्रः सार्वभौमः प्रतापवान्। सार्वभौम इति ख्यातः पृथिव्यामेकराड्बभौ ॥१८१॥ तस्यान्वये च महति महत्पौरवनन्दनः। महत्पौरवपुत्रस्तु राजा रुक्मरथः स्मृतः॥१८२॥अथ रुक्मरथस्यापि सुपार्श्वो नाम पार्थिवः। सुपार्श्वतनयश्चापि सुमतिर्नाम धार्मिकः ॥१८३॥सुमतेरपि धर्म्मात्मा राजा सन्नतिमान् प्रभुः। तस्यासीत्सन्नतिर्नाम कृतस्तस्य सुतोऽभवत्॥१८४॥शिष्यो हिरण्यनाभेस्तु कौथुमस्य महात्मनः। चतुर्विंशतिधा तेन प्रोक्तास्ताः सामसंहिताः॥१८५॥स्मृतास्ते प्राच्यनामानः कार्त्ताः साम्नान्तु सामगः। कार्तिरुग्रायुधः सोऽथ वीरः पौरवनन्दनः॥१८६॥ बभूव येन विक्रम्य पृषतस्य पितामहः। नीलो नाम महाबाहुः पञ्चालाधिपतिर्हतः ॥ १८७ ॥ उग्रायुधस्य दायादः क्षेमो नाम महायशाः। क्षेमात्सुवीरः संजज्ञे सुवीरस्य नृपञ्जयः। नृपञ्जयाद्वीररथो इत्येते पौरवाः स्मृताः ॥ १८८ ॥ अजमीढस्य नीलिन्यां नीलः समभवन्नृपः। नीलस्य तपसोग्रेण सुशान्तिरभ्यजायत ॥ १८९ ॥ पुरुजानुः सुशान्तेस्तु रिक्षस्तु पुरुजानुजः। ततस्तु रिक्षदायादा भेदाश्च तनयास्त्विमे ॥ १९० ॥ मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा। यवीयांश्चापि विक्रान्तः काम्पिल्यश्चैव पञ्चमः ॥ १९१ ॥ पञ्चानां रक्षणार्थाय पितैतानभ्यभाषत। पञ्चानां विद्धि पञ्चैतान् स्फीता जनपदा युताः ॥ १९२ ॥ अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः। मुद्गलस्यापि मौद्गल्याः क्षात्रोपेतद्विजातयः ॥ १९३ ॥ एते ह्याङ्गिरसः पक्षे संश्रिताः कण्ठमुद्गलाः। मुद्गलस्य सुतो ज्येष्ठो ब्रह्मिष्ठः सुमहायशाः ॥ १९४ ॥ इन्द्रसेना यतो गर्भं वध्यश्वं प्रत्यपद्यत। वध्यश्वान्मिथुनं जज्ञे मेनका इति नः श्रुतिः ॥ १९५ ॥ दिवोदासश्च राजर्षिरहल्या च यशस्विनी। शारद्वतस्तु दायादमहल्या समसूयत ॥ १९६ ॥ शतानन्दमृषिश्रेष्ठं तस्यापि सुमहायशाः। पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः ॥ १९७ ॥ अथ सत्यधृतेः शुक्रं दृष्ट्वाप्सरसमग्रतः। प्रचस्कन्दे शरस्तम्बे मैथुनं समपद्यत ॥ १९८ ॥ कृपया तच्च जग्राह शन्तनुर्मृगयां गतः। कृपः स्मृतः स वै तस्माद्गौतमी च कृपी तथा ॥ १९९ ॥ एते शारद्वताः प्रोक्ताः ऋतथ्यो गौतमान्वयः। अत ऊर्द्ध्वं प्रवक्ष्यामि दिवोदासस्य सन्ततिम् ॥ २०० ॥ दिवोदासस्य दायादो ब्रह्मिष्ठो मित्रयुर्नृपः। मैत्रेयस्तु ततो जज्ञे स्मृता एतेऽपि संश्रिताः ॥ २०१ ॥ एतेऽपि संश्रिताः पक्षं क्षात्रोपेतास्तु भार्गवाः। राजापि च्यवनो विद्वांस्ततः प्रतिरथोऽभवत् ॥ २०२ ॥ अथ वै च्यवनाद्धीमान् सुदासः समपद्यत। सौदासः सहदेवश्च सोमकस्तस्य चात्मजः ॥ २०३ ॥ अजमीढः पुनर्जातः क्षीणे वंशे स

ः। सोमकस्य सुतो जन्तुर्हते तस्मिञ्छतं विभो ॥ २०४ ॥ पुत्राणामजमीढस्य सोमकत्वे महात्मनः। तेषां यवीयान् पृषतो द्रुपदस्
हः ॥२०५॥ धृष्टद्युम्नः सुतस्तस्य धृष्टकेतुश्च तत्सुतः। महिषी चाजमीढस्य धूमिनी पुत्रगर्धिनी॥२०६॥पुनर्भवे तपस्तेपे शतं वर्षाणि दुश्चरम्
पनिद्रा ह्यभवत् पवित्रमितभोजना ॥ २०७ ॥ अहोरात्रं कुशेष्वेव सुष्वाप सुमहाव्रता। तस्यां वै धूम्रवर्णायामजमीढश्च वीर्यवान् ॥ २०८
ञ्जनयामास धूम्रवर्णं सिताग्रजम्। ऋक्षात् संवरणो जज्ञे कुरुः संवरणादभूत् ॥ २०९ ॥ यः प्रयागं पदाक्रम्य कुरुक्षेत्रञ्चकार ह। कृष्ट्वै
तेजा वर्षाणि सुबहून्यथ ॥ २१० ॥ कृष्यमाणे तदा शक्रस्तत्रास्य वरदो बभौ। पुण्यञ्च रमणीयञ्च पुण्यकृद्भिर्निषेवितम् ॥ २११ ॥ तस्यान्व
ख्याताः कुरवो नृपसत्तमाः। कुरोस्तु दयिताः पुत्राः सुधन्वा जह्नुरेव च ॥ २१२ ॥ परिक्षितो महाराजः पुत्रकश्चारिमर्दनः। सुधन्वनस
: सुहोत्रो मतिमान् स्मृतः ॥ २१३ ॥ च्यवनस्तस्य पुत्रस्तु राजा धर्मार्थकोविदः। च्यवनस्य कृतः पुत्र इष्ट्वा यज्ञैर्महातपाः ॥ २१४ ॥ विश्रु
मास पुत्रमिन्द्रसखं नृपः। विद्योपरिचरं वीरं वसुं नामान्तरिक्षगम् ॥ २१५ ॥ विद्योपरिचराज्जज्ञे गिरिका सप्त सूनवः। महार
ो विश्रुतो यो बृहद्रथः ॥ २१६ ॥ प्रत्यग्रहः कुशश्चैव यमाहुर्मणिवाहनम्। माथैल्यश्च ललित्थश्च मत्स्यकालश्च सप्तमः ॥ २१७
स्य दायादः कुशाग्रो नाम विश्रुतः। कुशाग्रस्यात्मजश्चैव ऋषभो नाम वीर्यवान् ॥ २१८ ॥ ऋषभस्यापि दायादः पुष्पवान्ना
ः। विक्रान्तस्तस्य दायादो राजा सत्यहितः स्मृतः ॥ २१९ ॥ तस्य पुत्रः सुधन्वा च तस्मादूर्ज्जः प्रतापवान्। ऊर्ज्जस्य नभसः पुत्रस
ज्ञे स वीर्यवान् ॥ २२० ॥ शकले द्वे स वै जातो जरया सन्धितस्तु सः। जरासन्धो महाबाहुर्जरया सन्धितस्तु सः ॥ २२१ ॥ सर्वक्षत्रस
ी जरासन्धो महाबलः। जरासन्धस्य पुत्रस्तु सहदेवः प्रतापवान् ॥ २२२ ॥ सहदेवात्मजः श्रीमान् सोमाधिः सुमहातपाः। श्रुतश्रवस
ार्मगधः परिकीर्तितः ॥ २२३ ॥ सूत उवाच ॥ परिक्षितस्य दायादो बभूव जनमेजयः। श्रुतसेनस्य दायादो भीमसेनोऽपि नामतः ॥ २२४
वजनयत्पुत्रं सुरथं नाम भूमिपम्। सुरथस्य तु दायादो वीरो राजा विदूरथः ॥ २२५ ॥ विदूरथसुतश्चापि सार्वभौम इति श्रुतिः। सार्वभौ
ान आराधिस्तस्य चात्मजः ॥ २२६ ॥ आराधितो महासत्त्व अयुतायुस्ततः स्मृतः। अक्रोधनोऽयुतायोऽस्तु तस्माद्देवातिथिः स्मृतः ॥ २२७
थेस्तु दायाद ऋक्ष एव बभूव ह। भीमसेनस्तथा ऋक्षाद्दिलीपस्तस्य चात्मजः ॥ २२८ ॥ दिलीपसूनुः प्रतिपस्तस्य पुत्रास्त्रयः स्मृताः
: शन्तनुश्चैव बाह्लीकश्चैव ते त्रयः ॥ २२९ ॥ बाह्लीकस्य तु विज्ञेयः सप्तबाह्लीश्वरो नृपः। बाह्लीकस्य सुतश्चैव सोमदत्तो महायशाः ॥ २३०

जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः । देवापिस्तु प्रवव्राज वनं धर्म्मपरीप्सया ॥ २३१ ॥ उपाध्यायस्तु देवानां देवापिरभवन्मुनिः । च्यवनोऽस्य हि
पुत्रस्तु इष्टकश्च महात्मनः॥२३२॥ शन्तनुस्त्वभवद्राजा विद्वान् वै स महाभिषः।इमं चोदाहरन्त्यत्र श्लोकं प्रति महाभिषम्॥ २३३॥ यं यं राजा स्पृशति
वै जीर्णं समयतो नरम् । पुनर्युवा स भवति तस्मात्ते शन्तनुं विदुः ॥२३४॥ ततोऽस्य शन्तनुत्वं वै प्रजास्विह परिश्रुतम् । स उपयेमे धर्म्मात्मा शन्तनु
र्जाह्नवीं नृपः ॥२३५॥ तस्यां देवव्रतं भीष्मं पुत्रं सोऽजनयत्प्रभुः । स च भीष्म इति ख्यातः पाण्डवानां पितामहः ॥२३६॥ काले विचित्रवीर्यन्तु शन्तनु
र्जनयत्सुतम् । शन्तनोर्दयितं पुत्रं प्रजाहितकरम्प्रभुम् । कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्यके ॥ २३७ ॥ धृतराष्ट्रञ्च पाण्डुञ्च विदुरञ्चाप्यजीजनत् ।
धृतराष्ट्रात्तु गान्धारी पुत्राणां सुषुवे शतम् ॥ २३८॥ तेषां दुर्योधनो ज्येष्ठः सर्व्वक्षत्रस्य स प्रभुः । माद्री राज्ञी पृथा चैव पाण्डोर्भार्य्ये बभूवतुः ॥ २३९॥
देवदत्ताः सुतास्ताभ्यां पाण्डोरर्थे विजज्ञिरे । धर्म्माद्युधिष्ठिरो जज्ञे वायोर्जज्ञे वृकोदरः ॥२४०॥ इन्द्राद्धनञ्जयो जज्ञे शक्रतुल्यपराक्रमः । अश्विभ्यां सह
देवश्च नकुलश्चापि माद्रिजौ॥२४१॥पञ्चैव पाण्डवेभ्यश्च द्रौपद्यां जज्ञिरे सुताः। द्रौपद्यजनयज्ज्येष्ठं श्रुतिविद्धं युधिष्ठिरात् ॥ २४२ ॥ हिडम्बा भीमसेनात्तु
जज्ञे पुत्रं घटोत्कचम् । काश्याः पुनर्भीमसेनाज्जज्ञे सर्व्ववृकं सुतम् ॥ २४३ ॥ सुहोत्रं विजया माद्री सहदेवादजायत । करेमत्यान्तु वैद्यायां निरमित्रस्तु
लाङ्गलिः॥२४४॥सुभद्रायां रथी पार्थादभिमन्युरजायत । उत्तरायान्तु वैराट्यां परिक्षिदभिमन्युजः ॥ २४५॥ पारिक्षितस्तु दायादो राजासीज्जनमेजयः ।
ब्राह्मणान् स्थापयामास स वै वाजसनेयिकान् ॥२४६॥ असपत्नं तदामर्षाद्वैशम्पायन एव तु । न स्थास्यतीह दुर्बुद्धे तवैतद्वचनं भुवि ॥२४७॥ यावत्स्था
स्याम्यहं लोके तावन्नैतत्प्रशस्यते । अभितः संस्थितश्चापि ततः स जनमेजयः ॥ २४८ ॥ पौर्णमास्येन हविषा देवमिष्ट्वा प्रजापतिम् । विज्ञाय
संस्थितोऽपश्यत्तद्वधीष्टां विभोर्मखे ॥ २४९ ॥ पारिक्षित्तनयश्चापि पौरवो जनमेजयः । द्विरश्वमेधमाहृत्य ततो वाजसनेयकम् । प्रवर्त्तयित्वा तद्ब्रह्म
त्रिखर्व्वी जनमेजयः ॥ २५० ॥ खर्व्वमश्वकमुख्यानां खर्व्वमङ्गनिवासिनाम् । खर्व्वञ्च मध्यदेशानां त्रिखर्व्वी जनमेजयः । विषादाद्ब्राह्मणैः सार्द्धम
भिशस्तः क्षयं ययौ ॥ २५१ ॥ तस्य पुत्रः शतानीको बलवान् सत्यविक्रमः । ततः सुतं शतानीकं विप्रास्तमभ्यषेचयत् ॥ २५२ ॥ पुत्रोऽश्वमेध
दत्तोऽभूच्छतानीकस्य वीर्य्यवान् । पुत्रोऽश्वमेधदत्ताद्वै जातः परपुरंजयः ॥ २५३ ॥ आधिसामकृष्णो धर्मात्मा साम्प्रतोऽयं महायशाः । यस्मिन्
प्रशासति महीं युष्माभिरिदमाहृतम् ॥ २५४ ॥ दुरापं दीर्घसत्रं वै त्रीणि वर्षाणि दुश्चरम् । वर्षद्वयं कुरुक्षेत्रे दृषद्वत्यां द्विजोत्तमाः ॥ २५५ ॥
ऋषय ऊचुः ॥ श्रोतुं भविष्यमिच्छामः प्रजानां वै महामते । सूत सार्द्धं नृपैर्भाव्यं व्यतीतं कीर्तितं त्वया ॥ २५६ ॥ यत्र

ास्यते कृत्यमुत्पत्स्यन्ति च ये नृपाः । वर्षाग्रतोऽपि प्रब्रूहि नामतश्चैव तान्नृपान् ॥ २५७ ॥ कालं युगप्रमाणञ्च गुणदोषान् भविष्यतः ।
ःखे प्रजानाञ्च धर्मतः कामतोऽर्थतः ॥ २५८ ॥ एतत्सर्वं प्रसङ्ख्याय पृच्छतां ब्रूहि तत्त्वतः । स एवमुक्तो मुनिभिः सूतो बुद्धिमतां वरः ।
चक्षे यथावृत्तं यथादृष्टं यथाश्रुतम् ॥ २५९ ॥ सूत उवाच ॥ यथा मे कीर्त्तितं सर्वं व्यासेनाद्भुतकर्म्मणा । भाव्यं कलियुगञ्चैव तथा
तराणि तु ॥ २६० ॥ अनागतानि सर्वाणि ब्रुवतो मे निबोधत । अत ऊर्द्ध्वं प्रवक्ष्यामि भविष्यन्ति नृपास्तु ये ॥ २६१ ॥ ऐडांश्चैव तथेक्ष्वाकून्
नांश्चैव पार्थिवान् । येषु संस्थाप्यते क्षेत्रमैक्ष्वाकवमिदं शुभम् ॥ २६२ ॥ तान् सर्वान् कीर्त्तयिष्यामि भविष्ये पठितान्नृपान् । तेभ्यः परे च
न्ये उत्पत्स्यन्ते महीक्षितः ॥ २६३ ॥ क्षत्राः पारशवाः शूद्रास्तथा ये च द्विजातयः । अन्धाः शकाः पुलिन्दाश्च चूलिका यवनैः सह ॥ २६४ ॥
ाभीरशबरा ये चान्ये म्लेच्छजातयः । वर्षाग्रतः प्रवक्ष्यामि नामतश्चैव तान्नृपान् ॥ २६५ ॥ अधिसामकृष्णः सोऽयं साम्प्रतं पौरवान्नृपः ।
न्ववाये वक्ष्यामि भविष्ये तावतो नृपान् ॥ २६६ ॥ अधिसामकृष्णपुत्रो निर्वक्रे भविता किल । गङ्गयापहृते तस्मिन्नगरे नागसाह्वये ।
वा च तं सुवासञ्च कौशाम्ब्यां स निवत्स्यति ॥ २६७ ॥ भविष्यदुष्णस्तत्पुत्र उष्णाच्चित्ररथः स्मृतः । शुचिद्रथश्चित्ररथाद्वृतिमांश्च शुचिद्र
॥ २६८ ॥ सुषेणो वै महावीर्यो भविष्यति महायशाः । तस्मात्सुषेणाद्भविता सुतीर्थो नाम पार्थिवः ॥ २६९ ॥ रुचः सुतीर्थाद्भविता त्रिचक्षो
॥ ततः । त्रिचक्षस्य तु दायादो भविता वै सुखीबलः ॥ २७० ॥ सुखीबलसुतश्चापि भाव्यो राजा परिप्लुतः । परिप्लुतसुतश्चापि भविता सुनयो
॥२७१॥मेधावी सुनयस्याथ भविष्यति नराधिपः । मेधाविनः सुतश्चापि दण्डपाणिर्भविष्यति ॥ २७२ ॥ दण्डपाणेर्निरामित्रो निरामित्राच्च क्षेमकः ।
शनृपा ह्येते भविष्याः पूर्ववंशजाः ॥ २७३ ॥ अत्रानुवंशश्लोकोऽयं गीतो विप्रैः पुराविदैः । ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः ॥ २७४ ॥
प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ । इत्येष पौरवो वंशो यथावदनुकीर्त्तितः ॥ २७५ ॥ धीमतः पाण्डुपुत्रस्य ह्यर्जुनस्य महात्मनः ।
ऊर्द्ध्वं प्रवक्ष्यामि इक्ष्वाकूणां महात्मनाम् ॥ २७६ ॥ बृहद्रथस्य दायादो वीरो राजा बृहत्क्षयः । ततः क्षयः सुतस्तस्य वत्सव्यूहस्ततः क्षयात् ।
७७ ॥ वत्सव्यूहात्प्रतिव्यूहस्तस्य पुत्रो दिवाकरः । यश्च सांप्रतमध्यास्ते अयोध्यां नगरीं नृपः ॥ २७८ ॥ दिवाकरस्य भविता सहदेवो महायशाः ।
स्य दायादो बृहदश्वो भविष्यति ॥ २७९ ॥ तस्य भानुरथो भाव्यः प्रतीताश्वश्च तत्सुतः । प्रतीताश्वसुतश्चापि सुप्रतीतो भविष्यति ॥ २८० ॥
वः सुतस्तस्य सुनक्षत्रश्च तत्सुतः ॥ २८१ ॥ किन्नरस्तु सुनक्षत्राद्भविष्यति परंतपः । भविता चान्तरिक्षस्तु किन्नरस्य सुतो महान् ॥ २८२ ॥

अन्तरिक्षात्सुपर्णस्तु सुपर्णाच्चाप्यमित्राजित् । पुत्रस्तस्य भरद्वाजो धर्मी तस्य सुतः स्मृतः । पुत्रः कृतञ्जयो नाम धार्मिणः स भविष्यति । कृत
ञ्जयसुतो व्रातो तस्य पुत्रो रणञ्जयः ॥ २८३ ॥ भविता सञ्जयश्चापि वीरो राजा रणञ्जयात् । सञ्जयस्य सुतः शाक्यः शाक्याच्छुद्धोदनोऽभवत्
॥ २८४ ॥ शुद्धोदनस्य भविता शाक्यार्थे राहुलः स्मृतः । प्रसेनजित्ततो भाव्यः क्षुद्रको भविता ततः ॥ २८५ ॥ क्षुद्रकात्क्षुलिको भाव्यः
क्षुलिकात्सुरथः स्मृतः । सुमित्रः सुरथस्यापि अन्त्यश्च भविता नृपः ॥ २८६ ॥ एते ऐक्ष्वाकवाः प्रोक्ता भवितारः कलौ युगे । बृहद्बलान्वये जाता भवि
तारः कलौ युगे । शूराश्च कृतविद्याश्च सत्यसन्धा जितेन्द्रियाः ॥ २८७ ॥ अत्रानुवंशश्लोकोऽयं भविष्यज्ञैरुदाहृतः । इक्ष्वाकूणामयं वंशः सुमित्रान्तो
भविष्यति । सुमित्रं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ । इत्येतन्मानवं क्षेत्रमैलश्च समुदाहृतम् ॥ २८८ ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि मागधेयान्बृह
द्रथान् । जरासन्धस्य ये वंशे सहदेवान्वये नृपाः ॥ २८९ ॥ अतीता वर्त्तमानाश्च भविष्याश्च तथा पुनः । प्राधान्यतः प्रवक्ष्यामि गदतो मे निबो
धत ॥ २९० ॥ संग्रामे भारते तस्मिन् सहदेवो निपातितः । सोमाधिस्तस्य तनयो राजर्षिः स गिरिव्रजे ॥ २९१ ॥ पञ्चाशतं तथाष्टौ च समा राज्यम
कारयत् । श्रुतश्रवाः चतुःषष्टिसमास्तस्य सुतोऽभवत् । अयुतायुस्तु षड्विंशं राज्यं वर्षाण्यकारयत् । समाः शतं निरामित्रो महीं भुक्त्वा दिवङ्गतः ॥२९२॥
पञ्चाशतं समाः षट् च सुकृत्तः प्राप्तवान्महीम् । त्रयोविंशं बृहत्कर्मा राज्यं वर्षाण्यकारयत् ॥ २९३ ॥ सेनाजित्साम्प्रतं चापि एतां वै भुज्यते समाः ।
श्रुतञ्जयस्तु वर्षाणि चत्वारिंशद्भविष्यति ॥ २९४ ॥ महाबाहुर्महाबुद्धिर्महाभीमपराक्रमः । पञ्चत्रिंशत्तु वर्षाणि महीं पालयिता नृपः ॥ २९५ ॥ अष्टपञ्चा
शतं चाब्दान् राज्ये स्थास्यति वै शुचिः । अष्टाविंशत्समाः पूर्णाः क्षेमो राजा भविष्यति ॥ २९६ ॥ भुवतस्तु चतुःषष्टीराज्यं प्राप्स्यति वीर्यवान् ।
पञ्चवर्षाणि पूर्णानि धर्मनेत्रो भविष्यति ॥ २९७ ॥ भोक्ष्यते नृपतिश्चैव ह्यष्टपञ्चाशतं समाः । अष्टात्रिंशत्समा राज्यं सुव्रतस्य भविष्यति ॥ २९८ ॥
चत्वारिंशद्दशाष्टौ च दृढसेनो भविष्यति । त्रयस्त्रिंशत्तु वर्षाणि सुमतिः प्राप्स्यते ततः ॥ २९९ ॥ द्वाविंशतिसमा राज्यं सुचलो भोक्ष्यते ततः । चत्वा
रिंशत्समा राजा सुनेत्रो भोक्ष्यते ततः ॥ ३०० ॥ सत्यजित्पृथिवीराज्यं त्र्यशीतिं भोक्ष्यते समाः । प्राप्येमां वीरजिच्चापि पञ्चत्रिंशद्भविष्यति ॥ ३०१ ॥
अरिञ्जयस्तु वर्षाणि पञ्चाशत्प्राप्स्यते महीम् । द्वात्रिंशच्च नृपा ह्येते भवितारो बृहद्रथाः ॥ ३०२ ॥ पूर्णं वर्षसहस्रं वै तेषां राज्यं भविष्यति । बृहद्र
थेष्वतीतेषु वीतहोत्रेषु वर्तिषु ॥ ३०३ ॥ मुनिकः स्वामिनं हत्वा पुत्रं समभिषेक्ष्यति । मिषतां क्षत्रियाणां हि प्रद्योतो मुनिको बलात् ॥ ३०४ ॥ स
वै प्रणतसामन्तो भविष्ये नयवर्जितः । त्रयोविंशत्समा राजा भविता स नरोत्तमः ॥ ३०५ ॥ चतुर्विंशत्समा राजा पालको भविता ततः ।

यूपो भविता नृपः पञ्चाशतीं समाः ॥ ३०६ ॥ एकत्रिंशत्समा राज्यमजकस्य भविष्यति । भविष्यति समा विंशत्सुतो वार्तवर्द्धनः ॥ ३०७
शच्छतं भाव्याः प्रद्योताः पञ्च ते सुताः । हत्वा तेषां यशः कृत्स्नं शिशुनाको भविष्यति ॥ ३०८ ॥ वाराणस्यां सुतस्तस्य संप्राप्स्य
ाम् । शिशुनाकस्य वर्षाणि चत्वारिंशद्भविष्यति ॥ ३०९ ॥ शकवर्णः सुतस्तस्य षट्त्रिंशच्च भविष्यति । ततस्तु विंशतिं राजा क्षेमव
ति ॥ ३१० ॥ अजातशत्रुर्भविता पञ्चविंशत्समा नृपः । चत्वारिंशत्समा राज्यं क्षत्रौजाः प्राप्स्यते ततः ॥ ३११ ॥ अष्टाविंशत्समा रा
रो भविष्यति । पञ्चविंशत्समा राजा दर्शकस्तु भविष्यति ॥ ३१२ ॥ उदायी भविता तस्मात्त्रयस्त्रिंशत्समा नृपः । स वै पुरवरं राजा पृथि
ह्वयम् । गङ्गाया दक्षिणे कूले चतुर्थेऽब्दे करिष्यति ॥ ३१३ ॥ द्वाचत्वारिंशत्समा भाव्यो राजा वै नन्दिवर्द्धनः । चत्वारिंशत्त्रयश्चैव म
भविष्यति ॥ ३१४ ॥ इत्येते भवितारो वै शैशुनाका नृपा दश । शतानि त्रीणि वर्षाणि द्विषष्ट्यभ्यधिकानि तु ॥ ३१५ ॥ शैशुनाका भ
तावत्कालं नृपाः परे । एतैः सार्द्धं भविष्यंति राजानः क्षत्रबान्धवाः ॥ ३१६ ॥ ऐक्ष्वाकवाश्चतुर्विंशत्पाञ्चालाः पञ्चविंशतिः । कालका
शचतुर्विंशत्तु हैहयाः ॥ ३१७ ॥ द्वात्रिंशद्वै कलिङ्गास्तु पञ्चविंशत्तथा शकाः । कुरवश्चापि षड्विंशदष्टाविंशति मैथिलाः ॥ ३१८ ॥ शू
विंशद्वीतिहोत्राश्च विंशतिः । तुल्यकालं भविष्यन्ति सर्वं एव महीक्षितः ॥ ३१९ ॥ महानन्दिसुतश्चापि शूद्रायां कालसंवृतः । उत्पत्स्य
ः सर्वक्षत्रान्तरे नृपः ॥ ३२० ॥ ततःप्रभृति राजानो भविष्याः शूद्रयोनयः । एकराट् स महापद्म एकच्छत्रो भविष्यति ॥ ३२१ ॥ अ
वर्षाणि पृथिवीं पालयिष्यति । सर्वक्षत्रहृतोद्धृत्य भाविनोऽर्थस्य वै बलात् ॥ ३२२ ॥ सहस्रास्तत्सुता ह्यष्टौ समा द्वादश ते नृपाः
स्य पर्याये भविष्यन्ति नृपाः क्रमात् ॥ ३२३ ॥ उद्धरिष्यति तान् सर्वान् कौटिल्यो वै द्विरष्टभिः । भुक्त्वा महीं वर्षशतं नन्देन्दुः स भ
॥ ३२४ ॥ चन्द्रगुप्तं नृपं राज्ये कौटिल्यः स्थापयिष्यति । चतुर्विंशत्समा राजा चन्द्रगुप्तो भविष्यति ॥ ३२५ ॥ भविता भ
ु पञ्चविंशत्समा नृपः । षड्विंशत्तु समा राजा ह्यशोको भविता नृषु ॥ ३२६ ॥ तस्य पुत्रः कुनालस्तु वर्षाण्यष्टौ भविष्यति । कुना
ौ च भोक्ता वै बन्धुपालितः ॥ ३२७ ॥ बन्धुपालितदायादो दशमानीन्द्रपालितः । भविता सप्तवर्षाणि देववर्म्मा नराधिपः ॥ ३२८
शतधरश्चाष्टौ तस्य पुत्रो भविष्यति । बृहदश्वश्च वर्षाणि सप्त वै भविता नृपः ॥ ३२९ ॥ इत्येते नव भूपा ये भोक्ष्यन्ति च वसुन्धराम्
शच्छतं पूर्णं तेभ्यस्तु गोर्भविष्यति ॥ ३३० ॥ पुष्पमित्रस्तु सेनानीरुद्धृत्य वै बृहद्रथम् । कारयिष्यति वै राज्यं समाः षष्टिं सदैव तु ॥ ३३१

पुष्पमित्रसुताश्चाष्टौ भविष्यन्ति समा नृपाः। भविता चापि तज्ज्येष्ठः सप्तवर्षाणि वै ततः ॥ २३२ ॥ वसुमित्रः सुतो भाव्यो दशवर्षाणि पार्थिवः
ततो ध्रुकः समा द्वे तु भविष्यति सुतश्च वै ॥ २३३ ॥ भविष्यन्ति समास्तस्मात्तिस्र एष पुलिन्दकाः। राजा घोषसुतश्चापि वर्षाणि भविता त्रय
॥ २३४ ॥ ततो वै विक्रमित्रस्तु समा राजा ततः पुनः। द्वात्रिंशद्भविता चापि समा भागवतो नृपः ॥ २३५ ॥ भविष्यति सुतस्तस्य क्षेमभूमिः सम
दश। दशैते तुङ्गराजानो भोक्ष्यन्तीमां वसुन्धराम् ॥ २३६ ॥ शतं पूर्णं दश द्वे च तेभ्यः किं वा गमिष्यति। अपार्थिवसुदेवन्तु बाल्याद्व्यसनिनं नृपम्
॥ २३७ ॥ देवभूमिस्ततोऽन्यश्च शृङ्गेषु भविता नृपः। भविष्यति समा राजा नव कण्ठायनस्तु सः ॥ २३८ ॥ भूतिमित्रः सुतस्तस्य चतुर्विंशः
विष्यति। भविता द्वादश समास्तस्मान्नारायणो नृपः ॥ २३९ ॥ सुशर्म्मा तत्सुतश्चापि भविष्यति समा दश। चतुरस्तुङ्गकृत्यास्ते नृपाः कण्व
यना द्विजाः ॥ २४० ॥ भाव्याः प्रणतसामन्ताश्चत्वारिंशच्च पञ्च च। तेषां पर्य्यायकाले तु तरन्धा तु भविष्यति ॥ २४१ ॥ कण्ठायनमथोद्धृत
सुशर्म्माणं प्रसह्य तम्। शृङ्गाणां चापि यच्छिष्टं क्षययित्वा बलं तदा। सिन्धुको ह्यन्ध्रजातीयः प्राप्स्यतीमां वसुन्धराम् ॥ २४२ ॥ त्रयोविंशत्सम
राजा सिन्धुको भविता त्वथ। अष्टौ भातश्च वर्षाणि तस्माद्दश भविष्यति ॥ २४३ ॥ श्रीसातकर्णिर्भविता तस्य पुत्रस्तु वै महान्। पञ्चाश
समाः षट् च सातकर्णिर्भविष्यति ॥ २४४ ॥ आपादबद्धो दश वै तस्य पुत्रो भविष्यति। चतुर्विंशत्तु वर्षाणि षट् समा वै भविष्यति ॥ २४५
भविता नेमिकृष्णस्तु वर्षाणां पञ्चविंशतिम्। ततः संवत्सरं पूर्णं हालो राजा भविष्यति ॥ २४६ ॥ पञ्च सप्तक राजानो भविष्यन्ति महाबलाः
भाव्यः पुत्रिकषेणस्तु समाः सोऽप्येकविंशतिम् ॥ २४७ ॥ सातकर्णिर्वर्षमेकं भविष्यति नराधिपः। अष्टाविंशत्तु वर्षाणि शिवस्वामी भविष्यति
॥ २४८ ॥ राजा च गौतमीपुत्र एकविंशत्समा नृषु। एकोनविंशतिं राजा यज्ञश्रीः सातकर्ण्यथ ॥ २४९ ॥ षडेव भविता तस्माद्विजयस्तु समा नृपः
दण्डश्रीः सातकर्णी च तस्य पुत्रः समास्त्रयः ॥ २५० ॥ पुलोवापि समाः सप्त अन्येषाञ्च भविष्यति। इत्येते वै नृपास्त्रिंशदन्ध्रा भोक्ष्यन्ति ये महीं
॥ २५१ ॥ समाः शतानि चत्वारि पञ्च षड्वै तथैव च। अन्ध्राणां संस्थिताः पञ्च तेषां वंशाः समाः पुनः ॥ २५२ ॥ सप्तैव तु भविष्यन्ति दशाभीर
स्ततो नृपाः। सप्त गर्दभिनश्चापि ततोऽथ दश वै शकाः ॥ २५३ ॥ यवनाष्टौ भविष्यन्ति तुषारास्तु चतुर्दश। त्रयोदश मरुण्डाश्च मौना ह्यष्टा
दशैव तु ॥ २५४ ॥ अन्ध्रा भोक्ष्यन्ति वसुधां शते द्वे च शतं च वै। शतानि त्रीण्यशीतिश्च भोक्ष्यन्ति वसुधां शकाः ॥ २५५ ॥ अशीतिश्चैव वर्षाणि
भोक्तारो यवना महीम्। पञ्चवर्षशतानीह तुषाराणां मही स्मृता ॥ २५६ ॥ शतान्यर्द्धचतुर्थानि भवितारस्त्रयोदश। मरुण्डा वृषलैः सार्द्धं भाव्यान्य

म्लेच्छजातयः ॥ २५७ ॥ शतानि त्रीणि भोक्ष्यन्ति म्लेच्छा एकादशैव तु । तच्छन्नेन च कालेन ततः कोलिकिला नृपाः ॥ २५८ ॥ तत
कोलिकिलेभ्यश्च विन्ध्यशक्तिर्भविष्यति । समाः षण्णवतिं ज्ञात्वा पृथिवीं च समेष्यति ॥ २५९ ॥ नृपान् वै दिशकांश्चापि भविष्यांश्च निबोधत
शेषस्य नागराजस्य पुत्रः स्वरपुरञ्जयः ॥ २६० ॥ भोगी भविष्यते राजा नृपो नागकुलोद्वहः । सदाचन्द्रस्तु चन्द्रांशो द्वितीयो नखवांस्तथ
॥ २६१ ॥ धनधर्मा ततश्चापि चतुर्थो विंशजः स्मृतः । भूतिनन्दस्ततश्चापि वैदेशे तु भविष्यति ॥ २६२ ॥ अङ्गानां नन्दनस्यान्ते मधुनन्दि
विष्यति । तस्य भ्राता यवीयांस्तु नाम्ना नन्दियशाः किल ॥ २६३ ॥ तस्यान्वये भविष्यन्ति राजानस्ते त्रयस्तु वै । दौहित्रः शिशुको ना
पुरिकायां नृपोऽभवत् ॥ २६४ ॥ विन्ध्यशक्तिसुतश्चापि प्रवीरो नाम वीर्यवान् । भोक्ष्यन्ति च समाः षष्टिं पुरीं काञ्चनकाञ्च वै ॥ २६५
यक्ष्यन्ति वाजपेयैश्च समाप्तवरदक्षिणैः । तस्य पुत्रास्तु चत्वारो भविष्यन्ति नराधिपाः ॥ २६६ ॥ विन्ध्यकानां कुलेऽतीते नृपा वै वाह्लिक
त्रयः । सुप्रतीको नभीरस्तु समा भोक्ष्यति त्रिंशतिम् ॥ २६७ ॥ शक्यमा नाम वै राजा माहिषीनां महीपतिः । पुष्पमित्रा भविष्य
पट्टमित्रास्त्रयोदश ॥ २६८ ॥ मेकलायां नृपाः सप्त भविष्यन्ति च सत्तमाः । कोमलायान्तु राजानो भविष्यन्ति महाबलाः ॥ २६९ ॥ मेघ
इति समाख्याता बुद्धिमन्तो नवैव तु । नैषधाः पार्थिवाः सर्व्वे भविष्यन्त्यामनुक्षयात् ॥ २७० ॥ नलवंशप्रसूतास्ते वीर्यवन्तो महाबलाः । मा
धानां महावीर्यो विश्वस्फानिर्भविष्यति ॥ २७१ ॥ उत्साद्य पार्थिवान् सर्व्वान्सोऽन्यान् वर्णान् करिष्यति । कैवर्त्तान् पञ्चकांश्चैव पुलिन्दान् ब्राह्मण
स्तथा ॥ २७२ ॥ स्थापयिष्यन्ति राजानो नानादेशेषु तेजसा । विश्वस्फानिर्महासत्त्वो युद्धे विष्णुसमो बली ॥ २७३ ॥ विश्वस्फानिर्नरपतिः क्लीबा
कृतिरिवोच्यते । उत्सादयित्वा क्षत्रन्तु क्षत्रमन्यत् करिष्यति ॥२७४॥ देवान् पितृंश्च विप्रांश्च तर्पयित्वा सकृत्पुनः । जाह्नवीतीरमासाद्य शरीरं यस्य
बली ॥ २७५ ॥ संन्यस्य स्वशरीरन्तु शक्रलोकं गमिष्यति । नवनाकास्तु भोक्ष्यन्ति पुरीं चम्पावतीं नृपाः ॥ २७६ ॥ मथुराञ्च पुरीं रम्यां नाग
भोक्ष्यन्ति सप्त वै । अनुगङ्गं प्रयागञ्च साकेतं मगधांस्तथा । एताञ्जनपदान् सर्व्वान् भोक्ष्यन्ते गुप्तवंशजाः ॥ २७७ ॥ निषधान् यदुकांश्चैव शैश
तान् कालतोयकान् । एताञ्जनपदान् सर्व्वान् भोक्ष्यन्ति मणिधान्यजाः ॥ २७८ ॥ कोशलांश्चान्ध्रपौण्ड्रांश्च ताम्रलिप्तान् ससागरान् । चम्पां चै
पुरीं रम्यां भोक्ष्यन्ति देवरक्षिताम् ॥ २७९ ॥ कालिङ्गा महिषाश्चैव महेन्द्रनिलयाश्च ये । एताञ्जनपदान् सर्व्वान् पालयिष्यति वै गुहः ॥ २८०
स्त्रीराष्ट्रं भक्ष्यकांश्चैव भोक्ष्यते कनकाह्वयः । तुल्यकालं भविष्यन्ति सर्वे ह्येते महीक्षितः ॥ २८१ ॥ अल्पप्रसादा ह्यनृता महाक्रोधा ह्यधार्मिकाः

भविष्यन्तीह यवना धर्मतः कामतोऽर्थतः ॥ ३८२ ॥ नैव मूर्द्धाभिषिक्तास्ते भविष्यन्ति नराधिपाः । युगदोषदुराचारा भविष्यन्ति नृपास्तु ते ॥३८३॥ स्त्रीणां बालवधेनैव हत्वा चैव परस्परम् । भोक्ष्यन्ति कलिशेषे तु वसुधां पार्थिवास्तथा ॥ ३८४ ॥ उदितोदितवंशास्ते उदितास्तमितास्तथा । भविष्यन्तीह पर्याये कालेन पृथिवीक्षितः ॥ ३८५ ॥ विहीनास्तु भविष्यन्ति धर्म्मतः कामतोऽर्थतः । तैर्विमिश्रा जनपदा म्लेच्छाचाराश्च सर्वशः ॥ ३८६॥ विपर्य्ययेन वर्त्तन्ते नाशयिष्यन्ति वै प्रजाः । लुब्धानृतरताश्चैव भवितारस्तदा नृपाः ॥ ३८७ ॥ तेषां व्यतीते पर्याये बहुस्त्रीके युगे तदा । लवाद्लवं भ्रश्यमाना आयूरूपबलश्रुतैः ॥ ३८८ ॥ तथा गतास्तु वै काष्ठां प्रजासु जगतीश्वराः । राजानः सम्प्रणश्यन्ति कालेनोपहतास्तदा ॥ ३८९ ॥ कल्किनोपहताः सर्वे म्लेच्छा यास्यन्ति सर्वशः । अधार्मिकाश्च तेऽत्यर्थं पाषण्डाश्चैव सर्वशः ॥ ३९० ॥ प्रनष्टे नृपशब्दे च सन्ध्याश्लिष्टे कलौ युगे । किंचिच्छिष्टाः प्रजास्ता वै धर्म्मे नष्टेऽपरिग्रहाः ॥३९१॥ असाधना हताश्वासा व्याधिशोकेन पीडिताः । अनावृष्टिहताश्चैव परस्परवधेन च ॥ ३९२ ॥ अनाथा हि परित्रस्ता वार्त्तामुत्सृज्य दुःखिताः । त्यक्त्वा पुराणि ग्रामांश्च भविष्यन्ति वनौकसः ॥३९३ ॥ एवं नृपेषु नष्टेषु प्रजास्त्यक्त्वा गृहाणि तु । नष्टे स्नेहे दुरापन्ना भ्रष्टस्नेहाः सुहृज्जनाः ॥ ३९४ ॥ वर्णाश्रमपरिभ्रष्टाः सङ्करं घोरमास्थिताः । सरित्पर्वतसेविन्यो भविष्यन्ति प्रजास्तदा ॥ ३९५ ॥ सरितः सागरानूपान् सेवन्ते पर्वतानि च । अङ्गान् कलिङ्गान् वङ्गांश्च काश्मीरान् काशिकोशलान् ॥ ३९६ ॥ ऋषिकान्तगिरिद्रोणीः संश्रयिष्यन्ति मानवाः । कृत्स्नं हिमवतः पृष्ठं कूलं च लवणाम्भसः ॥ ३९७ ॥ अरण्यान्यभिपत्स्यन्ति ह्यार्य्या म्लेच्छजनैः सह । मृगैर्मीनैर्विहङ्गैश्च श्वापदैस्तक्षुभिस्तथा । मधुशाकफलैर्मूलैर्वर्त्तयिष्यन्ति मानवाः ॥ ३९८ ॥ चीरं पर्णञ्च विविधं वल्कलान्याजिनानि च । स्वयं कृत्वा विवत्स्यन्ति यथा मुनिजनास्तथा ॥ ३९९ ॥ बीजान्नानि तथा निम्नेस्त्वीहन्तः काष्ठशङ्कुभिः । अजैडकं खरोष्ट्रञ्च पालयिष्यन्ति यत्नतः ॥ ४०० ॥ नदीर्वत्स्यन्ति तोयार्थं कूलमाश्रित्य मानवाः । पार्थिवान् व्यवहारेण विबाधन्तः परस्परम् ॥४०१॥ बहुमन्याः प्रजाहीनाः शौचाचारविवर्जिताः । एवं भविष्यन्ति नरास्तदाधर्म्मे व्यवस्थिताः ॥४०२॥ हीनाद्धीनांस्तथा धर्म्मान् प्रजाः समनुवर्त्तते । आयुस्तदा त्रयोविंशं न कश्चिदतिवर्त्तते ॥४०३ ॥ दुर्बला विषयग्लाना जरया संपरिप्लुताः । पत्रमूलफलाहाराश्चीरकृष्णाजिनाम्बराः ॥ ४०४ ॥ वृत्त्यर्थमभिलिप्सन्तश्चरिष्यन्ति वसुन्धराम् । एतत्कालमनुप्राप्ताः प्रजाः कलियुगान्तके ॥ ४०५ ॥ क्षीणे कलियुगे तस्मिन् दिव्ये वर्षसहस्रके । निःशेषास्तु भविष्यन्ति सार्द्धं कलियुगेन तु । ससन्ध्यांशे तु निःशेषे कृतं वै प्रतिपत्स्यते ॥ ४०६ ॥ यदा चन्द्रश्च सूर्य्यश्च तथा तिष्यबृहस्पती । एकराशौ भविष्यन्ति तदा कृतयुगं भवेत् ॥ ४०७ ॥ एष वंशक्रमः कृत्स्नं कीर्तितो वो यथाक्रमम् ।

अतीता वर्त्तमानाश्च तथैवानागताश्च ये ॥४०८॥ महादेवाभिषेकात्तु जन्म यावत्परिक्षितः । एतद्वर्षसहस्रन्तु ज्ञेयं पञ्चादशदुत्तरम् ॥ ४०९ ॥ प्रमाणं वै तथा चोक्तं महापद्मान्तरं च यत् । अन्तरं तच्छतान्यष्टौ षट्त्रिंशच्च समाः स्मृताः ॥ ४१० ॥ एतत्कालान्तरं भाव्या अन्ध्रान्ता ये प्रकीर्त्तिताः । भविष्यैस्तत्र सङ्ख्याताः पुराणज्ञैः श्रुतर्षिभिः ॥ ४११ ॥ सप्तर्षयस्तदा प्राहुः प्रतीपे राज्ञि वै शतम् । सप्तविंशैः शतैर्भाव्या अन्ध्राणां ते त्वया पुनः ॥ ४१२ ॥ सप्तविंशतिपर्य्यन्ते कृत्स्ने नक्षत्रमण्डले । सप्तर्षयस्तु तिष्ठन्ति पर्यायेण शतं शतम् । सप्तर्षीणां युगं ह्येतद्दिव्यया सङ्ख्यया स्मृतम् ॥ ४१३ ॥ सा सा दिव्या स्मृता पष्टिर्दिव्याह्नाश्चैव सप्तभिः । तेभ्यः प्रवर्त्तते कालो दिव्यः सप्तर्षिभिस्तु तैः ॥ ४१४ ॥ सप्तर्षीणान्तु ये पूर्वा दृश्यन्ते उत्तरादिशि । ततो मध्येन च क्षेत्रं दृश्यते यत्समं दिवि ॥ ४१५ ॥ तेन सप्तर्षयो युक्ता ज्ञेया व्योम्नि शतं समाः । नक्षत्राणामृषीणाञ्च योगस्यैतान्निदर्शनम् ॥ ४१६ ॥ सप्तर्षयो मघायुक्ताः काले पारिक्षिते शतम् । अन्ध्रांशे स चतुर्विंशे भविष्यन्ति मते मम ॥ ४१७ ॥ इमास्तदा तु प्रकृतिं व्यापत्स्यन्ति प्रजा भृशम् । अनृतोपहताः सर्वा धर्मतः कामतोऽर्थतः ॥ ४१८ ॥ श्रौतस्मार्त्ते प्रशिथिले धर्मे वर्णाश्रमे तदा । शङ्करं दुर्बलात्मानः प्रतिपत्स्यन्ति मोहिताः ॥ ४१९ ॥ संसक्ताश्च भविष्यन्ति शूद्राः सार्द्धं द्विजातिभिः । ब्राह्मणाः शूद्रयष्टारः शूद्रा वै मन्त्रयोनयः ॥ ४२० ॥ उपस्थास्यन्ति तान् विप्रास्तदा वै वृत्तिलिप्सवः । लवं लवं भ्रस्यमानाः प्रजाः सर्वाः क्रमेण तु ॥ ४२१ ॥ क्षयमेव गमिष्यन्ति क्षीणशेषा युगक्षये । यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदा दिने ॥ ४२२ ॥ प्रतिपन्नः कलियुगस्तस्य सङ्ख्यां निबोधत । सहस्राणां शतानीह त्रीणि मानुषसङ्ख्यया । षष्टिं चैव सहस्राणि वर्षाणामुच्यते कलिः ॥ ४२३ ॥ दिव्ये वर्षसहस्रन्तु तत्सन्ध्यांशं प्रकीर्त्तितम् । निःशेषे च तदा तस्मिन् कृतं वै प्रतिपत्स्यते ॥ ४२४ ॥ ऐलइक्ष्वाकुवंशश्च सह भेदैः प्रकीर्त्तितौ । इक्ष्वाकोस्तु स्मृतः क्षत्रः सुमित्रान्तं विवस्वतः ॥ ४२५ ॥ ऐलं क्षत्रं क्षेमकान्तं सोमवंशविदो विदुः । एते विवस्वतः पुत्राः कीर्त्तिताः कीर्त्तिवर्द्धनाः ॥ ४२६ ॥ अतीता वर्त्तमानाश्च तथैवानागताश्च ये । ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवान्वये स्मृताः ॥ ४२७ ॥ युगे युगे महात्मानः समतीताः सहस्रशः । बहुत्वान्नामधेयानां परिसंख्या कुले कुले ॥ ४२८ ॥ पुनरुक्ता बहुत्वाच्च न मया परिकीर्त्तिता । वैवस्वतेऽन्तरे ह्यस्मिन् निमिवंशः समाप्यते ॥ ४२९ ॥ एवायान्तु युगाख्यायां यतः क्षत्रं प्रपत्स्यते । तथा हि कथयिष्यामि गदतो मे निबोधत ॥ ४३० ॥ देवापिः पौरवो राजा इक्ष्वाकोश्चैव यो मतः । महायोगबलोपेतः कलापग्राममास्थितः ॥ ४३१ ॥ सुवर्चाः सोमपुत्रस्तु इक्ष्वाकोस्तु भविष्यति । एतौ क्षत्रप्रणेतारौ चतुर्विंशे चतुर्युगे ॥ ४३२ ॥ न च विंशे युगे सोमवंशस्यादिर्भविष्यति । देवापिरसपत्नस्तु ऐलादिर्भविता नृपः ॥ ४३३ ॥

क्षत्रप्रावर्त्तकौ ह्येतौ भविष्येते चतुर्युगे । एवं सर्वत्र विज्ञेयं सन्तानार्थं तु लक्षणम् ॥४३४॥ क्षीणे कलियुगे तस्मिन् भविष्ये तु कृते युगे । सप्तर्षिभि
तैः सार्द्धमाद्ये त्रेतायुगे पुनः ॥ ४३५ ॥ गोत्राणां क्षत्रियाणाञ्च भविष्येते प्रवर्त्तकौ । द्वापरांशे न तिष्ठन्ति क्षत्रिया ऋषिभिः सह ॥ ४३६ ॥ 
कृतयुगे चैव क्षीणे त्रेतायुगे पुनः । बीजार्थन्ते भविष्यन्ति ब्रह्मक्षत्रस्य वै पुनः ॥ ४३७ ॥ एवमेव तु सर्वेषु तिष्ठन्तीह्यन्तरेषु वै । सप्तर्षयो नृपैः 
सन्तानार्थं युगे युगे ॥ ४३८ ॥ क्षत्रस्यैव समुच्छेदः सम्बन्धो वै द्विजैः स्मृतः । मन्वन्तराणां सप्तानां सन्तानाश्च श्रुताश्च ते ॥ ४३९ ॥ परम्परा
नाश्च ब्रह्मक्षत्रस्य चोद्भवः । यथा प्रवृत्तिस्तेषां वै प्रवृत्तानां तथा क्षयः ॥ ४४० ॥ सप्तर्षयो विदुस्तेषां दीर्घायुष्ट्वात्क्षयन्तु ते । एतेन क्रमयोगेन
क्ष्वाकन्वया द्विजाः ॥ ४४१ ॥ उत्पद्यमानास्त्रेतायां क्षीयमाणे कलौ पुनः । अनुयान्ति युगाख्यां तु यावन्मन्वन्तरक्षयः ॥ ४४२ ॥ जामदग्न्येन रामेण
निरवशेषिते । कृते वंशकुलाः सर्वाः क्षत्रियैर्वसुधाधिपैः । द्विवंशकरणाश्चैव कीर्त्तयिष्ये निबोधत ॥ ४४३ ॥ ऐलस्येक्ष्वाकुनन्दस्य प्रकृतिः परिवर्त्त
राजानः श्रेणिबद्धास्तु तथान्ये क्षत्रिया नृपाः ॥४४४॥ ऐलवंशस्य ये ख्यातास्तथैवैक्ष्वाकवा नृपाः । तेषामेकशतं पूर्णं कुलानामभिषेकिनाम् ॥ ४४
तावदेव तु भोजानां विस्तारो द्विगुणः स्मृतः । भजते त्रिशकं क्षत्रं चतुर्धा तद्यथाविशम् ॥ ४४६ ॥ तेष्वतीताः समाना ये ब्रुवतस्तान्निबोधत । 
वै प्रतिविन्ध्यानां शतं नागाः शतं हयाः ॥४४७॥ धृतराष्ट्राश्चैकशतमशीतिर्जनमेजयाः । शतञ्च ब्रह्मदत्तानां शीरिणां वीरिणां शतम् ॥४४८॥ ततः 
पुलोमानां श्वेतकाशकुशादयः । ततोऽपरे सहस्रं वै येऽतीताः शतविन्दवः ॥४४९॥ ईजिरे चाश्वमेधैस्ते सर्वे नियुतदक्षिणैः । एवं राजर्षयोऽतीताः 
शोऽथ सहस्रशः ॥ ४५० ॥ मनोर्वैवस्वतस्यास्मिन् वर्त्तमानेऽन्तरे तु ये । तेषां निबोधतोत्पन्ना लोके सन्ततयः स्मृताः ॥ ४५१
न शक्यं विस्तरं तेषां सन्तानानां परम्परा । तत्पूर्वापरयोगेन वक्तुं वर्षशतैरपि ॥ ४५२ ॥ अष्टाविंशद्युगाख्यास्तु गता वैवस्वतेऽन्तरे । 
राजर्षिभिः सार्द्धं शिष्टा यास्ता निबोधत ॥ ४५३ ॥ चत्वारिंशच्च ये चैव भविष्याः सह राजभिः । युगाख्यानां विशिष्टास्तु ततो वैवस्वतक्षये ॥४५
एतद्वः कथितं सर्व्वं समासव्यासयोगतः । पुनरुक्तं बहुत्वाच्च न शक्यन्तु युगैः सह ॥ ४५५ ॥ एते ययातिपुत्राणां पञ्चविंशा वि
हिताः । कीर्त्तिताश्चामिता ये मे लोकान् वै धारयन्त्युत ॥ ४५६ ॥ लभते च वरेण्यञ्च दुर्लभानिह लौकिकान् । आयुः कीर्त्तिं धनं पुत्रान् 
चानन्त्यमश्नुते ॥ ४५७ ॥ धारणाच्छ्रवणाच्चैव ते लोकान् धारयन्त्युत । इत्येष वो मया पादस्तृतीयः कथितो द्विजाः । विस्तरेणानुपूर्व्वी
किम्भूयो वर्त्तयाम्यहम् ॥ ४५८ ॥ इति श्रीमहापुराणे वायुप्रोक्ते अनुषङ्गपादो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ इत्यनुषङ्गपादः ॥ छ

श्रुत्वा पादं तृतीयन्तु क्रान्तं सूतेन धीमता । ततश्चतुर्थं पप्रच्छुः पादं वै ऋषिसत्तमाः ॥ १ ॥ ऋषय ऊचुः ॥ पादः क्रान्तस्तृतीयोऽयम
नुषङ्गेण यस्त्वया । चतुर्थं विस्तरात्पादं संहारं परिकीर्त्तय ॥ २ ॥ मन्वन्तराणि सर्वाणि पूर्वाण्येवापरैः सह । सप्तर्षीणामथैतेषां साम्प्रतस्यान्तरे
मनोः ॥ ३ ॥ विस्तरावयवश्चैव निसर्गस्य महात्मनः । विस्तरेणानुपूर्व्या च सर्वमेव ब्रवीहि मे ॥ ४ ॥ सूत उवाच ॥ भवतां कथयिष्यामि
सर्वमेतद्यथातथम् । पादं त्विमं ससंहारं चतुर्थं मुनिसत्तमाः ॥ ५ ॥ मनोर्वैवस्वतस्येमं सांप्रतस्य महात्मनः । विस्तरेणानुपूर्व्या च निसर्गं शृणुत
द्विजाः ॥ ६ ॥ मन्वन्तराणां संक्षेपं भविष्यैः सह सप्तभिः । प्रलयश्चैव लोकानां ब्रुवतो मे निबोधत ॥ ७ ॥ एतान्युक्तानि वै सम्यक् सप्तसप्तसु वै मया ।
मन्वन्तराणि संक्षेपाच्छृणुतानागतानि मे ॥ ८ ॥ सावर्णस्य प्रवक्ष्यामि मनोर्वैवस्वतस्य ह । भविष्यस्य भविष्यन्ति समासात्तु निबोधत ॥ ९ ॥
अनागताश्च सप्तैव स्मृतास्त्विह महर्षयः । कौशिको गालवश्चैव जामदग्न्यश्च भार्गवः ॥ १० ॥ द्वैपायनो वसिष्ठश्च कृपः शारद्वतस्तथा । आत्रेयो
दीप्तिमांश्चैव ऋष्यशृङ्गस्तु काश्यपः ॥ ११ ॥ भारद्वाजस्तथा द्रौणिरश्वत्थामा महायशाः । एते सप्त महात्मानो भविष्याः परमर्षयः ॥ १२ ॥ सुतपा
श्चामिताभाश्च सुखाश्चैव गणास्त्रयः । तेषां गणास्तु देवानां एकैको विंशकः स्मृतः ॥ १३ ॥ नामतस्तु प्रवक्ष्यामि निबोधध्वं समाहिताः । रितस्तपश्च
शुक्रश्च द्युतिर्ज्योतिः प्रभाकरो॥१४॥ प्रभासो भासकृद्धर्मस्तेजोरश्मिर्ऋतुर्विराट् । आर्चिष्मान् द्योतनो भानुर्यशः कीर्त्तिर्बुधो धृतिः । विंशतिः सुतपा ह्येते
नामभिः परिकीर्तिताः॥१५॥ प्रभुर्विभुर्विभासश्च जेता हन्ताऽरिहा रितुः। सुमतिः प्रमतिर्दीप्तिः समाख्यातो महोमहान्॥१६॥ देहो मुनिर्नयो ज्येष्ठः समः
सत्यश्च विश्रुतः । इत्येते ह्यमिताभास्तु विंशतिः परिकीर्त्तिताः ॥ १७ ॥ दमो दाता विदः सोमो वित्तवेद्यो यमो निधिः । होमं हव्यं हुतं दानं देयं दाता
तपः शमः ॥ १८ ॥ ध्रुवं स्थानं विधानञ्च नियमश्चेति विंशतिः । सुख्या ह्येते समाख्याताः सावर्णे प्रथमेऽन्तरे ॥१९॥ मारीचस्यैव ते पुत्राः कश्यपस्य
महात्मनः । साम्प्रतस्य भविष्यन्ति सावर्णस्यान्तरे मनोः ॥२०॥ तेषामिन्द्रो भविष्यस्तु बलिर्वैरोचनः पुरा । वीरवांश्चावरीयांश्च निर्मोहः सत्यवाक् कृती
॥ २१ ॥ चरिष्णुराज्यो विष्णुश्च वाचः सुमतिरेव च । सावर्णस्य मनोः पुत्रा भविष्यन्ति नवैव तु ॥२२॥ नव चान्येषु वक्ष्यामि सावर्णेश्चान्तरेषु वै ।
सावर्णमनवश्चान्ये भविष्या ब्रह्मणः सुताः ॥ २३ ॥ मेरुसावर्णिनस्ते वै दृष्टा ये दिव्यदृष्टिभिः । दक्षस्य ते हि दौहित्राः प्रियाया दुहितुः सुताः
॥ २४ ॥ महता तपसा युक्ता मेरुपृष्ठे महौजसः । ब्रह्मादिभिस्ते जनिता दक्षेणैव च धीमता ॥ २५ ॥ महर्लोकगतावृत्य भविष्या मेरुमाश्रिताः ।
महाभावात्तु ते पूर्वं जज्ञिरे चाक्षुषेऽन्तरे ॥ २६ ॥ ऋषय ऊचुः ॥ दक्षेण जनिताः पुत्राः कन्यायामात्मनः कथम् । भवेत्तु ब्रह्मणश्चैव धर्मेण

महात्मनः ॥ २७ ॥ सूत उवाच ॥ अतो भविष्यान् वक्ष्यामि सावर्णमनवस्तु ये । तेषां जन्म प्रभावञ्च नमस्कृत्य प्रचेतसे ॥ २८ ॥
स्वते ह्युपरसृष्टे किञ्चिच्छिष्टे च चाक्षुषे । जज्ञिरे मनवस्ते हि भविष्यानागतान्तरे ॥ २९ ॥ प्राचेतसस्य दक्षस्य दौहित्रा मनवस्तु ये । सावर्णा
मतः पञ्च चत्वारः परमर्षिजाः ॥ ३० ॥ संज्ञापुत्रस्तु सावर्ण एको वैवस्वतस्तथा । ज्येष्ठः संज्ञासुतो नाम मनुर्वैवस्वतः प्रभुः ॥ ३१ ॥
स्वतेऽन्तरे प्राप्ते समुत्पत्तिस्तयोः शुभा । चतुर्दशैते मनवः कीर्तिताः कीर्तिवर्द्धनाः ॥ ३२ ॥ वेदे श्रुतौ पुराणे च सर्वे ते प्रभविष्णवः ।
नानां पतयः सर्वे भूतानां पतयः स्थिताः ॥ ३३ ॥ तैरियं पृथिवी सर्वा ससद्वीपा सपर्वता । पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः ॥ ३४ ॥
ाभिस्तपसा चैव विस्तरं तेषु वक्ष्यते । चतुर्दशैव ते ज्ञेयाः सर्गाः स्वायम्भुवादयः ॥ ३५ ॥ मन्वन्तराधिकारेषु वर्तन्ते च सकृत् सकृत् ।
नेवृत्ताधिकारास्ते महर्लोकं समाश्रिताः ॥ ३६ ॥ समतीतास्तु ये तेषामष्टौ षष्ठास्तथापरे । पूर्वेषु साम्प्रतश्चायं शान्तिर्वैवस्वतः प्रभुः ॥ ३७ ॥
शिष्टास्तान् प्रवक्ष्यामि सह देवर्षिदानवैः । सह प्रजानिसर्गेण सर्वांस्त्वनागतान् द्विजान् ॥ ३८ ॥ वैवस्वतनिसर्गेण तेषां ज्ञेयस्तु विस्तरः ।
यूना नातिरिक्तास्ते यस्मात् सर्वे विवस्वतः ॥ ३९ ॥ पुनरुक्ता बहुत्वात्तु वक्ष्ये न तेषु विस्तरम् । मन्वन्तरेषु भाव्येषु भूतेष्वपि तथैव च ॥ ४० ॥
े कुले निसर्गास्तु तस्माद्भूयो विभागशः । तेषामेव हि शिष्टार्थे विस्तरेण क्रमेण च ॥ ४१ ॥ दक्षस्य कन्या धर्मिष्ठा सुव्रता नाम विश्रुता ।
कन्यावशिष्टा तु श्रेष्ठा धर्मपरा सुता । गृहीत्वा तां पिता कन्यां जगाम ब्रह्मणोऽन्तिके ॥ ४२ ॥ वैराजस्तमुपासीनं धर्मेण च भवेन च ।
धर्मसमीपस्थं दक्षं ब्रह्माभ्यभाषत ॥ ४३ ॥ दक्ष कन्या तवेयं वै जनयिष्यति सुव्रता । चतुरो वै मनून् पुत्रांश्चातुर्वर्ण्यकराञ्छुभान् ॥ ४४ ॥
णो वचनं श्रुत्वा दक्षो धर्मो भवस्तदा । तां कन्यां मनसा जग्मुस्त्रयस्ते ब्रह्मणा सह ॥ ४५ ॥ सत्याभिध्यायिनां तेषां सद्यः कन्या व्यजायत ।
शानुरूपांस्तेषां चतुरो वै कुमारकान् ॥ ४६ ॥ संसिद्धाः कार्यकरणे सम्भूतास्ते श्रियान्विताः । उपभोगसमर्थैश्च सद्योजातैः शरीरकैः ॥ ४७ ॥
दृष्ट्वा तान् स्वयम्भुद्धा ब्रह्मा व्याहारिणस्तदा । संरब्धा वै व्यकर्षन्त मम पुत्रो ममेत्युत ॥ ४८ ॥ अभिध्यानान्मनोत्पन्नानूचुर्वै ते परस्परम् ।
यस्य वपुषा तुल्यो भजतां स तु तं सुतम् ॥ ४९ ॥ यस्य यः सदृशश्चापि रूपे वीर्ये च नामतः । तं गृह्णातु सुभद्रं वो वर्णतो यस्य यः समः ॥ ५० ॥
रूपं पितुः पुत्रः सोऽनुरुध्यति सर्वदा । तस्मादात्मसमः पुत्रः पितुर्मातुश्च जायते ॥ ५१ ॥ एवं ते समयं कृत्वा सवर्णान् जगृहुः सुतान् ।
ात् सवर्णास्तेषां वै ब्रह्मादीनां कुमारकाः ॥ ५२ ॥ सवर्णा मनवस्तस्मात् सवर्णत्वं हि ते यतः । मननान्माननाच्चैव तस्मात्ते मनवः स्मृताः ॥ ५३ ॥

क्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वतस्य ह । रुचेः प्रजापतेः पुत्रो रौच्यो नामाभवत्सुतः ॥ ५४ ॥ भूत्याम्रुत्पादितो यस्तु भौत्यो नामाभवत्सुतः ।
स्वतेऽन्तरे राजा द्वौ मनू तु विवस्वतोः ॥ ५५ ॥ वैवस्वतो मनुर्यश्च सावर्णो यश्च विश्रुतः । ज्येष्ठः संज्ञासुतो विद्वान् मनुर्वैवस्वतः प्रभुः ॥ ५६ ॥
र्णायाः सुतश्चान्यः स्मृतो वैवस्वतो मनुः । सवर्णा मनवो ये च चत्वारस्तु महर्षिजाः ॥ ५७ ॥ तपसा सम्भृतात्मानः स्वेषु मन्वन्तरेषु वै । भवि
षु भविष्यन्ति सर्वकार्यार्थसाधकाः ॥ ५८ ॥ प्रथमं मेरुसावर्णेर्दक्षपुत्रस्य वै मनोः । पुत्रा मरीचिगर्भाश्च सुशर्माणश्च ते त्रयः । सम्भूताश्च महात्मानः
वैवस्वतेऽन्तरे ॥ ५९ ॥ दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः । भविष्यस्य भविष्यस्तु एकैको द्वादशो गणः ॥ ६० ॥ ऐश्वर्यसंग्राहो राहो
हुवशस्तथैव च । पारा द्वादश विज्ञेया उत्तरांस्तु निबोधत ॥ ६१ ॥ वाजियो वाजिजिच्चैव प्रभृतिश्च ककुद्मथ । दधिक्रावायपक्राश्च प्रणीतो विजयो
ः ॥ ६२ ॥ तेजस्मान्नथवो द्वौ तु द्वादशैते मरीचयः । सुशर्म्माणस्तु वक्ष्यामि नामतस्तु निबोधत ॥ ६३ ॥ वर्णस्तथाप्यङ्गविश्वौ सुरण्यो व्रजनो
ः । अमितो द्रवकेतुश्च जम्भोस्थाजस्रशक्रकाः ॥ ६४ ॥ सुनेमिर्द्युतपाश्चैव सुशर्म्माणः प्रकीर्त्तिताः । तेषामिन्द्रस्तदा भाव्यो ह्यद्भुतो नाम नामतः
६५ ॥ स्कन्दः सोमप्रतीकाशः कार्तिकेयस्तु पावकः । माघातिथिश्च पौलस्त्यो वसुः काश्यप एव च ॥ ६६ ॥ ज्योतिष्मान् भार्गवश्चैव द्युतिमान
रास्तथा । वसितश्चैव वासिष्ठ आत्रेयो हव्यवाहनः ॥ ६७ ॥ सुतपाः पौलवश्चैव सप्तैते रोहितान्तरे । धृतिकेतुर्दीप्तिकेतुश्चापहस्ता निरामयः ॥ ६८ ॥
पृश्रवास्तथा नाको भूरिद्युम्नो बृहद्रथः । प्रथमस्य तु सावर्णेर्नव पुत्राः प्रकीर्तिताः ॥ ६९ ॥ दशमे त्वथ पर्याये धर्मपुत्रस्य वै मनोः । द्वितीयस्य
सावर्णेर्भाव्यस्यैवान्तरे मनोः ॥ ७० ॥ सुखामना विरुद्धाश्च द्वावेव तु गणौ स्मृतौ । त्विषिवन्तश्च ते सर्वे शतसङ्ख्याश्च ते समाः ॥ ७१ ॥ प्राणा
यच्छतः प्रोक्ता ऋषिभिः पुरुषेषु वै । देवास्ते वै भविष्यन्ति धर्मपुत्रस्य वै मनोः ॥ ७२ ॥ तेषामिन्द्रस्तथा विद्वान् भविष्यः शान्तिरुच्यते ।
वेष्मान् पौलहः श्रीमान् सुकीर्तिश्चापि भार्गवः ॥७३॥ आपोमूर्तिस्तथात्रेयो वसिष्ठश्चापि यः स्मृतः । पौलस्त्यः प्रतिपश्चापि नाभागश्चैव काश्यपः ।
भिमन्युश्चाङ्गिरसः सप्तैते परमर्षयः ॥ ७४ ॥ सुक्षेत्रश्चोत्तमौजाश्च भूरिषेणश्च वीर्यवान् । शतानीको निरामित्रो वृषसेनो जयद्रथः ॥ ७५ ॥
रिद्युम्नः सुवर्चांश्च दशैते मानवाः स्मृताः । एकादशे तु पर्य्याये सावर्णे वै तृतीयके ॥ ७६ ॥ निर्म्माणरतयो देवाः कामजा वै मनोजवाः । गणास्त्वेते
यः ख्याता देवतानां महात्मनाम् ॥ ७७ ॥ एकैकं त्रिंशतस्तेषां गणास्तु त्रिदिवौकसाम् । मासस्याहानि त्रिंशत्तु यानि वै कवयो विदुः ॥ ७८ ॥
र्म्माणरतयो देवा रात्रयस्तु विहङ्गमाः । गणास्ते वै त्रयः प्रोक्ता देवतानां भविष्यति ॥ ७९ ॥ मनोजवा मुहूर्त्तास्तु इति देवाः प्रकीर्त्तिताः । एते

हि ब्रह्मणः पुत्रा भविष्या मनवः स्मृताः ॥ ८० ॥ तेषामिन्द्रो वृषो नाम भविष्यः सुरराट् ततः । तेषां सप्तर्षयश्चापि कीर्त्यमानान्निबोधत ॥ ८१ ॥
हविष्मान् काश्यपश्चापि वपुष्मान् यश्च भार्गवः । वारुणिश्चैव चात्रेयो वासिष्ठो भग एव च ॥ ८२ ॥ पुष्टिश्चाङ्गिरसो ज्ञेयः पौलस्त्यो निश्चरस्तथा ।
पौलहो ह्यग्नितेजाश्च देवा ह्येकादशेऽन्तरे ॥ ८३ ॥ सर्व्ववेगः सुधर्म्मा च देवानीकः पुरोवहः । क्षेमधर्मा गृहेषुश्च ह्यादर्शः पौण्ड्रको मतः ॥ ८४ ॥
सावर्णस्य तु ते पुत्राः प्राजापत्यस्य वै मनोः । द्वादशे त्वथ पर्याये रुद्रपुत्रस्य वै मनोः ॥ ८५ ॥ चतुर्थे ऋतुसावर्णे देवास्तस्यान्तरे शृणु ।
पञ्चैव तु गणाः प्रोक्ता देवतानामनागताः ॥ ८६ ॥ हरिता रोहिताश्चैव देवाः सुमनसस्तथा । सुकर्म्माणः सुपाराश्च पञ्च देवगणाः स्मृताः ॥ ८७ ॥
ब्रह्मणो मानसा ह्येते एकैको दशको गणः । अरुन्तिजो हरिश्चैव विद्वान् यश्च सहस्रशः ॥ ८८ ॥ पर्वतानुचरश्चैव ह्यपोंऽशुश्च मनोजवः । ऊर्ज्जा
स्वाहा स्वधा तारा दशैते हरिताः स्मृताः ॥ ८९ ॥ तपोजानिर्भृतिश्चैव वाचा बन्धुश्च यः स्मृतः । रजश्चैव तु राजश्च स्वर्णपादस्तथैव च ॥ ९० ॥
व्युष्टिर्विधिश्च वै देवो दशैते रोहिताः स्मृताः । उपिताद्यास्तु ये देवास्त्रयस्त्रिंशत्प्रकीर्तिताः ॥ ९१ ॥ देवान् सुमनसो विद्धि सुकर्माणो निबोधत ।
सुपर्वा वृषभः पृष्टः कृपिद्युम्नो विपश्चितः ॥ ९२ ॥ विक्रमश्च क्रमश्चैव निभृतः कान्त एव च ॥ एते सुकर्मणो देवाः सुतांश्चैषां निबोधत ॥ ९३ ॥
वर्य्योदितस्तथा जिष्टो वर्चस्वी द्युतिमान् हविः । शुभो हविकृतात्प्राप्तिर्व्यापृथो दशमस्तथा ॥ ९४ ॥ सुपारा मानसास्त्वेते देवा वै सम्प्रकीर्त्तिताः ।
तेषामिन्द्रस्तु विज्ञेय ऋतधामा महायशाः ॥ ९५ ॥ कृतिर्वसिष्ठपुत्रस्तु ह्यात्रेयः सुतपास्तथा । तपोमूर्तिश्चाङ्गिरसस्तपस्वी काश्यपस्तथा
॥ ९६ ॥ तपोऽशयानः पौलस्त्यः पुलहश्च तपोरतिः । भार्गवः सप्तमस्त्वेषां विज्ञेयस्तु तपोमतिः ॥ ९७ ॥ एते सप्तर्षयः सिद्धा अन्ये सावर्णिकेऽन्तरे ।
देववानुपदेवश्च देवश्रेष्ठो विदूरथः ॥ ९८ ॥ मित्रवान् मित्रविन्दुश्च मित्रसेनो ह्यमित्रहा । मित्रबाहुः सुवर्चाश्च द्वादशैते मनोः सुताः ॥ ९९ ॥ त्रयो
दशे तु पर्याये भाव्या रौच्यान्तरे पुनः । त्रय एव गणाः प्रोक्ता देवानान्तु स्वयम्भुवा ॥ १०० ॥ ब्रह्मणो मानसाः पुत्रास्ते हि सर्वे महात्मनः । सुत्रा
माणः सुधर्म्माणः सुकर्म्माणश्च ते त्रयः ॥ १०१ ॥ त्रिदशानां गणाः प्रोक्ता भविष्याः सोमपायिनः । त्रयस्त्रिंशद्देवता याः प्राभविष्यन्त याज्ञिकैः
॥ १०२ ॥ आज्येन पृषदाज्येन ग्रहश्रेष्ठेन चैव हि । देवैर्देवास्त्रयस्त्रिंशत्पृथक्त्वेन निबोधत ॥ १०३ ॥ सुत्रामाणः प्रयाज्यास्तु ह्याद्याज्यास्तु
साम्प्रतम् । सुकर्मणोऽनुयाज्यास्तु पृषदाज्याशिनस्तु ये ॥ १०४ ॥ उपयाज्याः सुधर्माण इति देवाः प्रकीर्त्तिताः । दिवस्पतिर्महासत्त्वस्तेषामिन्द्रो
भविष्यति ॥ १०५ ॥ पुलहात्मजपुत्रास्ते विज्ञेयास्तु रुचेः सुताः । अङ्गिराश्चैव धृतिमान् पौलस्त्यः पथ्यवांस्तु सः ॥ १०६ ॥ पौलहस्तत्त्व

दर्शी च भार्गवश्च निरुत्सकः । निष्प्रकम्पस्तथात्रेयो निर्मोहः कश्यपस्तथा ॥ १०७ ॥ स्वरूपश्चैव वासिष्ठः सप्तैते तु त्रयोदशे । चित्रसेनो विचित्रश्च तपो
धर्मधृतो भवः ॥ १०८ ॥ अनेकक्षत्रबद्धश्च सुरसो निर्भयः पृथः । रौच्यस्यैते मनोः पुत्रा ह्यन्तरे तु त्रयोदशे ॥१०९॥ चतुर्दशे तु पर्याये भौतस्याप्यन्तरे
मनोः । देवतानां गणाः पञ्च प्रोक्ता ये तु भविष्यति॥११०॥चाक्षुपाश्च कनिष्ठाश्च पवित्रा भाजरास्तथा । वाचावृद्धाश्च इत्येते पञ्च देवगणाः स्मृताः॥१११॥
सप्तैव तांस्तान् भार्गांश्च विद्धि चाक्षुपसंज्ञकान् । बृहदाद्यानि सामानि कनिष्ठान् सप्त तान् विदुः । सप्त लोकाः परित्रास्ते भाजिराः सप्त सिन्धवः ॥११२॥
वाचावृद्धानृषीन् विद्धि मनोः स्वायम्भुवस्य वै । सर्वे मन्वन्तरेन्द्राश्च विज्ञेयास्तुल्यलक्षणाः॥११३॥ तेजसा तपसा बुद्ध्या वलश्रुतपराक्रमैः । त्रैलोक्ये यानि
सत्त्वानि गतिमन्ति ध्रुवाणि च । सर्वशः स्वैर्गुणैस्तानि इन्द्रास्तेऽभिभवन्ति वै॥११४॥भूतापवादिनो हृष्टा मध्यस्था भूतवादिनः । भूतानुवादिनः सत्कास्त्रयो
वेदाः प्रवादिनाम् ॥११५॥ अग्निध्रः काश्यपश्चैव पौलस्त्यो मागधश्च यः । भार्गवो ह्यग्निबाहुश्च शुचिराङ्गिरसस्तथा । ओजस्वी सुबलश्चैव भौत्यस्यैते मनोः
सुताः॥११६॥ सवर्णा मनवो ह्येते चत्वारो ब्रह्मणः सुताः । एको वैवस्वतश्चैव सावर्णो मनुरुच्यते ॥११७॥ रौच्यो भौत्यश्च यौ तौ तु मनोः पौलहभार्गवौ ।
भौत्यस्यैवाधिपत्ये तु पूर्णः कल्पस्तु पूर्यते ॥ ११८ ॥ सूत उवाच ॥ निःशेषेषु च सर्वेषु तदा मन्वन्तरेष्विह । अन्तेऽनेकयुगे तस्मिन् क्षीणे
संहार उच्यते ॥ ११९ ॥ सप्तैते भार्गवा देवा अन्ते मन्वन्तरे तदा । भुक्त्वा त्रैलोक्यमध्यस्था युगाख्यां ह्येकसप्ततिम् ॥ १२० ॥ पितृभिर्मनुभिश्चैव
सार्द्धं सप्तर्षिभिस्तु ये । यज्वानश्चैव तेऽप्यन्ये तद्भाक्ताश्चैव तैः सह ॥ १२१ ॥ महर्लोकं गमिष्यन्ति त्यक्त्वा त्रैलोक्यमीश्वराः । ततस्तेषु गतेपूर्द्धं
क्षीणे मन्वन्तरे तदा । अनाधारमिदं सर्वं त्रैलोक्यं वै भविष्यति ॥ १२२ ॥ ततः स्थानानि शून्यानि स्थानिनां तानि वै द्विजाः । प्रभ्रश्यन्ति
विमुक्तानि ताराऋक्षग्रहैस्तथा ॥ १२३ ॥ ततस्तेषु व्यतीतेषु त्रैलोक्यस्येश्वरेष्विह । सेन्द्राद्येषु महर्लोके यस्मिंस्ते कल्पवासिनः ॥ १२४ ॥ जिता
द्याश्च गणा ह्यत्र चाक्षुषान्ताश्चतुर्दश । मन्वन्तरेषु सर्वेषु देवास्ते वै महौजसः ॥ १२५ ॥ ततस्तेषु गतेपूर्द्धं सायोज्यं कल्पवासिनाम् । समेत्य
देवास्ते सर्वे प्राप्ते संकलने तदा ॥ १२६ ॥ महर्लोकं परित्यज्य गणास्ते वै चतुर्दश । सशरीराश्च श्रूयन्ते जनलोकं सहानुगाः ॥ १२७ ॥ एवं देवेष्व
तीतेषु महर्लोकाज्जनं प्रति । भूतादिष्ववशिष्टेषु स्थावरान्तेषु चाप्युत ॥ १२८ ॥ शून्येषु लोकस्थानेषु महान्तेपु भूरादिषु । देवेषु च गतेपूर्द्ध सायोज्यं
कल्पवासिनाम् ॥ १२९ ॥ संहृत्य तांस्ततो ब्रह्मा देवर्षिपितृदानवान् । संस्थापयति वै सर्गं महद्दृष्ट्या युगक्षये ॥ १३० ॥ तत्र युगसहस्रान्तमहर्यं
ब्रह्मणो विदुः । रात्रिं युगसहस्रान्तामहोरात्रविदो जनाः ॥ १३१ ॥ नैमित्तिकः प्राकृतिको यश्चैवात्यन्तिकोऽर्थतः । त्रिविधः सर्वभूतानामित्येप

प्रतिसञ्चरः ॥ १३२ ॥ ब्राह्मो नैमित्तिकस्तस्य कल्पदाहः प्रसंयमः । प्रतिसर्गे तु भूतानां प्राकृतः करणक्षयः ॥१३३॥ ज्ञानाच्चात्यन्तिकः प्रोक्तः कारणानाम
सम्भवः । ततः संहृत्य तान् ब्रह्मा देवांस्त्रैलोक्यवासिनः ॥ १३४ ॥ अहरन्ते प्रकुरुते सर्गस्य प्रलयं पुनः । सुषुप्सुर्भगवान् ब्रह्मा प्रजाः संहरते
तदा ॥ १३५ ॥ ततो युगसहस्रान्ते संप्राप्ते च युगक्षये । तत्रात्मस्थाः प्रजाः कर्त्तुं प्रपेदे स प्रजापतिः ॥ १३६ ॥ तदा भवत्यनावृष्टिस्तदा सा शत
वार्षिकी । तथा यान्यल्पसाराणि सत्त्वानि पृथिवीतले ॥ १३७ ॥ तान्येवात्र प्रलीयन्ते भूमित्वमुपयान्ति च । सप्तरश्मिरथो भूत्वा ह्युदतिष्ठद्विभावसुः
॥ १३८ ॥ असह्यरश्मिर्भगवान् पिबन्नम्भो गभस्तिभिः । हरिता रश्मयस्तस्य दीप्यमानास्तु सप्तभिः ॥ १३९ ॥ भूय एव विवर्तन्ते व्याप्नुवन्तो वनं
शनैः । भौमं काष्ठं घनं तेजो भृशमद्भिस्तु दीप्यते ॥ १४० ॥ तस्मादुदकं सूर्य्यस्य तपतोऽति हि कथ्यते । नावृष्ट्या तपते सूर्यो नावृष्ट्या
परिविष्यते ॥ १४१ ॥ नावृष्ट्या परिचिन्वन्ति वारिणा दीप्यते रविः । तस्मादपः पिबन् या वै दीप्यते रविरम्बरे ॥ १४२ ॥ तस्य ते रश्मयः
सप्त पिबन्त्यम्भो महार्णवात् । तेनाहारेण सन्दीप्तः सूर्य्यः सप्त भवत्युत ॥ १४३ ॥ ततस्ते रश्मयः सप्त सूर्य्यभूताश्चतुर्दिशम् । चतुर्लोकमिमं सर्वं
दहन्ति शिखिनस्तदा ॥ १४४ ॥ प्राप्नुवन्ति च भाभिस्तु ह्यूर्द्ध्वं चाधश्च रश्मिभिः । दीप्यन्ते भास्कराः सप्त युगान्ताग्निः प्रतापिनः ॥ १४५ ॥ ते
वारिणा च संदीप्ता बहुसाहस्ररश्मयः । खं समावृत्य तिष्ठन्ति निर्दहन्तो वसुन्धराम् ॥ १४६ ॥ ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा । साद्रि
नद्यर्णवा पृथ्वी विस्नेहा समपद्यत ॥ १४७ ॥ दीप्ताभिः सन्तताभिश्च चित्राभिश्च समन्ततः । अधश्चोर्ध्वश्च तिर्यक् च संरुद्धं सूर्यरश्मिभिः
॥१४८॥सूर्य्याग्नीनां प्रवृद्धानां संसृष्टानां परस्परम् । एकत्वमुपयातानामेकज्वालं भवत्युत ॥ १४९ ॥ सर्वलोकप्रणाशश्च सोऽग्निर्भूत्वा तु मण्डली ।
चतुर्लोकमिदं सर्वं निर्दहत्याशु तेजसा ॥ १५० ॥ ततः प्रलीयते सर्व्वं जङ्गमं स्थावरं तदा । निर्वृक्षा निस्तृणा भूमिः कूर्मपृष्ठसमा भवेत् ॥ १५१ ॥
अम्बरीषमिवाभाति सर्वं मारीषितं जगत् । सर्वमेव तदार्चिर्भिः पूर्णं जज्वाल्यते नभः ॥ १५२ ॥ पाताले यानि भूतानि महोदधिगतानि च । तत
स्तानि प्रलीयन्ते भूमित्वमुपयान्ति च ॥ १५३ ॥ द्वीपाश्च पर्वताश्चैव वर्षाण्यथ महोदधिः । सर्व्वं तद्भस्मसाच्चक्रे सर्वात्मा पावकस्तु सः ॥ १५४ ॥
समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्वतः । पिबन्नपः समिद्धोऽग्निः पृथिवीमाश्रितो ज्वलन् ॥ १५५ ॥ ततः संवर्त्तकः शैलानतिक्रम्य महांस्तथा ।
लोकान् संहरते दीप्तो घोरः संवर्त्तकोऽनलः ॥ १५६ ॥ ततः स पृथिवीं भित्त्वा रसातलमशोषयत् । निर्दह्य तांस्तु पातालान्नागलोकमथादहत् ॥१५७॥
अधस्तात्पृथिवीं दग्ध्वा ह्यूर्द्ध्वं स दहते दिवम् । योजनानां सहस्राणि ह्ययुतान्यर्बुदानि च ॥ १५८ ॥ उदतिष्ठच्छिखास्तस्य बह्न्यः

संवर्त्तकस्य तु । गन्धर्वांश्च पिशाचांश्च समहोरगराक्षसान् । तदा दहति सन्दीप्तो गोलकं चैव सर्व्वशः ॥ १५९ ॥ भूर्लोकन्तु भुवर्लोकं स्वर्लोकञ्च मह
स्तथा । घोरं दहति कालाग्निरेवं लोकचतुष्टयम् ॥ १६० ॥ व्याप्तेषु तेषु लोकेषु तिर्यगूर्द्धमथाग्निना । तत्तेजः समनुप्राप्तं कृत्स्नं जगदिदं शनैः ।
अयोगुडनिभं सर्व्वं तदा ह्येवं प्रकाशते ॥ १६१ ॥ ततो गजकुलाकारास्तडिद्भिः समलंकृताः । उत्तिष्ठन्ति तदा घोरा व्योम्नि संवर्त्तका घनाः ॥१६२॥
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः । केचिद्वैदूर्यसंकाशा इन्द्रनीलनिभ. परे ॥ १६३ ॥ शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभास्तथा । धूम्र
वर्णा घनाः केचित्केचित्पीताः पयोधराः ॥ १६४ ॥ केचिद्रासभवर्णाभा लाक्षारक्तनिभास्तथा । मनःशिलाभास्त्वपरे कपोताभास्तथाम्बुदाः ॥ १६५॥
इन्द्रगोपनिभाः केचिदुत्तिष्ठन्ति घना दिवि । केचित्पुरधराकाराः केचिद्गजकुलोपमाः ॥ १६६ ॥ केचित्पर्वतसंकाशाः केचित्स्थलनिभा घनाः ।
कुण्डागारनिभाः केचित्केचिन्मीनकुलोपमाः ॥ १६७ ॥ बहुरूपा घोररूपा घोरस्वरनिनादिनः । तदा जलधराः सर्वे पूरयन्ति नभःस्थलम् ॥ १६८ ॥
ततस्ते जलदा घोरा नवीना भास्करात्मिकाः । सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ॥ १६९ ॥ ततस्ते जलदा वर्षं मुञ्चन्ति च महौघमम् ।
सुघोरमशिवं सर्व्वं नाशयन्ति च पावकम् ॥ १७० ॥ प्रवृष्टैश्च तथात्यर्थं वारिभिः पूर्य्यते जगत् । अद्भिस्तेजोऽभिभूतञ्च तदाग्निः प्राविशत्यपः ॥१७१॥
नष्टे चाग्नौ वर्षशते पयोदाः पाकसम्भवाः । प्लावयन्ति जगत्सर्वं बृहज्जालपरिस्रवैः ॥ १७२ ॥ धाराभिः पूरयन्तीमं चोद्यमानाः स्वयम्भुवा । अन्ये तु
सलिलौघैस्तु वेलामभिभवन्त्यपि । साद्रिद्वीपान्तरं पृथ्वी ह्यद्भिः संछाद्यते तदा ॥ १७३ ॥ तस्य वृष्ट्या च तोयं तत्सर्व्वं हि परिमण्डितम् । प्रवि
शत्युदधौ विप्राः पीतं सूर्य्यस्य रश्मिभिः ॥ १७४ ॥ आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति । पुनः पतति तद्भूमौ तेन पूर्य्यन्ति चार्णवाः ॥१७५॥
ततः समुद्राः स्वां वेलां परिकामन्ति सर्व्वशः । पर्व्वताश्च विशीर्य्यन्ते मही चाप्सु निमज्जति ॥ १७६ ॥ ततस्तु सहसोद्भ्रान्तः पयोदांस्तान्नभस्तले ।
संवेष्टयति घोरात्मा दिवि वायुः समन्ततः ॥ १७७ ॥ तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे । पूर्णे युगसहस्रे वै निःशेषः कल्प उच्यते ॥ १७८ ॥
अथाम्भसा वृते लोके प्राहुरेकार्णवं बुधाः । अथ भूमितलं खञ्च वायुश्चैकार्णवे तदा । नष्टे भावेऽवलीनं तत्प्राज्ञायत न किञ्चन ॥ १७९ ॥ पार्थि
वास्त्वथ सामुद्रा आपो हैमाश्च सर्व्वशः । प्रसरन्त्यो व्रजन्त्येकं सलिलाख्यां भजन्त्युत ॥ १८० ॥ आगतागतिकं चैव तदा तत्सलिलं स्मृतम् ।
प्रच्छाद्य तिष्ठति महीमर्णवाख्यं च तज्जलम् ॥ १८१ ॥ आभान्ति यस्मात्ता भाभिर्भाशब्दव्याप्तिदीप्तिषु । भस्म सर्व्वमनुप्राप्य तस्मादम्भो निरु
च्यते ॥ १८२ ॥ नानात्वे चैव शीघ्रे च धातुर्वै अर उच्यते । एकार्णवे तदा यो वै न शीघ्रास्तेन ता नराः ॥ १८३ ॥ तस्मिन् युगसहस्रान्ते दिवसे

ब्रह्मणो गते । तावन्तं कालमेवं तु भवत्येकार्णवं जगत् । तदा तु सर्व्वव्यापारा निवर्त्तन्ते प्रजापतेः ॥ १८४ ॥ एवमेकार्णवे तस्मिन्नष्टे स्थावर
जङ्गमे । तदा स भवति ब्रह्मा सहस्राक्षः सहस्रपात् ॥ १८५ ॥ सहस्रशीर्षा सुमनाः सहस्रपात् सहस्रचक्षुर्वदनः सहस्रवाक् । सहस्रबाहुः
प्रथमः प्रजापतिस्त्रयीपथे यः पुरुषो निरुच्यते ॥ १८६ ॥ आदित्यवर्णो भुवनस्य गोप्ता ह्यपूर्व्व एकः प्रथमस्तुराषाट् । हिरण्यगर्भः पुरुषो
महान् वै संपद्यते वै तमसः परस्तात् ॥ १८७ ॥ चतुर्युगसहस्रान्ते सर्वतः सलिलप्लुते । सुषुप्सुरप्रकाशां स्वां रात्रिं तु कुरुते प्रभुः ॥ १८८ ॥
चतुर्विधा यदा शेते प्रजाः सर्व्वाण्डमण्डिताः । पश्यन्ते तं महात्मानं कालं सप्त महर्षयः ॥ १८९ ॥ जनलोकविवर्त्तन्तस्तपसा लब्धचक्षुषः । भृग्वा
दयो महात्मानः पूर्व्वं व्याख्यातलक्षणाः ॥ १९० ॥ सत्यादीन् सप्तलोकान् वै ते हि पश्यन्ति चक्षुषा । ब्रह्माणं ते तु पश्यन्ति महाब्राह्मीषु रात्रिषु
॥ १९१ ॥ सप्तर्षयः प्रपश्यन्ति सुप्तकालं स्वरात्रिषु । कल्पानां परमेष्ठित्वात्तस्मादाद्यः स पठ्यते ॥ १९२ ॥ स यष्टा सर्वभूतानां कल्पादिषु पुनः पुनः ।
एवमावेशयित्वा तु स्वात्मन्येव प्रजापतिः ॥ १९३ ॥ अथात्मनि महातेजाः सर्वमादाय सर्वकृत् । ततस्ते वसते रात्रिं तमस्येकार्णवे जले ॥ १९४ ॥
ततो रात्रिक्षये प्राप्ते प्रतिबुद्धः प्रजापतिः । मनः सिसृक्षया युक्तं सर्गाय निदधे पुनः ॥ १९५ ॥ एवं सलोके निर्वृत्ते उपशान्ते प्रजापतौ । ब्रह्मनैमित्तिके
तस्मिन् कल्पिते वै प्रसंयमे ॥ १९६ ॥ देहैर्वियोगः सत्त्वानां तस्मिन् वै कृत्स्नशः स्मृतः । ततो दग्धेषु भूतेषु सर्व्वेष्वादित्यरश्मिभिः । देवर्षिम
नुवर्य्येषु तस्मिन् सङ्कलने तदा ॥ १९७ ॥ गन्धर्वादीनि सत्वानि पिशाचान्तानि सर्व्वशः । कल्पादावप्रतप्तानि जनमेवाश्रयन्ति वै ॥ १९८ ॥
तिर्यग्योनीनि सत्वानि नारकेयानि यान्यपि । तदा तान्यपि दग्धानि धुतपापानि सर्व्वशः । जने तान्युपपद्यन्ते यावत्संप्लवते जगत् ॥ १९९ ॥
व्युष्टायान्तु रजन्यां तु ब्रह्मणेऽव्यक्तयोनये । जायन्ते हि पुनस्तानि सर्व्वभूतानि कृत्स्नशः ॥ २०० ॥ ऋषयो मनवो देवाः प्रजाः सर्व्वाश्चतुर्विधाः ।
तेषामपीह सिद्धानां निधनोत्पत्तिरुच्यते ॥ २०१ ॥ यथा सूर्यस्य लोकेऽस्मिन्नुदयास्तमनं स्मृतम् । तथा जन्मनिरोधश्च भूतानामिह दृश्यते ॥ २०२ ॥
आभूतसंप्लवात्तस्माद्भवः संसार उच्यते । यथा सर्व्वाणि भूतानि जायन्ते हि दर्पास्विह ॥ २०३ ॥ स्थावरादीनि सत्त्वानि कल्पे कल्पे तथा प्रजाः ।
यथार्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये ॥ २०४ ॥ दृश्यन्ते तानि तान्येव तथा ब्रह्मात्तरात्रिषु । प्रत्याहारे च सर्गे च गतिमान्ति ध्रुवाणि च ॥ २०५ ॥
निष्क्रमन्ते विशन्ते च प्रजाकारं प्रजापतिम् । ब्रह्माणं सर्वभूतानि महायोगं महेश्वरम् ॥ २०६ ॥ संस्रष्टा सर्वभूतानां कल्पादिषु पुनः पुनः । व्यक्ता
व्यक्तो महादेवस्तस्य सर्वमिदं जगत् ॥ २०७ ॥ येनैव सृष्टाः प्रथमं प्रयाता आपो हि मार्गेण महीतलेऽस्मिन् । पूर्वप्रयातेन तथा ह्यपोऽन्यास्तेनैव

तेनैव तु संव्रजन्ति ॥ २०८ ॥ यथा शुभेन त्वशुभेन चैव तत्रैव तत्रैव विवर्त्तमानाः । मर्त्यास्तु देहान्तरभावितत्त्वात्स्वैर्वशाद्दुर्दनपश्चरान्ति ॥ २०९ ॥
ये चापि देवा मनवः प्रजेशा अन्येऽपि ये स्वर्गगताश्च सिद्धाः । सद्भाविताख्यातिवशाच्च धर्म्म्याः पुनर्निसर्गेण भवन्ति सत्त्वाः ॥ २१० ॥ अत ऊर्द्ध
प्रवक्ष्यामि कालमाभूतसंप्लवम् । मन्वन्तराणि यानि स्युर्व्याख्यातानि मया द्विजाः । सह प्रज्ञानिसर्गेण सह देवैश्चतुर्दश ॥ २११ ॥ स युगाख्या
सहस्रं तु सर्वाण्येवान्तराणि वै । अस्याः सहस्रे द्वे पूर्णे निःशेषः कल्प उच्यते ॥ २१२ ॥ एतद्ब्राह्ममहो ज्ञेयं तस्य संख्यां निबोधत । निमेषस्तुल्य
मात्रा हि कृतो लघ्वक्षरेण तु ॥ २१३ ॥ मानुषाक्षिनिमेषास्तु काष्ठा पञ्चदश स्मृता । लवः क्षणास्तु पञ्चैव विंशत्काष्ठा तु ते त्रयः ॥ २१४ ॥
प्रस्थः सप्तोदकाश्चैव साधिकास्तु लवः स्मृतः । लवास्त्रिंशत्कला ज्ञेया मुहूर्तस्त्रिंशतः कलाः ॥ २१५ ॥ मुहूर्त्तास्तु पुनस्त्रिंशदहोरात्रमिति स्थितिः ।
अहोरात्रं कलानान्तु त्र्यधिकानि शतानि षट् ॥२१६॥ ताश्चैव संख्यया ज्ञेयं चन्द्रादित्यगतिर्यथा । निमेषा दश पञ्चैव काष्ठास्तास्त्रिंशतः कला ॥२१७॥
त्रिंशत्कला मुहूर्त्तस्तु दशभागः कला स्मृता । चत्वारिंशत्कलानान्तु मुहूर्त्तं इति संज्ञितः ॥२१८॥ मुहूर्त्तांश्च लवाश्चापि प्रमाणज्ञैः प्रकल्पिताः । तत्स्थाने
नाम्भसाश्चापि पलान्यथ त्रयोदश ॥२१९॥ मागधेनैव मानेन जलप्रस्थो विधीयते । एते चाप्युदकप्रस्थाश्चत्वारो नालिको घटः ॥२२०॥ हेममाषैः कृतच्छिद्रै
श्चतुर्भिश्चतुरङ्गुलैः । समाहनि च रात्रौ च मुहूर्त्तौ वै द्विनालिकौ ॥२२१॥ रवेर्गतिविशेषेण सर्वेषु नृषु नित्यशः । अधिकं षट् शतं पञ्च कलानां प्रविधीयते
॥२२२॥ तदहर्मानुषं ज्ञेयं नाक्षत्रन्तु दशाधिकम् । सावनेन तु मासेन ह्यहोऽयं मानुषः स्मृतः ॥२२३॥ एतद्दिव्यमहोरात्रमिति शास्त्रविनिश्चयः । अह्नाऽनेन
तु या संख्या मासर्त्त्वयनवार्षिकी ॥२२४॥ तदा बद्धमिदं ज्ञानं संज्ञा या ह्युपलक्ष्यताम् । कलानां सुपरीमाणात्काल इत्यभिधीयते ॥ २२५ ॥ यदहर्ब्रह्मणः
प्रोक्तं दिव्या कोटी तु तत् स्मृता । शतानाञ्च सहस्राणि दशद्विगुणितानि च । नवतिश्च सहस्राणि तथैवान्यानि यानि तु ॥ २२६ ॥ एतच्छ्रुत्वा तु
ऋषयो विस्मयं परमाद्भुतम् । संस्थासम्भजनं ज्ञानमपृच्छन्नन्तरन्तदा ॥२२७॥ ऋषय ऊचुः ॥ संप्लावनस्य कालन्तु मानुषेणैव सम्मतम् । मानेन श्रोतुमि
च्छामः संक्षेपार्थपदाक्षरम् ॥ २२८॥ तेषां श्रुत्वा स देवस्तु वायुर्लोकहिते रतः । संक्षेपाद्दिव्यचक्षुष्मान् प्रोवाच भगवान् प्रभुः ॥२२९॥ एते रात्र्यहनी
पूर्वं कीर्त्तिते त्विह लौकिके । तासां सङ्ख्याय वर्षाग्रं त्र्यहयं वक्ष्याम्यहःक्षये ॥ २३० ॥ कोटिशतानि चत्वारि वर्षाणि मानुषाणि तु । द्वात्रिंशच्च तथा
कोट्यः सङ्ख्याताः सङ्ख्यया द्विजैः ॥ २३१ ॥ तथा शतसहस्राणि एकोननवतिः पुनः । आशीतिश्च सहस्राणि एष कालः प्लवस्य तु ॥ २३२ ॥ मानु
षाख्येण सङ्ख्यातः कालो ह्याभूतसंप्लवः । सप्त सूर्य्यास्तदाऽग्रेषु तदा लोकेषु तेषु वै ॥२३३॥ महाभूतेषु लीयन्ते प्रजाः सर्वाश्चतुर्विधाः । सलिलेना

प्लुते लोके नष्टे स्थावरजङ्गमे ॥ २३४ ॥ विनिवृत्ते च संहारे उपशान्ते प्रजापतौ। निरालोके प्रदग्धे तु नैशेन तु समावृते । ईश्वराधिष्ठिते ह्यस्मिंस्तदा
ह्येकार्णवे तदा ॥२३५॥ तावदेकार्णवो ह्येयो यावदासीदहः प्रभोः । रात्रिस्तु सलिलावस्था निवृत्तौ चाप्यहः स्मृतम् ॥ २३६ ॥ अहोरात्रस्तथैवास्य
क्रमेण परिवर्त्तते । आभूतसंप्लवो ह्येष अहोरात्रः स्मृतः प्रभोः ॥ २३७ ॥ त्रैलोक्ये यानि सत्वानि गतिमन्ति ध्रुवाणि च । आभूतेभ्यः प्रलीयन्ते
तस्मादाभूतसंप्लवः ॥ २३८ ॥ अग्रे भूतः प्रजानान्तु तस्माद्भूतः प्रजापतिः । आभूतः प्लवते चैव तस्मादाभूतसंप्लवः ॥ २३९ ॥ शाश्वते चामृतत्वे
च शब्दे चाभूतसंप्लवः । अतीता वर्त्तमानाश्च तथैवानागताः प्रजाः । दिव्यसङ्ख्या प्रसङ्ख्याता ह्यपरार्धगुणीकृता ॥ २४० ॥ परार्धद्विगुणश्चापि
परमायुः प्रकीर्तितम् । एतावान् स्थितिकालस्तु ह्यजस्येह प्रजन्मतेः । स्थित्यन्ते प्रतिसर्गस्य ब्रह्मणः परमेष्ठिनः ॥ २४१ ॥ यथा वायुप्रवेगेन दीपा
विरूपशाम्यति । तथैवं प्रतिसर्गेण ब्रह्मा समुपशाम्यति ॥ २४२ ॥ तथा ह्यप्रतिसंसृष्टे महदादौ महेश्वरे ॥ महत्प्रलीयतेऽव्यक्ते गुणसाम्यं ततो भवेत्
॥ २४३ ॥ इत्येष च समाख्यातो मया ह्याभूतसंप्लवः । ब्रह्मनैमित्तिको ह्येष संप्रक्षालनसंयमः ॥ २४४ ॥ समासेन समाख्यातो भूयः किं वर्त्तयामि वः ।
य इदं धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः । कीर्त्तनाच्छ्रवणाच्चापि महतीं सिद्धिमाप्नुयात् ॥ २४५ ॥ इति श्रीमहापुराणे वायुप्रोक्ते मन्वन्तरकथनं
नाम अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ छ ॥ वायुरुवाच ॥ असाधारणवृत्तैस्तु हुतशेषादिभिर्द्विजैः । धर्म्मवैशेषिकैश्चैव ह्याचूर्णसूक्ष्मदर्शिभिः ॥ १ ॥
ते देवैः सह तिष्ठन्ति महर्लोकनिवासिनः । चतुर्दशैते मनवः कीर्त्तिताः कीर्त्तिवर्धनाः ॥ २ ॥ अतीता वर्त्तमानाश्च तथैवानागताश्च ये । ऋषिभि
र्दैवतैश्चैव सह गन्धर्वराक्षसैः ॥ ३ ॥ मन्वन्तराधिकारेषु जायन्तीह पुनः पुनः । देवाः सप्तर्षयश्चैव मनवः पितरस्तथा ॥ ४ ॥ सर्व्वे ह्यपि कमार्ताता
महर्लोकं समाश्रिताः । ब्राह्मणैः क्षत्रियैर्वैश्यैर्धार्मिकैः सहितैः सुराः ॥ ५ ॥ तैस्तथ्यकारिभिर्युक्तैः श्रद्धावद्भिरदर्पितैः । वर्णाश्रमाणां धर्म्मेषु
श्रौतस्मार्त्तेषु संस्थितैः । विनिवृत्ताधिकारास्ते यावन्मन्वन्तरक्षयः ॥ ६ ॥ ऋषय ऊचुः ॥ महर्लोकेति यत्प्रोक्तं मातरिश्वंस्त्वया विभो ।
प्रतिलोके च कर्तव्यमनेकैः समधिष्ठिताः ॥ ७ ॥ यावन्तश्चैव ते लोका दह्यन्ते ये न ते प्रभो । एतन्नः कथय प्रीत्या त्वं हि वेत्थ यथा
तथम् ॥ ८ ॥ एवमुक्तस्ततो वायुर्मुनिभिर्विनयात्मभिः । प्रोवाच मधुरं वाक्यं यथातत्त्वेन तत्त्ववित् ॥ ९ ॥ वायुरुवाच ॥ चतुर्दशैव
स्थानानि वर्णितानि महर्षिभिः । लोकाख्यानि तु यानि स्युर्येषु तिष्ठन्ति मानवाः ॥ १० ॥ सप्त तेषु कृतान्याहुरकृतानि तु सप्त वै ।
भूराद्यस्तु सङ्ख्याताः सप्त लोकाः कृतास्त्विह ॥ ११ ॥ अकृतानि तु सप्तैव प्राकृतानि तु यानि वै । स्थानानि स्थानिभिः सार्द्धं कृतानि तु

निबन्धनम् ॥ १२ ॥ पृथिवी चान्तरिक्षं च दिव्यं यच्च महः स्मृतम् । स्थानान्येतानि चत्वारि स्मृतान्यावर्णकानि च ॥ १३ ॥ क्षयातिशययुक्तानि
तथा युक्तानि वक्ष्यते । यानि नैमित्तिकानि स्युस्तिष्ठन्त्याभूतसंप्लवम् ॥ १४ ॥ जनस्तपश्च सत्यञ्च स्थानान्येतानि त्रीणि तु । ऐकान्तिकानि सत्त्वानि
तिष्ठन्तीहाप्रसंयमात् ॥ १५ ॥ व्यक्तानि तु प्रवक्ष्यामि स्थानान्येतानि सप्त वै । भूर्लोकः प्रथमस्तेषां द्वितीयस्तु भुवः स्मृतः ॥ १६ ॥ स्वस्तृतीयस्तु
विज्ञेयश्चतुर्थो वै महः स्मृतः । जनस्तु पञ्चमो लोकस्तपः षष्ठो विभाव्यते ॥ १७ ॥ सत्यन्तु सप्तमो लोको निरालोकस्ततः परम् । भूरिति व्याहृते
पूर्वं भूर्लोकश्च ततोऽभवत् ॥ १८ ॥ द्वितीयं भुव इत्युक्त अन्तरिक्षं ततोऽभवत् । तृतीयं स्वरितीत्युक्ते दिवं प्रादुर्बभूव ह ॥ १९ ॥ व्याहारैस्त्रिभिरे
तैस्तु ब्रह्मलोकमकल्पयत् । ततो भूः पार्थिवो लोक अन्तरिक्षं भुवः स्मृतम् ॥ २० ॥ स्वर्लोको वै दिवं ह्येतत्पुराणे निश्चयं गतम् । भूतस्याधिपति
श्चाग्निस्ततो भूतपतिः स्मृतः ॥ २१ ॥ वायुर्भुवस्याधिस्पतिस्तेन वायुर्भुवपतिः । भव्यस्य सूर्योऽधिपतिस्तेन सूर्यो दिवस्पतिः ॥ २२ ॥ महेति
व्याहृतेनैवं महर्लोकस्ततोऽभवत् । विनिवृत्ताधिकाराणां देवानां तत्र वै क्षयः ॥ २३ ॥ जनस्तु पञ्चमो लोकस्तस्माज्जायन्ति वै जनाः । तासां स्वायं
भुवाद्यानां प्रजानां जननाज्जनः ॥ २४ ॥ यास्ताः स्वायम्भुवाद्या हि पुरस्तात्परिकीर्त्तिताः । कल्पदग्धे तदा लोके प्रतिष्ठन्ति तदा तपः ॥ २५ ॥
ऋभुः सनत्कुमाराद्या यत्र सन्त्यूर्द्ध्वरेतसः । तपसा भावितात्मानस्तत्र सन्तीति वा तपः ॥ २६ ॥ सत्येति ब्रह्मणः शब्दः सत्तामात्रस्तु
सः स्मृतः । ब्रह्मलोकस्ततः सत्यं सप्तमः स तु भास्करः ॥ २७ ॥ गन्धर्वाप्सरसो यक्षा गुह्यकास्तु सराक्षसाः । सर्वभूतपिशाचाश्च नागाश्च
सह मानुषैः । स्वर्लोकवासिनः सर्वे देवा भुविनिवासिनः ॥ २८ ॥ मरुतो मातरिश्वानो रुद्रा देवास्तथाश्विनौ । अनिकेतान्तरिक्षास्ते
भुवर्लोक्या दिवौकसः ॥ २९ ॥ आदित्या ऋभवो विश्वे साध्याश्च पितरस्तथा । ऋषयोऽङ्गिरसश्चैव भुवर्लोकं समाश्रिताः ॥ ३० ॥
एते वैमानिका देवास्ताराग्रहनिवासिनः । इत्येते क्रमशः प्रोक्ता ब्रह्मव्याहारसम्भवाः ॥ ३१ ॥ भूर्लोकप्रथमा लोका महदन्ताश्च ते स्मृताः ।
आरभ्यन्ते तु तन्मात्रैः शुद्धास्तेषां परस्परम् ॥ ३२ ॥ शुक्राद्याश्चाक्षुषान्ताश्च ये व्यतीता भुवं श्रिताः । महर्लोकश्चतुर्थस्तु तस्मिंस्ते
कल्पवासिनः ॥ ३३ ॥ भूर्लोकप्रथमा लोका महदन्ताश्च ये स्मृताः । तान् सर्वान् सप्त सूर्यास्ते अर्चिर्भिर्निर्दहन्ति वै ॥ ३४ ॥ मरीचिः
कश्यपो दक्षस्तथा स्वायम्भुवोऽङ्गिराः । भृगुः पुलस्त्यः पुलहः क्रतुरित्येवमादयः ॥ ३५ ॥ प्रजानां पतयः सर्वे वर्त्तन्ते तत्र तैः सह । निःसत्त्वा
निर्ममाश्चैव तत्र ते चोर्द्ध्वरेतसः ॥

सर्वेषां पुनरावृत्तिहेतवः ॥ ३७ ॥ योगं तपश्च सत्यञ्च समाधाय तदात्मनि । षष्ठे काले निवर्त्तन्ते तत्तदाहार्विपर्यये ॥ ३८ ॥ सत्यन्तु सप्तमो लोको ह्यपुनर्मार्गगामिनाम् । ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः॥३९॥ पर्यासपारिमाण्येन भूर्लोकः समितिः स्मृतः। भूम्यन्तरं यदादित्यादन्तरिक्षं भुवः स्मृतम् ॥ ४० ॥ सूर्यध्रुवान्तरं यच्च स्वर्गलोको दिवः स्मृतः। ध्रुवाज्जनान्तरं यच्च महर्लोकस्तदुच्यते ॥ ४१ ॥ विख्याताः सप्तलोकास्तु तेषां वक्ष्यामि सिद्धयः। भूर्लोकवासिनः सर्वे ह्यन्नादास्तु रसात्मकाः ॥ ४२ ॥ भुवे स्वर्गे च ये सर्वे सोमपा आज्यपाश्च ते। चतुर्थे येऽपि वर्त्तन्ते मह र्लोकं समाश्रिताः ॥४३॥ विज्ञेया मानसी तेषां सिद्धिर्वै पञ्चलक्षणा। सद्यश्चोत्पद्यते तेषां मनसा सर्वमीप्सितम् ॥४४॥ एते देवा यजन्ते वै यज्ञैः सर्वैः पर स्परम्। अतीतान् वर्त्तमानांश्च वर्त्तमानाननागतान् ॥४५॥ प्रथमान्तैरिष्टा ह्यन्तराः साम्प्रतैः पुनः। निवर्त्ततीत्यासम्बन्धोऽतीते देवगणे ततः॥४६॥ विनिवृत्ताधिकाराणां सिद्धिस्तेषान्तु मानसी। तेषान्तु मानसी ज्ञेया शुद्धा सिद्धिपरम्परा ॥ ४७ ॥ उक्ता लोकाश्च चत्वारो जनस्यानुविधिस्तथा। समासेन मया विप्रा भूयस्तं वर्त्तयामि वः ॥ ४८ ॥ वायुरुवाच ॥ मरीचिः कश्यपो दक्षो वसिष्ठश्चाङ्गिरा भृगुः। पुलस्त्यः पुलहश्चैव क्रतुरित्येवमादयः ॥ ४९ ॥ पूर्वं ते संप्रसूयन्ते ब्रह्मणो मनसा इह। ततः प्रजाः प्रतिष्ठाप्य जनमेवाश्रयन्ति ते ॥ ५० ॥ कल्पदाहप्रदीप्तेषु तदा कालेषु तेषु वै। भूरादिषु महान्तेषु भृशं व्याप्तेष्वथाग्निना ॥ ५१ ॥ शिखा संवर्त्तका ज्ञेया प्राप्नुवन्ति सदा जनाः। यामादयो गणाः सर्वे महर्लोकनिवासिनः ॥ ५२ ॥ महर्लोकेषु दीप्तेषु जनमेवाश्रयन्ति ते। सर्वे सूक्ष्मशरीरास्ते तत्रस्थास्तु भवन्ति ते ॥ ५३ ॥ तेषां ते तुल्यसामर्थ्यास्तुल्यमूर्त्तिधरास्तथा। जन लोके विवर्त्तन्ते यावत्संप्लवते जगत् ॥ ५४ ॥ व्युष्टायान्तु रजन्यां वै ब्रह्मणोऽव्यक्तयोनिनः। अहरादौ प्रसूयन्ते पूर्ववत्क्रमशस्त्विह ॥ ५५ ॥ स्वाय म्भुवादयः सर्वे मरीच्यन्तास्तु साधकाः। देवास्ते वै पुनस्तेषां जायन्ते निधनेष्विह ॥ ५६ ॥ यामादयः क्रमेणैव कनिष्ठाद्याः प्रजापतेः। पूर्वं पूर्वे प्रसूयन्ते पश्चिमे पश्चिमास्तथा। देवान्वये देवता हि सप्त सम्भूतयः स्मृताः। व्यतीताः कल्पजास्तेषां तिस्रः शिष्टास्तथा परे ॥ ५८ ॥ आवर्त्तमाना देवास्ते क्रमेणैते न सर्वशः। गत्वा जवन्तवीभावन्दशकृत्वः पुनः पुनः ॥ ५९ ॥ ततस्ते वै गणाः सर्वे दृष्ट्वा भावेष्वनित्यताम्। भाविनोऽर्थस्य च बलात् पुण्याख्यातिबलेन च ॥ ६० ॥ निवृत्तवृत्तयः सर्वे स्वस्थाः सुमनसस्तथा। वैराजे तूपपद्यन्ते लोकमुत्सृज्य तज्जनम् ॥ ६१ ॥ ततोऽन्येनैव कालेन नित्ययुक्तास्तपस्विनः। कथनाच्चैव धर्मस्य तेषां ते जज्ञिरेऽन्वये ॥ ६२ ॥ इहोत्पन्ना स्ततस्ते वै स्थाना आपूरयन्त्युत। देवत्वे च ऋषित्वे च मनुष्यत्वे च सर्वशः ॥ ६३ ॥ एवं देवगणाः सर्वे दशकृत्वो निवर्त्य वै।

वैराजेषूपपन्नास्ते दश तिष्ठन्त्युपप्लवान् ॥ ६४ ॥ पूर्णे पूर्णे ततः कल्पे स्थित्वा वैराजके पुनः । ब्रह्मलोके विवर्त्तते पूर्व्वपूर्व्वक्रमेण तु ॥ ६५ ॥
एतस्मिन् ब्रह्मलोके तु कल्पे वैराजके गते । वैराजं पुनरप्येके कल्पस्थानमकल्पयन् ॥ ६६ ॥ एवं पूर्व्वानुपूर्व्येण ब्रह्मलोकगतेन वै ।
एवं तेषु व्यतीतेषु तपसा परिकल्पिते । वैराजे तूपपद्यन्ते दशकृत्वो निवर्त्तते ॥ ६७ ॥ एवं देवयुगानीह व्यतीतानि सहस्रशः ।
निधनं ब्रह्मलोके तु गतानामृषिभिः सह ॥ ६८ ॥ सूत उवाच ॥ न शक्यमानुपूर्वेण तेषां वक्तुं प्रविस्तरम् । अनादित्वाच्च कालस्य ह्यसं
ख्यानाच्च सर्वशः । एवमेव न सन्देहो यथावत्कथितं मया ॥ ६९ ॥ तदुपश्रुत्य वाक्यार्थमृषयः संशयान्विताः । सूतमाहुः पुराणज्ञं व्यासशिष्यं महा
मतिम् ॥ ७० ॥ ऋषय ऊचुः ॥ वैराजास्ते यदाहारा यत्सत्त्वाश्च यदाश्रयाः । तिष्ठन्ति चैव यत्कालं तन्नो ब्रूहि यथातथम् ॥ ७१ ॥
तदुक्तमृषिभिर्वाक्यं श्रुत्वा लोकार्थतत्त्ववित् । सूतः पौराणिको वाक्यं विनयेनेदमब्रवीत् ॥ ७२ ॥ ततः प्राप्यन्त ते सर्व्वे शुद्धिशुद्धतमाश्च ये । आभूत
संप्लवास्तत्र दश तिष्ठन्ति ते जनाः ॥ ७३ ॥ सर्वे सूक्ष्मशरीरास्ते विद्वांसो घनमूर्त्तयः । स्थितलोकास्थितत्वाच्च तेषां भूतं न विद्यते ॥ ७४ ॥
ऊचुः सनत्कुमाराद्याः सिद्धास्ते योगधर्मिणः । ख्यातिं नैमित्तिकीं तेषां पर्य्याये समुपस्थिते ॥ ७५ ॥ स्थानत्यागे मनश्चापि युगपत्संप्रवर्त्तते ।
ऊचुः सर्व्वे तदान्योऽन्यं वैराजाश्शुद्धबुद्धयः ॥ ७६ ॥ एवमेव महाभागाः प्रणवं सम्प्रविश्य ह । ब्रह्मलोके प्रवर्त्तानस्ततः श्रेयो भविष्यति ॥ ७७ ॥
एवमुक्त्वा तदा सर्वे ब्रह्मान्ते व्यवसायिनः । योजयित्वा तदा सर्व्वे वर्त्तन्ते योगधर्म्मिणः ॥ ७८ ॥ तत्रैव सम्प्रलीयन्ते शान्ता दीपार्चिषो यथा ।
ब्रह्मकायमवर्त्तन्त पुनरावृत्तिदुर्ल्लभम् ॥ ७९ ॥ लोकं तं समनुप्राप्य सर्व्वे ते भावनामयम् । आनन्दं ब्रह्मणः प्राप्य ह्यमृतत्वाय ते गताः ॥ ८० ॥
वैराजेभ्यस्तथैवोर्द्धमन्तरे षड्गुणे ततः । ब्रह्मलोकः समाख्यातो यत्र ब्रह्मा पुरोहितः ॥ ८१ ॥ ते सर्वे प्रणवात्मानो बुद्धशुद्धतपास्तथा । आनन्दं
ब्रह्मणः प्राप्यामृतत्वञ्च भजन्त्युत ॥ ८२ ॥ द्वन्द्वैस्ते नाभिभूयन्ते भावत्रयविवर्जिताः । आधिपत्यं विना तुल्या ब्रह्मणस्ते महौजसः ॥ ८३ ॥
प्रभावविजयैश्वर्य्यस्थितिवैराग्यदर्शनैः । ते ब्रह्मलौकिकाः सर्वे गतिं प्राप्य विवर्त्तनीम् ॥ ८४ ॥ ब्रह्मणा सह देवैश्च सम्प्राप्ते प्रतिसञ्चरे ।
तपसोऽन्ते क्रियात्मानो वृद्धावस्था मनीषिणः । अव्यक्ते संप्रलीयन्ते सर्वे ते क्षणदर्शिनः ॥ ८५ ॥ इत्येतदमृतं शुक्रं नित्यमक्षयमव्ययम् ।
देवर्षयो ब्रह्मसत्रं सनातनमुपासते ॥ ८६ ॥ अपुनर्मार्गगादीनां तेषां चैवोर्द्धरेतसाम् । कर्माभ्यासकृता शुद्धिर्वेदान्तेषूपलक्ष्यते ॥ ८७ ॥
तत्र तेऽभ्यासिनो युक्ताः परां काष्ठामुपासते । हित्वा शरीरं पाप्मानममृतत्वाय ते गताः ॥ ८८ ॥ वीतरागा जितक्रोधाः निर्मोहाः सत्यवादिनः ।

शान्ताः प्रणिहितात्मानो दयावन्तो जितेन्द्रियाः ॥ ८९ ॥ निःसङ्गाः शुचयश्चैव ब्रह्मसायुज्यगाः स्मृताः । अकामयुक्तैर्ये वीरास्तपोभिर्दग्धकि
ल्बिषाः । तेषामभ्रंशिनो लोका अप्रमेयसुखाः स्मृताः ॥ ९० ॥ एतद्ब्रह्मपदं दिव्यं परमं व्योम्नि भास्वरम् । गत्वा न यत्र शोचन्ति ह्यमरा
ब्रह्मणा सह ॥ ९१ ॥ ऋषय ऊचुः ॥ कस्मादेष परार्द्धश्च कश्चैष पर उच्यते । एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम ॥ ९२ ॥ सूत
उवाच ॥ शृणुध्वं मे परार्द्धश्च परिसंख्यां परस्य च । एकं दश शतञ्चैव सहस्रञ्चैव सङ्ख्यया ॥ ९३ ॥ विज्ञेयमासहस्रन्तु सहस्राणि दशायुतम् ।
एकं शतसहस्रन्तु नियुतं प्रोच्यते बुधैः ॥ ९४ ॥ तथा शतसहस्राणामर्बुदं कोटिरुच्यते । अर्बुदं दशकोटयस्तु ह्यब्जं कोटिशतं विदुः ॥ ९५ ॥
सहस्रमपि कोटीनां खर्वमाहुर्मनीषिणः । दशकोटिसहस्राणि निखर्वमिति तं विदुः ॥ ९६ ॥ शतं कोटिसहस्राणां शङ्कुरित्यभिधीयते । सहस्रन्तु सह
स्राणां कोटीनां दशधा पुनः । गुणितानि समुद्रं वै प्राहुः संख्याविदो जनाः ॥ ९७ ॥ कोटीनां सहस्रमयुतमित्ययं मध्य उच्यते । कोटि सहस्र
नियुता स चान्त इति संज्ञितः ॥ ९८ ॥ कोटिकोटिसहस्राणि परार्द्ध इति कीर्त्यते । परार्द्धद्विगुणञ्चापि परमाहुर्मनीषिणः ॥९९॥ शतमाहुः परिवृढं सहस्रं
परिपद्मकम् । विज्ञेयमयुतं तस्मान्नियुतं प्रयुतं ततः ॥१००॥ अर्बुदं निर्बुदञ्चैव खर्बुदश्च ततः स्मृतम् । खर्वञ्चैव निखर्वञ्च शङ्कुः पद्मं तथैव च ॥ १०१ ॥
समुद्रं मध्यमञ्चैव परार्द्धमपरं ततः । एवमष्टादशैतानि स्थानानि गणनाविधौ ॥ १०२ ॥ शतानीति विजानीयात् संज्ञितानि महर्षिभिः । कल्पसंख्या प्रवृ
त्तस्य परार्द्धं ब्रह्मणः स्मृतम् ॥१०३॥ तावच्छेषोऽपि कालोऽस्य तस्यान्ते प्रतिसृज्यते । पर एष परार्द्धश्च संख्यातः संख्यया मया ॥१०४॥ यस्मादस्य परं
वीर्यं परमायुः परन्तपः । परा शक्तिः परो धर्म्मः परा विद्या परा धृतिः ॥१०५॥ परं ब्रह्म परं ज्ञानं परमैश्वर्यमेव च । तस्मात्परतरं भूतं ब्रह्मणोऽन्यन्न विद्य
ते ॥१०६॥ परे स्थितो ह्येष परः सर्वार्थेषु ततः परः । संख्यातस्तु परो ब्रह्मा तस्यार्द्धं तु परार्द्धता ॥१०७॥ संख्येयं चाप्यसंख्येयं सततं चापि तं त्रिकम् ।
संख्येयं संख्यया दृष्टमपारार्द्धाद्विभाष्यते ॥१०८॥ राशौ दृष्टे न संख्याऽस्ति तदसंख्यस्य लक्षणम् । आनन्त्यं सिकताख्येषु दृष्टवान् पञ्चलक्षणम् ॥१०९॥
ईश्वरैस्तत्प्रसंख्यातं शुद्धत्वाद्दिव्यदृष्टिभिः । एवं ज्ञानप्रतिष्ठत्वात् सर्वं ब्रह्मानुपश्यति ॥ ११० ॥ एतच्छ्रुत्वा तु ते सर्वे नैमिषेयास्तपस्विनः ।
बाष्पपर्य्याकुलाक्षास्तु प्रहर्षाद्गद्गदस्वराः ॥ १११ ॥ पप्रच्छुर्मातरिश्वानं सर्वे ते ब्रह्मवादिनः । ब्रह्मलोकस्तु भगवन् यावन्मात्रान्तरः प्रभो ॥ ११२॥
योजनाग्रेण संख्यातः साधनं योजनस्य तु । क्रोशस्य च परीमाणं श्रोतुमिच्छामि तत्त्वतः ॥ ११३ ॥ तेषां तद्वचनं श्रुत्वा मातरिश्वा विनीतवाक् ।
उवाच मधुरं वाक्यं यथादृष्टं यथाक्रमम् ॥ ११४ ॥ वायुरुवाच ॥ एतद्वोऽहं प्रवक्ष्यामि शृणुध्वं मे विवक्षितम् । अव्यक्ताव्यक्तभागो वै महा

स्थूलो विभाव्यते ॥११५॥ दशैव महतो भागा भूतादिः स्थूल उच्यते। दशभागाधिकं चापि भूतादिः परमाणुकः ॥११६॥ परमाणुः सुसूक्ष्मस्
भावग्राह्यो न चक्षुषा। यदभेद्यतमं लोके विज्ञेयं परमाणु तत् ॥ ११७ ॥ जालान्तरगतं भानोर्यत्सूक्ष्मं दृश्यते रजः। प्रथमं तत्प्रमाणानां परमा
प्रचक्षते ॥ ११८ ॥ अष्टानां परमाणूनां समवायो यदा भवेत्। त्रसरेणुः समाख्यातस्तत्पद्मरज उच्यते ॥ ११९ ॥ त्रसरेणवश्च येऽप्यष्टौ रथरेणुस्तु
स्मृतः। तेऽप्यष्टौ समवायस्था वालाग्रं तत्स्मृतं बुधैः ॥१२०॥ वालाग्राण्यष्ट लिक्षा स्याद्यूका तच्चाष्टकं भवेत्। यूकाष्टकं यवं प्राहुरङ्गुलन्तु यवाष्टक
॥ १२१ ॥ द्वादशाङ्गुलपर्व्वाणि वितस्तिस्थानमुच्यते। रत्निश्चाङ्गुलपर्वाणि विज्ञेयो ह्येकविंशतिः ॥ १२२ ॥ चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुला
तु। किष्कुर्द्विरत्निर्विज्ञेयो द्विचत्वारिंशदङ्गुलः ॥१२३॥ षण्णवत्यङ्गुलश्चैव धनुराहुर्मनीषिणः। एतद्गव्यूतिसंख्यायां पादानां धनुषः स्मृतः ॥ १२४
धनुर्दण्डो युगं नाली तुल्यान्येतान्यथाङ्गुलैः। धनुषस्त्रिशतं नल्वमाहुः संख्याविदो जनाः ॥ १२५ ॥ धनुःसहस्रे द्वे चापि गव्यूतिरुपदिश्यते। आ
धनुःसहस्राणि योजनन्तु विधीयते ॥ १२६ ॥ एतेन धनुषा चैव योजनं तु समाप्यते। एतत्सहस्रं विज्ञेयं शक्रक्रोशान्तरन्तथा ॥ १२७ ॥ योज
नान्तु संख्यातं संख्याज्ञानविशारदैः। एतेन योजनाग्रेण शृणुध्वं ब्रह्मणोऽन्तरम् ॥१२८॥ महीतलात्सहस्राणां शतादूर्द्ध्वं दिवाकरः। दिवाकरात्सहस्रे
तावदूर्द्ध्वं निशाकरः ॥ १२९ ॥ पूर्णं शतसहस्रन्तु योजनानां निशाकरात्। नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते ॥ १३० ॥ शतं सह
संख्यातो मेरुर्द्विगुणितं पुनः। ग्रहान्तरमथैकैकमूर्द्ध्वं नक्षत्रमण्डलात् ॥ १३१ ॥ ताराग्रहाणां सर्व्वेषामधस्ताच्चरते बुधः। तस्योर्द्ध्वं चरते शुक्रस्तस्
मूर्द्ध्वं च लोहितः ॥ १३२ ॥ ततो बृहस्पतिश्चोर्द्ध्वं तस्मादूर्द्ध्वं शनैश्चरः। ऊर्द्ध्वं शतसहस्रन्तु योजनानां शनैश्चरात् ॥ १३३ ॥ सप्तर्षिमण्ड
कृत्स्नमुपरिष्टात्प्रकाशते। ऋषिभिस्तु सहस्राणां शतादूर्द्ध्वं विभाव्यते ॥ १३४ ॥ योऽसौ तारामये दिव्ये विमाने ह्रस्वरूपके। उत्तानपादपुत्रोऽ
मेढिभूतो ध्रुवो दिवि ॥ १३५ ॥ त्रैलोक्यस्यैष उत्सेधो व्याख्यातो योजनैर्मया। मन्वन्तरेषु देवानामिज्या यत्रैष लौकिकी ॥ १३६ ॥ वर्णा
मेभ्य इज्या तु लोकेऽस्मिन्या प्रवर्त्तते। सर्वेषां देवयोनीनां स्थितिहेतुः स वै स्मृतः ॥ १३७ ॥ त्रैलोक्यमेतद्व्याख्यातमत ऊर्द्ध्वं निबोधत। ध्रु
मूर्द्ध्वं महर्लोको यस्मिंस्ते कल्पवासिनः। एकयोजनकोटी सा इत्येवं निश्चयं गतम् ॥ १३८ ॥ द्वे कोट्यौ तु महर्लोकाद्यस्मिंस्ते कल्पवासिन
यत्र ते ब्रह्मणः पुत्रा दक्षाद्याः साधकाः स्मृताः ॥ १३९ ॥ चतुर्गुणोत्तरादूर्द्ध्वं जनलोकात्तपः स्मृतम्। वैराजा यत्र ते देवा भूतदाहविवर्जिताः ॥१४०
षड्गुणन्तु तपोलोकात्सत्यलोकान्तरं स्मृतम्। अपुनर्मारकामानां ब्रह्मलोकः स उच्यते ॥ १४१ ॥ यस्मान्न च्यवते भूयो ब्रह्माणं स उपासते

एककोटिर्योजनानां पञ्चाशन्नियुतानि तु ॥१४२॥ ऊर्द्धं भागस्ततोऽण्डस्य ब्रह्मलोकात्परः स्मृतः । चतुरश्चैव कोट्यस्तु नियुताः पञ्चषष्टि च ॥१४३॥
एषोऽर्द्धांशप्रचारोऽस्य गत्यन्तश्चापरः स्मृतः । ध्रुवाग्रमेतद्व्याख्यातं योजनाग्राद्यथाश्रुतम् ॥ १४४ ॥ अधोगतीनां वक्ष्यामि भूतानां स्थानकल्पनाम् ।
गच्छन्ति घोरकर्म्माणः प्राणिनो यत्र कर्म्मभिः ॥ १४५ ॥ नरको रौरवो रोधः सूकरस्ताल एव च । तप्तकुम्भो महाज्वालः शबलोऽथ विमोचनः
। १४६ ॥ कृमी च कृमिभक्षश्च लालाभक्षो विशंसनः । अधःशिराः पूयवहो रुधिरान्धस्तथैव च ॥ १४७ ॥ तथा वैतरणं कृष्णमसिपत्रवनं तथा ।
ग्निज्वालो महाघोरः संदंशोऽथ श्वभोजनः ॥ १४८ ॥ तमश्च कृष्णसूत्रश्च लोहश्चाप्यसिजस्तथा । अप्रतिष्ठोऽथ वीच्यश्च नरका ह्येवमादयः ॥१४९॥
ामसा नरकाः सर्वे यमस्य विषये स्थिताः । येषु दुष्कृतकर्माणः पतन्तीह पृथक्पृथक् ॥ १५० ॥ भूमेरधस्तात्ते सर्वे रौरवाद्याः प्रकीर्त्तिताः ।
रवे कूटसाक्षी तु मिथ्या यश्चाभिशंसति । क्रूरग्रहे पक्षवादी ह्यसत्यः पतते नरः ॥ १५१ ॥ रोधे गोघ्नो भ्रूणहा च ह्यग्निदाता पुरस्य च । सूकरे
ह्महा मज्जेत्सुरापः स्वर्णतस्करः ॥ १५२ ॥ ताले पतेत्क्षत्रियहा हत्वा वैश्यञ्च दुर्गतिम् । ब्रह्महत्याञ्च यः कुर्याद्यश्च स्याद्गुरुतल्पगः ॥ १५३ ॥
सकुम्भी स्वसागामी तथा राजभटश्च यः । तप्तलोहे चाश्ववणिक्तथा बन्धनरक्षिता ॥ १५४ ॥ साध्वीविक्रयकर्त्ता च यस्तु भक्तं परि
पजेत् । महाज्वाले दुहितरं स्नुषां गच्छति यस्तु वै ॥ १५५ ॥ वेदो विक्रीयते येन वेदं दूषयते च यः । गुरूंश्चैवावमन्यन्ते वाक्क्रोशैस्ता
यन्ति च ॥ १५६ ॥ अगम्यगामी च नरो नरकं शबलं व्रजेत् । विमोहे पतिते चौरे मर्यादां यो भिनत्ति वै ॥ १५७ ॥ दुरघ्नं कुरुते यस्तु
ीटलोहं प्रपद्यते । देवब्राह्मणविद्वेष्टा गुरूणाश्चाप्यपूजकः । रत्नं दूषयते यस्तु कृमिभक्ष्यं प्रपद्यते ॥ १५८ ॥ पर्य्यश्नाति य एकोऽन्यो
ाह्मणीं सुहृदः सुताम् । लालाभक्षे स पतति दुर्गन्धे नरके गतः ॥ १५९ ॥ काण्डकर्त्ता कुलालश्च निष्कहर्त्ता चिकित्सकः । आरा
म्याग्निदाता यः पतते स विशंसने ॥ १६० ॥ असत्प्रतिग्रही यश्च तथैवायाज्ययाजकः । नक्षत्रैर्जीवितो यश्च नरो गच्छत्यधोमुखम् ॥ १६१ ॥
ीरं सुरां च मांसं च लाक्षां गन्धं रसन्तिलान् । एवमादीनि विक्रीणन्घोरे पूयवहे पतेत् ॥ १६२ ॥ यः कुक्कुटानि बध्नाति मार्जारान्सूकरांश्च
ान् । पक्षिणश्च मृगाञ्छागान्सोऽप्येनं नरकं व्रजेत् ॥ १६३ ॥ आजीविको माहिषकस्तथा चक्रध्वजी च यः । रङ्गोपजीविको विप्रः शाकुनिग्राम ॥१८७॥
जकः ॥ १६४ ॥ अगारदाही गरदः कुण्डाशी सोमविक्रयी । सुरापो मांसभक्षश्च तथा च पशुघातकः ॥ १६५ ॥ विश (श्व) स्ता महिषादीनां मृग
ता तथैव च । पर्वकारश्च सूची च यश्च स्यान्मित्रघातकः । रुधिरान्धे पतन्त्येते एवमाहुर्मनीषिणः ॥ १६६ ॥ उपविष्टमेकपङ्क्त्यां विषमं भोजयन्ति

। पतन्ति नरके घोरे विड्भुजे नात्र संशयः॥१६७॥मृषावादी नरो यश्च तथा प्राक्रोशकोऽशुभः। पतेत्तु नरके घोरे मूत्राकीर्णे स पापकृत् ॥ १६८ ॥
ग्राहाभिहन्तारो यान्ति वैतरणीं नराः। उन्मत्ताश्चित्तभग्नाश्च शौचाचारविवर्जिताः ॥ १६९ ॥ क्रोधना दुःखदाश्चैव कुहकाः कृष्णगामिनः । असि
वने छेदी तथा ह्यौरभ्रिकाश्च ये। कर्त्तनैश्च विकृष्यन्ते मृगव्याधाः सुदारुणैः ॥ १७० ॥ आश्रमप्रत्यवसिता अग्निज्वाले पतन्ति वै। भोज्यन्ते श्याम
लैरयस्तुण्डैश्च वायसैः ॥ १७१ ॥ इज्यायां व्रतमालोपात्सन्दंशे नरके पतेत्। स्कन्दन्ते यदि वा स्वप्ने व्रतिनो ब्रह्मचारिणः ॥ १७२ ॥ पुत्रैर
पिता ये च पुत्रैराज्ञापिताश्च ये। ते सर्वे नरकं यान्ति नियतन्तु श्वभोजने ॥१७३॥ वर्णाश्रमविरुद्धानि क्रोधहर्षसमन्विताः। कर्माणि ये तु कुर्वन्ति
निरयगामिनः ॥ १७४ ॥ उपरिष्टात्स्थितो घोर उष्णात्मा रौरवो महान्। सुदारुणस्तु शीतात्मा तस्याधस्तात्तपः स्मृतः॥ १७५ ॥ एवमादि
णैव वर्ण्यमानान्निबोधत। भूमेरधस्तात्सप्तैव नरकाः परिकीर्तिताः ॥ १७६ ॥ अधर्मसूनवस्ते स्युरन्धतामिस्रकादयः । रौरवः प्रथमस्तेषां महा
व एव च ॥ १७७ ॥ अस्याधः पुनरप्यन्यः शीतस्तप इति स्मृतः। तृतीयः कालसूत्रः स्यान्महाहाविविधिः स्मृतः ॥ १७८ ॥ अप्रतिष्ठ
र्थः स्यादवीची पञ्चमः स्मृतः। लोहपृष्ठस्तमस्तेषामविधेयस्तु सप्तमः ॥ १७९ ॥ घोरत्वाद्रौरवः प्रोक्तः साम्भको दहनः स्मृतः। सुदारुणस्तु
ात्मा तस्याधस्तात्तपोऽधमः ॥ १८० ॥ सर्पो निकृन्तनः प्रोक्तः कालसूत्रेति दारुणः। अप्रतिष्ठे स्थितिर्नास्ति भ्रमस्तस्मिन्सुदारुणः ॥ १८१ ॥
चिर्दारुणः प्रोक्तो यन्त्रसंपीडनाच्च सः। तस्मात्सुदारुणो लोहः कर्म्मणां क्षयणाच्च सः ॥ १८२ ॥ तथाभूतो शरीरत्वादत्रिधिभ्यस्तु स स्मृतः।
बन्धवधासङ्गादप्रतीकारलक्षणः ॥ १८३ ॥ ऊर्द्ध्वं शैलमितास्ते तु निरालोकाश्च ते स्मृताः। दुःखोत्कर्षस्तु सर्वेषु ह्यधर्मस्य निमित्ततः ॥ १८४ ॥
लोकैः समावेतौ निरालोकौ च तावुभौ। कूटाङ्गारप्रमाणैश्च शरीरी मूत्रनायकः ॥ १८५ ॥ उपभोगसमर्थैस्तु सद्यो जायन्ति कर्मभिः। दुःख
पंश्चोग्रत्वं तेषु सर्वेषु वै स्मृतः ॥ १८६ ॥ यातनाश्चाप्यसंख्येया नारकाणां तथा स्मृताः। तत्रानुभूयते दुःखं क्षीणे कर्माणि वै पुनः ॥ १८७ ॥
ग्योनौ प्रसूयन्ते कर्मशेषे गते ततः। देवाश्च नारकाश्चैव ह्यूर्द्ध्वं चाधश्च संस्थिताः ॥ १८८ ॥ धर्माधर्मनिमित्तेन सद्यो जायन्ति मूर्त्तयः।
भोगार्थमुत्पत्तिरौपपत्तिककर्मतः ॥ १८९ ॥ पश्यन्ति नारकान्देवा ह्यधोवक्त्रान् ह्यधोगतान्। नारकाश्च तथा देवान् सर्वान्पश्यन्त्यधो
ान् ॥ १९० ॥ अनग्रमूलता यस्माद्धारणाश्च स्वभावतः। तस्मादूर्द्ध्वमधोभावो लोकालोके न विद्यते ॥ १९१ ॥ एषा स्वाभाविकी संज्ञा
कालोके प्रवर्त्तते । अथाब्रुवन्पुनर्वायुं ब्राह्मणाः सत्रिणस्तदा ॥ १९२ ॥ ऋषय ऊचुः ॥ सर्वेषामेव भूतानां लोकालोकनिवासिनाम्।

संसारे संसरन्तीह यावन्तः प्राणिनश्च तान् ॥ १९३ ॥ सङ्ख्यया परिसङ्ख्याय ततः प्रब्रूहि कृत्स्नशः । ऋषीणां तद्वचः श्रुत्वा मारुतो
वाक्यमब्रवीत् ॥ १९४ ॥ वायुरुवाच ॥ न शक्या जन्तवः कृत्स्नाः प्रसंख्यातुं कथञ्चन । अनाद्यन्ताश्च संकीर्णा प्रायूहेन व्यवस्थिताः ।
गणना विनिवृत्तैषामानन्त्येन प्रकीर्त्तिताः ॥ १९५ ॥ न दिव्यचक्षुषा ज्ञातुं शक्या ज्ञानेन वा पुनः । चक्षुषा वै प्रसंख्यातुमतो ब्रूमो नराधिपः
॥ १९६ ॥ अनाख्यानादवज्ञेयत्वाच्चैव प्रश्नो विधीयते । ब्रह्मणा संहितं यत्तु संख्यया तन्निबोधत ॥ १९७ ॥ यः सहस्रतमो भागः स्थावराणां भवे
दिह । पार्थिवाः कृमयस्तावत्संसेकाद्येषु सम्भवाः ॥ १९८ ॥ संसेकजानाम्भागेन सहस्रेणैव सम्मिताः । औदका जन्तवः सर्वे निश्चयात्तद्विचारितम्
॥ १९९ ॥ सहस्रेणैव भागेन सत्वानां सलिलौकसाम् । विहङ्गमास्तु विज्ञेया लौकिकास्ते च सर्वशः ॥ २०० ॥ यः सहस्रतमो भागस्तेषां वै पक्षिणां
भवेत् । पशवस्तत्समा ज्ञेया लौकिकास्तु चतुष्पदाः ॥ २०१ ॥ चतुष्पदानां सर्वेषां सहस्रेणैव संमताः । भागेन द्विपदा ज्ञेया लौकिकेऽस्मिंस्तु
सर्व्वशः ॥ २०२ ॥ यः सहस्रतमो भागो भागे तु द्विपदां पुनः । धार्म्मिकास्तेन भागेन विज्ञेयाः सम्मिताः पुनः ॥ २०३ ॥ सहस्रेणैव भागेन धार्म्मि
केभ्यो दिवङ्गताः । यः सहस्रतमो भागो धार्म्मिकाणां भवेद्दिवि । संमितास्तेन भागेन मोक्षिणस्तावदेव हि ॥ २०४ ॥ स्वर्गोपपादकैस्तुल्या यातना
स्थानवासिनः । पतिताश्चूर्णमुद्देशाद्दुरात्मानो म्रियन्ति ये । रौरवे तामसे ह्येते शीतोष्णं प्राप्नुवन्ति ते ॥ २०५ ॥ वेदनाकटुकास्तत्था यातना
स्थानमागताः । उष्णस्तु रौरवो ज्ञेयस्तेजो घोररसात्मकः ॥२०६॥ ततो घनात्मिकश्चापि शीतात्मा सततं तपः । एवं सुदुर्लभाः सन्तः स्वर्गे च धार्म्मिका
नराः ॥ २०७ ॥ एषा संख्या कृता संख्या ईश्वरेण स्वयम्भुवा । गणना विनिवृत्तैषा सङ्ख्या ब्राह्मी च मानुषी ॥ २०८ ॥ ऋषय ऊचुः ॥ महो
जनस्तपः सत्यं भूतो भाव्यो भवस्तथा । उक्ता ह्येते त्वया लोका लोकानामन्तरेण च । लोकान्तरञ्च यादृग्वै तन्नो ब्रूहि यथातथम् ॥ २०९ ॥ तेषां
तद्वचनं श्रुत्वा ऋषीणामूर्द्ध्वरेतसाम् । स वायुर्दृष्टतत्त्वार्थ इदन्तत्त्वमुवाच ह ॥ २१० ॥ वायुरुवाच ॥ व्यक्तं तर्केण पश्यन्ति योगात्प्रत्यक्षदर्शिनः ।
प्रत्याहारेण ध्यानेन तपसा च क्रियात्मनः ॥ २११ ॥ ऋभुः सनत्कुमाराद्याः सम्बुद्धाः शुद्धबुद्धयः । व्यपेतशोका विरजाः सन्तो ब्रह्मैवसत्तमाः
॥ २१२ ॥ अक्षयाः प्रीतिसंयुक्ता ब्रह्मे तिष्ठन्ति योगिनः । ऋषीणां वालखिल्यानां तैर्यथाहृतमीश्वरैः ॥ २१३ ॥ यथा चैव मया दृष्टं सान्निध्यन्तत्र
कुर्वता । अनह्यसत्कृतार्थानामालयं चेश्वरस्य यत् ॥ २१४ ॥ ईश्वरः परमाणुत्वाद्भावग्राह्यो मनीषिणाम् । ज्ञानं वैराग्यमैश्वर्यन्तपः सत्यं क्षमा धृतिः
॥ २१५ ॥ द्रष्टृत्वमात्मसम्बन्धमधिष्ठानत्वमेव च । अव्ययानि दशैतानि तस्मिंस्तिष्ठति शङ्करे ॥ २१६ ॥ विभुत्वात्सलु योगाभिर्म्मणोऽनुमरे

ः । स लोकविग्रहो भूत्वा साहाय्यमुपतिष्ठते ॥ २१७ ॥ अक्षरं ध्रुवमव्यग्रमष्टमन्त्वौपसर्गिकम् । तस्येश्वरस्य यन्मात्रस्थानं मायामयं पर
२१८ ॥ मायया कृतमाचष्टे मायी देवो महेश्वरः । देवानामुपसंहारस्तत्प्रमाणं हि कीर्त्यते ॥ २१९ ॥ विस्तरेणानुपूर्व्या च ब्रुवतो मे निबोधत
ोदशैव कोट्यस्तु नियुता दश पञ्च च । भूर्लोकाद्ब्रह्मलोको वै योजनैः सम्प्रकीर्त्यते ॥ २२० ॥ एकयोजनकोटी तु पञ्चाशन्नियुतानि च । ऊ
गवताण्डन्तु ब्रह्मलोकात्परं स्मृतम् ॥ २२१ ॥ एषोर्द्ध्वगप्रचारस्तु गत्यन्तश्च ततः स्मृतम् । नित्या ह्यपारिसंख्येयाः परस्परगुणाश्रयाः ॥ २२२
स्माः प्रसवधर्मिण्यस्ततः प्रकृतयः स्मृताः । येभ्योऽधिकर्त्ता संजज्ञे क्षेत्रज्ञो ब्रह्मसंज्ञितः ॥ २२३ ॥ तासु प्रकृतिमत्सूक्ष्ममाधिष्ठातृत्वमव्ययम्
तुत्पाद्यं परन्धाम परमाणु परेशयम् ॥ २२४ ॥ अक्षयश्चाप्यनुग्रश्च अमूर्त्तिर्मूर्त्तिमानसौ । प्रादुर्भावस्तिरोभावः स्थितिश्चैवाप्यनुग्रहः ॥ २२५
धिरन्यैरनौपम्यः परमाणुर्महेश्वरः । सतेजा एष तमसो यः परस्तात्प्रकाशकः ॥ २२६ ॥ यदण्डमासीत्सौवर्णं प्रथमन्त्वौपसर्गिकम्
तं सर्वतोवृत्तमीश्वराद्व्यवजायत ॥ २२७ ॥ ईश्वराद्बीजनिर्भेदः क्षेत्रज्ञो वीज इष्यते । योनिं प्रकृतिमाचष्टे सा च नारायणात्मिका ॥ २२८
भूर्लोकस्य सृष्ट्यर्थं लोकसंस्थानमेव च । सन्निसर्गः स तस्या च लोकधातुर्महात्मनः ॥ २२९ ॥ पुरस्ताद्ब्रह्मलोकस्य ह्यण्डादर्वाक्
णः । तयोर्मध्ये पुरं दिव्यं स्थानं यस्य मनोमयम् ॥ २३० ॥ तद्विग्रहवतः स्थानमीश्वरस्यामितौजसः । शिवं नाम पुरं त
र्णं जन्मभीरुणाम् ॥ २३१ ॥ सहस्राणां शतं पूर्णं योजनानां द्विजोत्तमाः । अभ्यन्तरे तु विस्तीर्णं महीमण्डलसंस्थितम् ॥ २३२
याह्नार्कप्रकाशेन परतेजोऽभिमर्दिना । शातकौम्भेन महता प्राकारेणार्कवर्चसा ॥ २३३ ॥ द्वारैश्चतुर्भिः सौवर्णैर्मुक्तादामविभूषितैः । तपनीयनिर्भ
भेर्गोर्ध सुकृतवेष्टनम् ॥ २३४ ॥ तस्याकाशे पुरं रम्यं दिव्यं घण्टादिनावितम् । न तत्र क्रमते मृत्युर्न तपो न जरा श्रमाः ॥ २३५ ॥ न
स्य पुरस्यान्येरुपमां कर्तुमर्हति । सहस्राणां शतं पूर्णं योजनानां विशो दश ॥२३६॥ तत्पुरं गोवृषाङ्कस्य तेजसा व्याप्य तिष्ठति । भावेन मनर
निर्विन्यस्ता कनकामयी ॥ २३७ ॥ रत्नवालुकया तत्र विन्यस्ता शुशुभेऽधिकम् । शारदेन्दुप्रकाशानि बालसूर्य्यनिभानि च ॥ २३८ ॥ अ
तार्द्धरक्तानि सौवर्णानि तथैव च । रथचक्रप्रमाणानि मालैर्मरकतप्रभैः ॥ २३९ ॥ सौकुमारेण रूपेण गन्धेनाप्रतिमेन च । तत्र दिव्या
ामि वनेषूपवनेषु च ॥ २४० ॥ भृङ्गपत्रनिकाशानि तपनीयानि यानि च । अर्द्धकृष्णार्द्धरक्तानि सुकुमारान्तराणि च ॥ २४१ ॥ आतप
माणानि पङ्कजैः संवृतानि च । भूयः सप्त महानद्यस्तासांनामानि बोधत ॥ २४२ ॥ वरा वरेण्या वरदा वरार्हा वरवर्णिनी । वरमा वरभद्रा

रम्यास्तस्मिन्पुरोत्तमे ॥ २४३ ॥ पद्मोत्पलदलोर्म्मिश्रं फेनाद्यावर्त्तविग्रहम् । जलं मणिदलप्रख्यमावहन्ति सरिद्वराः ॥ २४४ ॥ न तु ब्रह्मर्षयो देवा नासुराः पितरस्तथा । न खल्वन्येऽप्रमेयस्य विदुरीशस्य तत्पुरम् ॥ २४५ ॥ तत्र ये ध्यानमव्यग्राः सुयुक्ता विजितेन्द्रियाः । पश्यन्तीह महात्मानः पुरन्तद्वृषात्मनः ॥ २४६ ॥ मध्ये पुरवरेन्द्रस्य तस्याप्रतिमतेजसः । सुमहान्मेरुसङ्काशो दिव्यो भद्रश्रिया वृतः ॥ २४७ ॥ सहस्रपादः प्रासादस्तपनीयमयः शुभः । अनुपमेयै रत्नैश्च सर्वतः स विभूषितः ॥ २४८ ॥ स्फटिकैश्चन्द्रसङ्काशैर्वैदूर्यैः सोमसंप्रभैः । बालसूर्य्यप्रभैश्चैव सौवर्णैश्चाग्निसंप्रभैः ॥ २४९ ॥ राजतैश्चापि शुशुभे इन्द्रनीलमयैः शुभैः । दृढैर्वज्रमयैश्चैव इत्येवं सुमहार्हितैः ॥ २५० ॥ जलैश्च विविधाकारैर्दीप्यद्भिरधिवासितम् । चन्द्ररश्मिप्रकाशाभिः पताकाभिरलंकृतम् ॥ २५१ ॥ रुक्मघण्टानिनादैश्च नित्यप्रमुदितोत्सवः । किन्नराणामधीवासैः सन्ध्याभ्राकारराजितैः ॥ २५२ ॥ परिवारसमन्तात्तु हेमपुष्पोदकप्रभैः । यथा हि मेरुशैलेन्द्रो हेमशृङ्गैर्विराजते ॥ २५३ ॥ चामीकरमयीभिस्तु पताकाभिस्तथा पुरम् । एवं प्रासादराजोऽसौ भूमिकाभिर्विराजते ॥ २५४ ॥ वसन्तप्रतिमा यत्र त्र्यम्बकस्य निवेशने । लक्ष्मीः श्रीश्च वपुर्म्माया कीर्त्तिः शोभा सरस्वती ॥ २५५ ॥ देव्या वै सहिता ह्येता रूपगन्धसमन्विताः । नित्या ह्यपरिसङ्ख्याताः परस्परगुणाश्रयाः । भूषणं सर्वरत्नानां योन्यः कान्तिविलासयोः ॥ २५६ ॥ कोटिशतं महाभागा विभज्यात्मानमात्मना । भगवन्तं महात्मानं प्रतिमोदन्त्यतन्द्रिताः ॥ २५७ ॥ तासां सहस्रशश्चान्याः पृष्ठतः परिचारिकाः । रूपिण्यश्च श्रिया युक्ताः सर्वाः कमललोचनाः ॥ २५८ ॥ लीलाविलाससंयुक्तैर्भावैरतिमनोहरैः । गणैस्ताः सह मोदन्ते शैलाभैः पावकोपमैः ॥ २५९ ॥ कुब्जा वामनिकामैश्च वरगात्रा हयाननाः । पुण्ड्राश्च विकटाश्चैव करलाश्चिपिटाननाः ॥ २६० ॥ लम्बोदरा ह्रस्वभुजा विनेत्रा ह्रस्वपादिकाः । मृगेन्द्रवदनाश्चान्या गजवक्त्रोदरास्तथा ॥ २६१ ॥ गजाननास्तथैवान्याः सिंहव्याघ्राननास्तथा । लोहिताक्षा महास्तन्यः सुभगाश्चारुलोचनाः ॥ २६२ ॥ ह्रस्वकुञ्चितकेशाश्च सुन्दर्य्यश्चारुलोचनाः । अन्याश्च कामरूपिण्यो नानावेषधराः स्त्रियः ॥ २६३ ॥ अभ्यन्तरपरिस्कन्धा देवावासगृहोचिताः । रराम भगवांस्तत्र दशबाहुर्महेश्वरः ॥ २६४ ॥ नन्दिना च गणैः सार्द्धं विश्वरूपैर्महात्मभिः । तथा रुद्रगणैश्चापि तुल्यौदार्य्यपराक्रमैः ॥ २६५ ॥ पावकात्मजसङ्काशैर्यूपदंष्ट्रोत्कटाननैः । वन्द्यमानो विमानश्च पूज्यमानश्च तत्परैः ॥ २६६ ॥ सर्वर्तुकुसुमां मालां जिघ्रमाणोरसि स्थिताम् । नीलोत्पलदलश्यामं पृथुताम्रायतेक्षणम् ॥ २६७ ॥ ईषत्करालम्बोष्ठं तीक्ष्णदंष्ट्रागणाञ्चितम् । पद्मूर्द्धनेत्रं दुष्प्रेक्ष्यं रुचिरश्चीरवाससम् ॥ २६८ ॥ आहवेष्वपरिक्लिष्टं देवानामरिनाशनम् । बाहुना बाहुमावेश्य पार्श्वे सव्येऽन्तरे

ततम् ॥ २६९ ॥ रराजापदिशन्तस्य वामाग्रकरगोचरम् । महाभैरवनिर्घोषं बलेनाप्रतिमौजसम् । दशवर्णधनुश्चैव विचित्रं शोभतेऽधिकम् ॥२७०
शूलं विद्युताभासममोघं शत्रुनाशनम् । जाज्वल्यमानं वपुषा परमं तत्त्विषा युतम् ॥ २७१ ॥ असिश्चैवौजसां श्रेष्ठः शीतरश्मिः शशी तथा
सा वपुषा कान्त्या देवेशस्य महात्मनः । शुशुभेऽभ्यधिकं तत्र वेद्यामग्निशिखा इव ॥ २७२ ॥ स्थितः पुरस्ताद्देवस्य शातकौम्भमयो महान्
शुभे रुचिरः श्रीमान्सोदकः सकमण्डलुः ॥ २७३ ॥ असिमावेश्य चाङ्गेषु पाण्डुराम्बरधारिणी । उरश्छदेन महता मौक्तिकेन विराजिता
ग्रभुजा महाभागा विजया लोकसम्मता ॥ २७४ ॥ देव्या आद्यः प्रतीहारी श्रीरिवाप्रतिमा परा । विभ्राजती स्थिता चैव कृत्वा देवस्य चाञ्जलि
२७५ ॥ तस्याः पृष्ठानुगाश्चान्याः स्त्रियोऽप्सरोगणान्विताः । ताः खल्वभिनवैः कान्तैरुपतिष्ठन्ति शङ्करम् ॥ २७६ ॥ सर्वलक्षणसम्पन्ना वादि
बृंहिताः । उपगायन्ति देवेशं गणा गन्धर्वयोनयः ॥ २७७ ॥ अभ्युन्नतो महोरस्कः शरन्मेघसमद्युतिः । शोभते नन्दमानश्च गोपतिस्तत्र
मनि ॥ २७८ ॥ स्कन्दश्च सपरीवारः पुत्रोऽस्यामितवीर्य्यवान् । रक्ताम्बरधरः श्रीमान्वराम्बुजदलेक्षणः ॥ २७९ ॥ तस्य शाखो विशाखश्च नैगमे
चापवान् । व्यपेतव्यसनाक्रूराः प्रजानां पालने रताः ॥ २८० ॥ तैः सार्द्धं स महावीर्य्यः शोभते शिखिवाहनः । व्यालक्रीडनकैस्तत्र क्रीडा
धतोमुखः ॥ २८१ ॥ ये नृपा विबुधेन्द्राणां काञ्चनस्य प्रदायिनः । ये च स्वायतना विप्रा गृहस्था ब्रह्मवादिनः ॥ २८२ ॥ गूढस्वाध्या
सस्तथा चैवोञ्छवृत्तयः । एते सभासदस्तस्य देवेशस्य च सम्मताः ॥ २८३ ॥ मन्वन्तराण्यनेकानि व्यवर्त्तन्त पुनः पुनः । श्रूयत
देवस्य भविष्याश्चर्यमुत्तमम् ॥ २८४ ॥ व्याघ्राश्चैवानुगास्तत्र काञ्चनाभास्तरस्विनः । स्वच्छन्दचारिणः सर्वे स्वयं देवेन निर्मिताः ॥ २८५
योर्मृत्युसमास्ते तु यमदर्पापहारिणः । विभूतिमप्यसंख्येयां को न खल्वभिधास्यते ॥ २८६ ॥ अतःपरमिदं भूयो भवेनाद्भुतमुत्तमम्
नानामनुकंपार्थं यत्कृतं तन्निबोधत ॥ २८७ ॥ मन्दरादिप्रकाशानां बलेनाप्रतिमौजसाम् । हारकुन्देन्दुवर्णानां विद्युद्वदननिनादिनाम् ॥ २८८
डामणिधराणां वै मेघसन्निभवाससाम् । श्रीवत्साङ्कितवक्षाणामङ्कुलीशूलपाणिनाम् ॥ २८९ ॥ एवं दिशानां देवानां रूपेणोत्तमशालिनाम्
स्य प्रासादमुख्यस्य स्तम्भेपूत्तमशोभिषु ॥ २९० ॥ संयताग्निमयीभिस्तु शृङ्खलाभिः पृथक्पृथक् । मायासहस्रं सिंहानां सुखं त
वासिनाम् ॥ २९१ ॥ स्तम्भेऽप्युपासृताषष्टं त्र्यम्बकस्य निवेशने । अथ तत्प्रतिसंपूज्य वायोर्वाक्यं सुविस्मिताः । ऋषयः प्रत्यभाषन्त नैमि
स्तपास्विनः ॥ २९२ ॥ भगवन्सर्वभूतानां प्राण सर्वत्रग प्रभो । के ते सिंहमहाभूताः क्व ते जाताः किमात्मकाः ॥ २९३ ॥ सिंहाः केनापराधे

भूतानां प्रभविष्णुना । वैश्वानरमयैः पाशैः संरुद्धास्तु पृथक्पृथक् ॥ २९४ ॥ तेषां तद्वचनं श्रुत्वा वायुर्वाक्यं जगाद ह । यद्वै सहस्रं सिद्धानामीश्व
रेण महात्मना । व्यपनीय स्वकाद्देहात्क्रोधात्ते सिद्धविग्रहाः ॥ २९५ ॥ भूतानामभयं दत्त्वा पुरा बद्धाभिबन्धने । यज्ञभागनिमित्तं च ईश्वरस्याज्ञया
तदा ॥ २९६ ॥ तेषां विधानयुक्तेन सिद्धेनैकेन लीलया । देव्या मन्युं कृतं ज्ञात्वा हतो दक्षस्य स क्रतुः ॥ २९७ ॥ निःसृता च महादेव्या महाकाली
महेश्वरी । आत्मनः कर्म्मसाक्षिण्या भूतैः सार्द्धं तदानुगैः ॥ २९८ ॥ स एष भगवान्क्रोधो रुद्रावासकृतालयः । वीरभद्रोऽप्रमेयात्मा देव्या मन्युप्रमा
र्जनः ॥ २९९ ॥ तस्य वेश्म सुरेन्द्रस्य सर्वगुह्यतमस्य वै । सन्निवेशस्त्वनौपम्यो मया वः परिकीर्त्तितः ॥ ३०० ॥ अतः परं प्रवक्ष्यामि ये तत्र प्रति
वासिनः । रम्ये पुरवरश्रेष्ठे तस्मिन्वैहायभूमिषु ॥ ३०१ ॥ नानारत्नविचित्रेषु पताकाबहुलेषु च । सर्वकामसमृद्धेषु वनोपवनशोभिषु ॥ ३०२ ॥
राजतेषु महान्तेषु शातकौम्भमयेषु च । सन्ध्याभ्रसन्निकाशेषु कैलासप्रतिमेषु च ॥ ३०३ ॥ इष्टैः शब्दादिभिर्भोगैर्ये भवस्यानुसारिणः । प्रासादवर
पृष्ठेषु तेषु मोदन्ति सुव्रताः ॥३०४॥ ब्रह्मघोषैरविरताः कथाश्च विविधाः शुभाः । गीतवादित्रघोषाश्च संस्तवाश्च समन्ततः ॥३०५॥ संहताश्चैवमतुला
नानाश्रयकृतास्तथा । एवमादीनि वर्त्तन्ते तेषां प्रासादमूर्द्धनि ॥३०६॥ सहस्रपादः प्रासादस्तपनीयमयः शुभः । अनौपम्यैर्वरै रत्नैः सर्वतः परिभूषितः
॥ ३०७ ॥ स्फटिकैश्चन्द्रसङ्काशैर्वैदूर्यमणिसम्प्रभैः । बालसूर्यमयैश्चापि सौवर्णैश्चाग्निसम्प्रभैः ॥ ३०८ ॥ चुक्रुशुरृषयः श्रुत्वा नैमिषेयास्तपस्विनः ।
आपन्नसंशयाश्चेमं वाक्यमूचुः समीरणम् ॥ ३०९ ॥ ऋषय ऊचुः ॥ के तु तत्र महात्मानो ये भवस्यानुसारिणः । अनुग्राह्यतमाः सम्यक्
प्रमोदन्ते पुरोत्तमे । ऋषीणां वचनं श्रुत्वा वायुर्वाक्यमथाब्रवीत् ॥ ३१० ॥ वायुरुवाच ॥ श्रूयतां देवदेवस्य भक्तियैरनुकल्पिता ।
ह्रीमन्तः सूर्जिता दान्ताः शौर्ययुक्ता ह्यलोलुपाः ॥ ३११ ॥ मध्याहाराश्च मात्राश्च ह्यात्मारामा जितेन्द्रियाः । जितद्वन्द्वा महोत्साहाः सौम्या विग
तमत्सराः ॥ ३१२ ॥ भावस्थाः सर्व्वभूतानामव्यापारा अनाकुलाः । कर्मणा मनसा वाचा विशुद्धेनान्तरात्मना । अनन्यमनसो भूत्वा प्रपन्ना ये
महेश्वरम् ॥ ३१३ ॥ तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययम् । भवस्य रूपसादृश्यं नीताश्चैव ह्यनुत्तमम् ॥ ३१४ ॥ वैश्वानरमुखाः सर्वे विश्वरूपाः
कपर्दिनः । नीलकण्ठाः सितग्रीवास्तीक्ष्णदंष्ट्रास्त्रिलोचनाः ॥ ३१५ ॥ अर्द्धचन्द्रकृतोष्णीषा जटामुकुटधारिणः । सर्वे दशभुजा वीराः पद्मान्तर
सुगन्धिनः ॥ ३१६ ॥ तरुणादित्यसङ्काशाः सर्वे ते पीतवाससः । पिनाकपाणयः सर्व्वे श्वेतगोवृषवाहनाः ॥ ३१७ ॥ श्रियान्विताः कुण्डलिनो
मुक्ताहारविभूषिताः । तेजसोऽभ्यधिका देवैः सर्वज्ञाः सर्वदर्शिनः ॥ ३१८ ॥ विभज्य बहुधात्मानं जरामृत्युविवर्जिताः । क्रीडन्ते विविधैर्भावैर्भोगान्

र सुदुर्लभान् ॥ २१९ ॥ स्वच्छन्दगतयः सिद्धाः सिद्धैश्चान्योर्वैबोधिताः । एकादशानां रुद्राणां कोट्योऽनेकमहात्मनाम् ॥ २२० ॥ एभिः सह
त्मा हि देवदेवो महेश्वरः । भक्तानुकम्पी भगवान्मोदते पार्वतीप्रियः ॥ २२१ ॥ नाहन्तेषान्तु रुद्राणां भवस्य च महात्मनः । नानात्वमनुप
मि सत्यमेतद्ब्रवीमि वः ॥ २२२ ॥ मातरिश्वाऽब्रवीत्पुण्यामित्येतामीश्वरोऽप्युत । अथ ते ऋषयः सर्वे दिवाकरसमप्रभाः । श्रुत्वेमां परमां पुण्यां
त्रैयम्बकीं ततः ॥ २२३ ॥ भृशञ्चानुग्रहं प्राप्य हर्षं चैवाप्यनुत्तमम् । सम्भावयित्वा चाप्येनां वायुमूचुर्महाबलम् ॥ २२४ ॥ ऋषय ऊचुः ॥
रण महाभाग यस्माकं च त्वया विभो । ईश्वरस्योत्तमं पुण्यमष्टमन्त्वौपसर्गिकम् ॥ २२५ ॥ तस्य स्थानं प्रमाणञ्च यथावत्परिकीर्त्ति
। यो गन्धेन समृद्धं वै परमं परमात्मनः ॥ २२६ ॥ महादेवस्य माहात्म्यं दुर्विज्ञेयं सुरैरपि । स्वेन माहात्म्ययोगेन सहस्रस्यामितौजसः
२७ ॥ यस्य भक्तेष्वसंमोहो ह्यनुकम्पार्थमेव च । ब्राह्मलक्ष्म्या स्वयं जुष्टा या साप्रतिमशालिनी ॥२२८ ॥ ज्योत्स्नया व्याप्य खं चन्द्रं विन्यस्ता
रूपधृक् । विभूतिर्भ्राजतेऽत्यर्थं देवदेवस्य वेश्मनि ॥ २२९ ॥ महादेवस्य तुल्यानां रुद्राणान्तु महात्मनाम् । तत्सर्वं निखिलेनेदं वक्त्रादमृतनिस्र
॥ २३० ॥ अपीत्वा खलु सर्वस्य भक्त्यास्माभिस्तु सुव्रताः । नास्ति किञ्चिदविज्ञेयमन्यच्चैवानुगामिनः । प्रश्नं देववर प्राण यथावद्वक्तुमर्हसि
२३१ ॥ सूत उवाच ॥ स खलूवाच भगवान्किं भूयो वर्त्तयाम्यहम् । किं मया चैव वक्तव्यं तद्वदिष्यामि सुव्रताः ॥ २३२ ॥
य ऊचुः ॥ आदित्याः पारिणार्थेयाः सिद्धा वै क्रोधविक्रमाः । वैश्वानरा भूतगणा व्याघ्राश्चैवानुगामिनः ॥ २३३ ॥ आभूतसंप्लवे घोरे सर्वप्राण
क्षये । किमवस्था भवन्त्येते तन्नो ब्रूहि यथार्थवत् ॥ २३४ ॥ एते ये वै त्वया प्रोक्ताः सिद्धव्याघ्रगणैः सह । ये चान्ये सिद्धिसम्प्राप्ता मास
जगाद ह ॥ २३५ ॥ इदञ्च परमं तत्त्वं समाख्यास्यामि शृण्वताम् । विज्ञातेश्वरसद्भावमव्यक्तं प्रभवं तथा ॥ २३६ ॥ तत्र पूर्वगतास्तेषु कुमारा
गः सुताः । सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥ २३७ ॥ वोढुश्च कपिलस्तेषामासुरिश्च महायशाः । मुनिः पञ्चशिखश्चैव ये चान्येऽप्येवमा
॥ २३८ ॥ ततः काले व्यतिक्रान्ते कल्पानां पर्यये गते । महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते ॥ २३९ ॥ अनेकरुद्रकोटयस्तु या प्रसन्ना मते
। शब्दादींश्चिविषयाम्भोगान्सरयस्याष्टविधस्रयात् (?) ॥ २४० ॥ प्रविश्य सर्वभूतानि ज्ञानयुक्तेन तेजसा । वैराग्यपदमव्ययं भूतानामनुकम्पया
४१ ॥ तत्र यान्ति महात्मानः परमाणुं महेश्वरम् । तरन्ति सुमहावर्त्तां जन्ममृत्यूदकां नदीम् ॥ २४२ ॥ ततः पश्यन्ति शर्वाणि परं ब्रह्माणमेव च ।
॥ ये सहिताः सप्त या देव्यः परिकीर्त्तिताः ॥ २४३ ॥ यत्तत्सहस्रं सिद्धानामादित्यानां तथैव च । वैश्वानरभूतभव्यव्याघ्राश्चैवानुगामिनः ॥ २४४ ॥

आवेश्यात्मनि तान्सर्वान्संख्यायोपद्रवांस्तथा। लोकान् सप्त इमान्सर्वान्महाभूतानि पञ्च च ॥ २४५ ॥ विष्णुना सह संयुक्तं करोति विकरोति च। स रुद्रो यः साममयस्तथैव च यजुर्मयः ॥ २४६ ॥ स एष ओतः प्रोतश्च बहिरन्तश्च निश्चयात्। एको हि भगवान्नाथ अभावी श्रान्तकृद्द्विजाः ॥ २४७ ॥ ततस्ते ऋषयः सर्वे दिवाकरसमप्रभाः। स्वंस्वमाश्रमसंवासमारोप्याग्निं तथात्मनि ॥ २४८ ॥ कर्मणा मनसा वाचा विशुद्धेनान्तरात्मना। अनन्यमनसो भूत्वा प्रपद्यन्ते महेश्वरम् ॥ २४९ ॥ व्रतोपवासनिरताः सर्वभूतदयापराः। योगं ह्यनुपमन्दिव्यं प्राप्तं तैश्छिन्नसंशयैः ॥ २५० ॥ प्रपद्य परया भक्त्या ज्ञानयुक्तेन चेतसा। तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययम् ॥ २५१ ॥ यः पठेत्तपसा युक्तो वायुप्रोक्तामिमां स्तुतिम्। ब्राह्मणः क्षत्रियो वापि वैश्यो वा स्वक्रियापरः ॥२५२॥ लभते रुद्रसालोक्यं भक्तिमान्विगतज्वरः। अमद्यपश्च यः शूद्रो भवभक्तो जितेन्द्रियः ॥ २५३॥ आभूतसंप्लवस्थायी ह्यप्रतीघातलक्षणः। गाणपत्यं स लभते स्थानं वा सर्वकामिकम् ॥ २५४ ॥ मद्यपो मद्यपैः सार्द्धं भूतसङ्घैश्च मोदते। सोऽर्च्यमानो महीपृष्ठे मर्त्यानां वरदो भवेत् । इति होवाच भगवान्वायुर्वाक्यमिदं वरः ॥ २५५ ॥ इति श्रीमहापुराणे वायुप्रोक्ते शिवपुरवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ सूत उवाच ॥ प्रत्याहारं प्रवक्ष्यामि परस्यान्ते स्वयम्भुवः। ब्रह्मणः स्थितिकाले तु क्षीणे तस्मिंस्तदा प्रभोः ॥ १ ॥ यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः। अव्यक्तान्ग्रसते व्यक्तं प्रत्याहारे च कृत्स्नशः ॥ २ ॥ परं तदनुकल्पानामपूर्णे कल्पसङ्क्षये। उपस्थिते महाघोरे ह्यप्रत्यक्षे तु कस्यचित् ॥३॥ अन्ते द्रुमस्य सम्प्राप्ते पश्चिमस्य मनोस्तदा। अन्ते कलियुगे तस्मिन्क्षीणे संहार उच्यते ॥ ४ ॥ सम्प्रक्षाले तदा वृत्ते प्रत्याहारे ह्युपस्थिते। प्रत्याहारे तदा तस्मिन् भूततन्मात्रसंक्षये ॥ ५ ॥ महदादेर्विकारस्य विशेषान्तस्य संक्षये। स्वभावकारिते तस्मिन्प्रवृत्ते प्रतिसञ्चरे ॥ ६ ॥ आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम्। आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते। प्रविष्टे गन्धतन्मात्रे तोयावस्था धरा भवेत् ॥ ७ ॥ आपस्तदा प्रनष्टा वै वेगवत्यो महास्वनाः। सर्वमापूरयित्वेदं तिष्ठन्ति विचरन्ति च ॥ ८ ॥ अपामस्ति गुणो यस्तु ज्योतिषि लीयते रसः। नश्यन्त्यापस्तदान्ते च रसतन्मात्रसङ्क्षयात् ॥ ९ ॥ तेजसा संहृतरसा ज्योतिष्ट्वं प्राप्नुवन्त्युत। ग्रस्ते च सलिले तेजः सर्वतोमुखमीक्ष्यते ॥ १० ॥ अथाग्निः सर्वतो व्याप्त आदत्ते तज्जलन्तदा। सर्वमापूर्य्यतेऽर्चिर्भिस्तक्षा जगदिदं शनैः ॥ ११ ॥ अर्चिर्भिः सन्तते तस्मिंस्तिर्यगूर्द्ध्वमधस्ततः। ज्योतिषोऽपि गुणं रूपं वायुरन्ति प्रकाशकम्। प्रलीयते तदा तस्मिन्दीपार्चिरिव मारुते ॥ १२ ॥ प्रनष्टे रूपतन्मात्रे हृतरूपो विभावसुः। उपशाम्यति तेजो हि वायुना धूयते महत् ॥ १३ ॥ निरालोके तदा लोके वायुभूते च तेजसि।

ततस्तु मूलमासाद्य वायुः सम्भवमात्मनः ॥ १४ ॥ ऊर्द्ध्वं चाधश्च तिर्यक्च दोधवीति दिशो दश । वायोरपि गुणं स्पर्शमाकाशं ग्रसते च तत् ॥ १५ ॥ प्रशाम्यति तदा वायुः खन्तु तिष्ठत्यनावृतम् । अरूपमरसस्पर्शमगन्धं न च मूर्तिमत् ॥ १६ ॥ सर्वमापूरयन्नादैः सुमहत्तत्प्रकाशते । परिमण्डलन्तत्सु षिरमाकाशं शब्दलक्षणम् ॥ १७ ॥ शब्दमात्रं तदाकाशं सर्वमावृत्य तिष्ठति । तन्तु शब्दगुणन्तस्य भूतादिं ग्रसते पुनः ॥ १८ ॥ भूतेन्द्रियेषु युगपद्भूतादौ संस्थितेषु वै । अभिमानात्मको ह्येष भूतादिस्तामसः स्मृतः ॥ १९ ॥ भूतादिं ग्रसते चापि महान्वै बुद्धिलक्षणः । महानात्मा तु विज्ञेयः संकल्पो व्यवसायकः ॥ २० ॥ बुद्धिर्मनश्च लिङ्गश्च महानक्षर एव च । पर्यायवाचकैः शब्दैस्तमाहुस्तत्त्वचिन्तकाः ॥ २१ ॥ सम्प्रलीनेषु भूतेषु गुणसाम्ये तमोमये । स्वात्मन्येव स्थिते चैव कारणे लोककारणे॥२२॥ विनिवृत्ते तदा सर्गे प्रकृत्यावस्थितेन वै । तदाद्यन्तपरोक्षत्वा दद्दृष्टत्वाच्च कस्यचित् ॥ २३ ॥ अनाख्यानादबोधत्वादज्ञानाज्ज्ञानिनामपि । आगतागतिकत्वाच्च ग्रहणं तत्र विद्यते ॥ २४ ॥ भावग्राह्या नुमानाच्च चिन्तयित्वेदमुच्यते । स्थिते तु कारणे तस्मिन्नित्ये सदसदात्मिके ॥ २५ ॥ अनिर्देश्या प्रवृत्तिर्वै स्वात्मिका कारणे न तु । एवं सप्तादयोऽभ्यस्तात्क्रमात्प्रकृतयस्तु वै ॥ २६ ॥ प्रत्याहारे तदा सर्गे प्रविशयन्ति परस्परम् । येनेदमावृतं सर्वं मण्डलन्तु प्रलीयते ॥ २७ ॥ सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम् । उदकावरणं यच्च ज्योतिषां लीयते तु तत् ॥ २८ ॥ यत्तैजसं चावरणमाकाशं ग्रसते तु तत् । यद्वायव्यं चावरणमाकाशं ग्रसते तु तत् ॥ २९ ॥ आकाशावरणं यच्च भूतादिर्ग्रसते तु तत् । भूतादिं ग्रसते चापि महान्वै बुद्धिलक्षणः ॥ ३० ॥ महान्तं ग्रसतेऽव्यक्तं गुणसाम्यं ततः परम् । एतौ संहारविस्तारौ ब्रह्माव्यक्तौ ततः पुनः ॥ ३१ ॥ सृजते ग्रसते चैव विकारान्सर्गसंयमे । संहारकार्यकरणाः संसिद्धा ज्ञानिनस्तु ये ॥ ३२ ॥ गत्वा जवञ्जवीभावे स्थानेष्वेषु प्रसंयमान् । प्रत्याहारे वियुज्यन्ते क्षेत्रज्ञाः करणैः पुनः ॥ ३३ ॥ अव्यक्तं क्षेत्रमित्याहुर्ब्रह्म क्षेत्रज्ञ उच्यते । साधर्म्यवैधर्म्यकृतसंयोगोऽनादिमांस्तयोः ॥ ३४ ॥ एवं सर्गेषु विज्ञेयं क्षेत्रज्ञेष्विह ब्राह्मणाः । ब्रह्मविच्चैव विज्ञेयः क्षेत्रज्ञानात्पृथक्पृथक् ॥ ३५ ॥ विषयाविषयत्वञ्च क्षेत्रक्षेत्रज्ञयोः स्मृतम् । ब्रह्म तु विषयो ज्ञेयोऽविषयः क्षेत्रमुच्यते ॥ ३६ ॥ क्षेत्रज्ञाधिष्ठितं क्षेत्रं क्षेत्रज्ञार्थं प्रचक्षते । बहुत्वाच्च शरीराणां शरीरी बहुधा स्मृतः ॥ ३७ ॥ अव्यूह्य शङ्कराच्चैव ज्योतिर्वच्च व्यवस्थितः । यस्मात्प्रतिशरीरं हि सुखदुःखोपलब्धिता । तस्मात्पुरुषनानात्वं विज्ञेयं तु विजानता ॥ ३८ ॥ यदा प्रवर्त्तते चैषां भेदानां चैव संयमाः । स्वभावकारिताः सर्वे कालेन महता तदा ॥ ३९ ॥ निवर्त्तते तदा तस्य स्थितिरागः स्वयम्भुवः । सहसा योज्यकैः सर्वैर्ब्रह्मलोक

निवासिभिः ॥ ४० ॥ विनिवृत्ते तदा रागे स्थितावात्मनिवासिनाम् । तत्काळवासिनां तेषां तदा तद्दोषदर्शिनाम् ॥४१॥ उत्पद्यतेऽथ वैराग्यमात्मवाद
प्रणाशनम् । भोज्यभोक्तृत्वनानात्वे तेषां तत्त्वदर्शिनाम् ॥ ४२ ॥ पृथग्ज्ञानेन क्षेत्रज्ञास्ततस्ते प्रमलौकिकाः । प्रकृतौ करणा नीताः सर्वे नानाप्रदर्शिनः
॥४३॥ स्वात्मन्येवावतिष्ठन्ते प्रशान्ता दर्शनात्मकाः । शुद्धा निरञ्जनाः सर्वे चेतनाचेतनास्तथा ॥ ४४ ॥ तत्रैव परिनिर्वाणाः स्मृता नागामिनस्तु ते ।
निर्गुणत्वानिरात्मानः प्रकृत्यन्ते व्यतिक्रमात् ॥४५॥ इत्येवं प्राकृतः प्रोक्तः प्रतिसर्गः स्वयम्भुवः । भिद्यन्ते सर्वभूतानां करणानि प्रसंयमे ॥४६॥ इत्येव
संयमश्चैव तत्त्वानां करणैः सह । तत्त्वप्रसंयमो ह्येष स्मृतो ह्यावर्त्तको द्विजाः ॥ ४७ ॥ सूत उवाच ॥ धर्माधर्मौ तपो ज्ञानं शुभे सत्यानृते तथा । ऊर्द्ध
भावो ह्यधोभावो सुखदुःखे प्रियाप्रिये ॥ ४८ ॥ सर्वमेतत्प्रयातस्य गुणमात्रात्मकं स्मृतम् । निरिन्द्रियाणां च तदा ज्ञानिनां यच्छुभाशुभम् ॥ ४९ ॥
प्रकृत्यां चैव तत्सर्वं पुण्यं पापं प्रतिष्ठति । योन्यवस्था स्वभावे च देहिनां तु निषिच्यते ॥ ५० ॥ जन्तूनां पापपुण्यन्तु प्रकृतौ यत्प्रतिष्ठितम् । अव्यक्त
स्थानि तान्येव पुण्यपापानि जन्तवः । ये जयन्ति पुनर्देहे देहान्यत्वे तथैव च ॥ ५१ ॥ धर्माधर्मौ तु जन्तूनां गुणमात्रात्मकावुभौ । करणैः स्वैः
प्रचीयेते कायत्वेनेह जन्तुभिः ॥ ५२ ॥ सुचेतनाः प्रलीयन्ते क्षेत्रज्ञाधिष्ठिता गुणाः । सर्गे च प्रतिसर्गे च संसारे चैव जन्तवः । संयुज्यन्ते
वियुज्यन्ते करणैः सञ्चरन्ति च ॥ ५३ ॥ राजसी तामसी चैव सात्विकी चैव वृत्तयः । गुणमात्राः प्रवर्त्तन्ते पुरुषाधिष्ठितास्त्रिधा ॥ ५४ ॥ ऊर्द्ध
देवात्मकं सत्त्वमधोभागात्मकं तमः । तयोः प्रवर्त्तकं मध्ये इहैवावर्त्तकं रजः ॥ ५५ ॥ इत्येवं परिवर्त्तन्ते त्रयः स्रोतोगुणात्मकाः । लोकेषु सर्वभूतानां
तत्र कार्यं विजानता ॥ ५६ ॥ अविद्याप्रत्ययारम्भा आरभ्यन्ते हि मानवैः ! एतास्तु गतयस्तिस्रः शुभाः पापात्मिकाः स्मृताः ॥ ५७ ॥ तम
साभिभवाज्जन्तुर्याथातथ्यं न विन्दति । अतत्तद्दर्शनात्सोऽथ त्रिविधं वध्यते ततः ॥ ५८ ॥ प्राकृतेन च वन्धेन तथा वैकारिकेन च । दक्षिणाभि
स्तृतीयेन बद्धोऽत्यन्तं विवर्त्तते ॥ ५९ ॥ इत्येते वै त्रयः प्रोक्ता वन्धा ह्यज्ञानहेतुकाः । अनित्ये नित्यसंज्ञा च दुःखे च सुखदर्शनम् ॥ ६० ॥
अस्वे स्वमिति च ज्ञानमशुचौ शुचिनिश्चयः । येषामेते मनोदोषा ज्ञानदोषा विपर्य्ययात् ॥ ६१ ॥ रागद्वेषनिवृत्तिश्च तज्ज्ञानं समुदाहृतम् ।
अज्ञानं तमसो मूलं कर्म्मद्वयफलं रजः । कर्म्मजस्तु पुनर्देहो महादुःखं प्रवर्त्तते ॥ ६२ ॥ श्रोत्रजा नेत्रजा चैव त्वग्जिह्वाघ्राणतस्तथा ।
पुनर्भवकरी दुःखा कर्म्मणां जायते तु सा ॥ ६३ ॥ सतृष्णोऽभिहितो बालः स्वकृतैः कर्म्मणः फलैः । तैलपालीकवज्जीवस्तत्रैव परि
वर्त्तते ॥ ६४ ॥ तस्मात्स्थूलमनर्थानामज्ञानमुपदिश्यते । तं शक्तमवधार्य्यैकं ज्ञाने यत्नं समाचरेत् ॥ ६५ ॥ ज्ञानाद्विजयते सर्वं

द्विर्विरज्यते । वैराग्याच्छुद्ध्यते चापि शुद्धः सत्त्वेन मुच्यते ॥ ६६ ॥ अत ऊर्द्धं प्रवक्ष्यामि रागं भूतापहारिणम् । अभिष
त्स्माद्विषयोऽप्यवशात्मनः ॥ ६७ ॥ अनिष्टमभिषङ्गं हि प्रीतितापविषादनम् । दुःखलाभे न तापश्च सुखानुस्मरणं तथा ॥ ६८ ॥
ो रागः सम्भूत्याः कारणं स्मृतम् । ब्रह्मादौ स्थावरान्ते वै संसारे ह्याधिभौतिके । अज्ञानपूर्वकं तस्मादज्ञानन्तु विवर्जयेत् ॥ ६९ ॥
न प्रमाणं शिष्टाचारं तथैव च । वर्णाश्रमविरोधी यः शिष्टशास्त्रविरोधकः ॥ ७० ॥ एष मार्गो हि निरधितिर्यग्योनौ च कारणम् । तिर्य
वि कारणं स निरुच्यते ॥ ७१ ॥ विविधा यातना स्थाने तिर्य्यग्योनौ च षड्विधे । कारणे विषये चैव प्रतिघातस्तु सर्वशः ॥ ७२ ॥
ु तत्सर्वं प्रतिघातात्मकं स्मृतम् । इत्येषा तामसी वृत्तिर्भूतादीनां चतुर्विधा ॥ ७३ ॥ सत्त्वस्थमात्रकं चित्तं यथा सत्त्वप्रदर्शनात् ।
तथा तत्त्वं दृष्ट्वा वै तत्त्वदर्शनात् ॥ ७४ ॥ सत्त्वक्षेत्रज्ञनानात्वमेतज्ज्ञानार्थदर्शनम् । नानात्वदर्शनं ज्ञानं ज्ञानाद्वै योगमुच्यते ॥ ७५ ॥
य वै बन्धो मोक्षो मुक्तस्य तेन च । संसारे विनिवृत्ते तु मुक्तो लिङ्गेन मुच्यते ॥ ७६ ॥ निःसम्बन्धो ह्यचैतन्यः स्वात्मन्येवावतिष्ठते ।
स्थितश्चापि विरूपाख्येन लिख्यते ॥ ७७ ॥ इत्येतल्लक्षणं प्रोक्तं समासाज्ज्ञानमोक्षयोः । स चापि त्रिविधः प्रोक्तो मोक्षो वै तत्त्वदर्शिभिः
र्वं वियोगो ज्ञानेन द्वितीयो रागसंक्षयात् । लिङ्गाभावात्तु कैवल्यं कैवल्यात्तु निरञ्जनम् ॥ ७९ ॥ निरञ्जनत्वाच्छुद्धस्तु ततो नेता न
ष्णाक्षयात्तृतीयस्तु व्याख्यातं मोक्षकारणम् ॥ ८० ॥ निमित्तमप्रतीघाते इष्टशब्दादिलक्षणे । अष्टावेतानि रूपाणि प्राकृतानि यथाक्रमम्
त्रज्ञेष्ववसज्यन्ते गुणमात्रात्मकानि तु । अत ऊर्द्धं प्रवक्ष्यामि वैराग्यं दोषदर्शनात् ॥ ८२ ॥ दिव्ये च मानुषे चैव विषये पञ्चलक्षणे ।
भिष्वङ्गः कर्त्तव्यो दोषदर्शनात् ॥ ८३ ॥ तापप्रीतिविषादानां कार्य्यन्तु परिवर्जनम् । एवं वैराग्यमास्थाय शरीरी निर्ममो भवेत् ॥ ८४ ॥
ावं दुःखमिति बुद्ध्यानुचिन्त्य च । विशुद्धं कार्य्यकरणं सत्वाभ्येति तरान्तु यः ॥ ८५ ॥ परिपक्वकषायो हि कृत्स्नान्दोषान्प्रपश्यति ।
काले हि दोषैर्नैमित्तिकैस्तथा ॥ ८६ ॥ ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः । स शरीरमुपाश्रित्य कृत्स्नान्दोषान्रुणद्धि वै ॥ ८७ ॥
नि भिन्दन्हि छिन्दन्मर्माण्यतीत्य च । शैत्यात्प्रकुपितो वायुरूर्द्धन्तु क्रमते ततः ॥ ८८ ॥ स चायं सर्वभूतानां प्राणस्थानेष्ववस्थितः ।
ते ज्ञाने संवृतेषु च कर्म्मसु ॥ ८९ ॥ स जीवोऽनभ्यधिष्ठानः कर्म्मभिः स्वैः पुराकृतैः । अष्टाङ्गप्राणवृत्तीर्वै स विच्यावयते पुनः ॥ ९० ॥
ंसो वै निरुच्छ्वासस्ततो भवेत् । एवं प्राणैः परित्यक्तो मृत इत्यभिधीयते ॥ ९१ ॥ यथेह लोके सद्योतं नीयमानमितस्ततः । रञ्जनं तद्वधे

यत्तु नेता नेता न विद्यते ॥ ९२ ॥ तृष्णाक्षयस्तृतीयस्तु व्याख्यातं मोक्षलक्षणम् । शब्दाद्ये विषये दोषविषये पञ्चलक्षणे ॥ ९३ ॥ अप्रद्वेषोऽन भिष्वङ्गः प्रीतितापविवर्जनम् । वैराग्यकारणं ह्येते प्रकृतीनां लयस्य च ॥ ९४ ॥ अष्टौ प्रकृतयो ज्ञेयाः पूर्वोक्ता वै यथाक्रमम् । अव्यक्ताद्यास्तु विज्ञेया भूतान्ताः प्रकृतेर्लयाः ॥ ९५ ॥ वर्णाश्रमाचारयुक्ताः शिष्टाः शास्त्राविरोधिनः । वर्णाश्रमाणां धर्म्मोऽयं देवस्थानेषु कारणम् ॥ ९६ ॥ ब्रह्मादीनि पिशाचान्तान्यष्टौ स्थानानि देवता । ऐश्वर्य्यमणिमाद्यं हि कारणं ह्यष्टलक्षणम् ॥ ९७ ॥ निमित्तमप्रतीघात इष्टे शब्दादिलक्षणे । अष्टावेतानि रूपाणि प्राकृतानि यथाक्रमम् ॥ ९८ ॥ क्षेत्रज्ञेष्वनुसज्यन्ते गणमात्रात्मकानि तु । प्रावृट्काले पृथक्त्वेन पश्यन्तीह न चक्षुषा ॥ ९९ ॥ पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा । श्वाविति श्वानपानश्च योनीः प्रविशतस्तथा ॥ १०० ॥ तिर्य्यगूर्द्ध्वमधस्ताच्च धावतोऽपि यथाक्रमम् । जीवप्राणास्तथा लिङ्गं कारणञ्च चतुष्टयम् ॥ १०१ ॥ पर्य्यायवाचकैः शब्दैरेकार्थैः सोऽभिलिख्यते । व्यक्ताव्यक्ते प्रमाणोऽयं स वै रूपं तु कृत्स्नशः ॥ १०२ ॥ अव्यक्तान्त गृहीतं च क्षेत्रज्ञाधिष्ठितश्च यत् । एवं ज्ञात्वा शुचिर्भूत्वा ज्ञानाद्धि विप्रमुच्यते ॥ १०३ ॥ नष्टश्चैव यथा तत्त्वं तत्त्वानां तत्त्वदर्शनम् । यथेष्टं परिनि र्य्याति भिन्ने देहे सुनिर्वृते ॥ १०४ ॥ भिद्यते करणञ्चापि ह्यव्यक्ताज्ञानिनस्ततः । मुक्तो गुणशरीरेण प्राणाद्येन तु सर्वशः ॥ १०५ ॥ नान्यच्छरीर मादत्ते दग्धे बीजे यथाङ्कुरः । जीविकः सर्वसंसाराद्बीजशारीरमानसः ॥ १०६ ॥ ज्ञानाच्चतुर्दशाच्छुद्धः प्रकृतिं सोऽनुवर्त्तते । प्रकृतिं सत्यमित्याहु र्विकारोऽनृतमुच्यते ॥ १०७ ॥ तत्सद्भावोऽनृतं ज्ञेयं सद्भावः सत्यमुच्यते । अनामरूपक्षेत्रज्ञनामरूपं प्रचक्षते ॥ १०८ ॥ यस्मात्क्षेत्रं विजानाति तस्मात्क्षेत्रज्ञ उच्यते । क्षेत्रप्रत्ययतो यस्मात्क्षेत्रज्ञः शुभ उच्यते ॥ १०९ ॥ क्षेत्रज्ञः समर्प्यते तस्मात्क्षेत्रं तज्ज्ञैर्विभा ष्यते । क्षेत्रत्वप्रत्ययं दृष्टं क्षेत्रज्ञः प्रत्ययी सदा ॥ ११० ॥ क्षयणात् करणाच्चैव क्षतत्राणात्तथैव च । भोज्यत्वाद्विषयत्वाच्च क्षेत्रं क्षेत्रविदो विदुः ॥ १११ ॥ महदाद्यं विशेषान्तं सवैरूप्यं विलक्षणम् । विकारलक्षणं तद्धे साक्षरक्षरमेव च ॥ ११२ ॥ तमेव च विकारन्तु यस्माद्धे क्षरते पुनः । तस्माच्च कारणाच्चैव क्षरमित्यभिधीयते ॥ ११३ ॥ सुखदुःखमोहभावा भोज्यमित्यभिधीयते । अचेतत्वाद्धि विषयस्ताद्धि धर्म्मविभुः स्मृतः ॥ ११४ ॥ न क्षीयते न क्षरति विकारप्रसृतन्तु तत् । अक्षरं तेन चाप्युक्तमक्षीणत्वात्तथैव च ॥ ११५ ॥ यस्मात्पुर्य्यनुशेते च तस्मात्पुरुष उच्यते । पुरप्रत्ययिको यस्मात्पुरुषेत्यभिधीयते ॥ ११६ ॥ पुरुषं कथयस्वाय कथन्तज्ज्ञैर्विभाष्यते । शुद्धो निरञ्जनाभासो ज्ञानाज्ञानविवर्जितः ॥ ११७ ॥ अस्ति नास्तीति सोऽन्यो वा बद्धो मुक्तो गतः स्थितः । नैर्हेतिकान्तनिर्देश्यसूक्तस्तस्मिन्न विद्यते ॥ ११८ ॥ शुद्धत्वान्न तु देश्यो वै

द्दष्टत्वात्समदर्शनः । आत्मप्रत्ययकारी सारनूनश्चापि हेतुकम् । भावग्राह्यमनुमान्यं चिन्तयन्न प्रमुह्यते ॥ ११९ ॥ यदा पश्यति ज्ञातारं शान्तार्थं दर्शनात्मकम् । दृश्यादृश्येषु निर्द्देश्यं तदा तदुद्धरं वरम् ॥ १२० ॥ एवं ज्ञात्वा स विज्ञाता ततः शान्तिं नियच्छति । कार्य्ये च कारणे चैव बुद्ध्यादौ भौतिके तदा ॥ १२१ ॥ संप्रयुक्तो वियुक्तो वा जीवतो वा मृतस्य च । विज्ञाता न च दृश्येत पृथक्त्वेनेह सर्व्वशः ॥ १२२ ॥ स्वेनात्मानं तमात्मानं कारणात्मा नियच्छति । प्रकृतौ कारणे चैव स्वात्मन्येवोपतिष्ठति ॥ १२३ ॥ अस्ति नास्तीति सोऽन्यो वा इहामुत्रेति वा पुनः । एकत्वं वा पृथक्त्वं वा क्षेत्रज्ञपुरुषेति वा ॥ १२४ ॥ आत्मवान् स निरात्मा वा चेतनोऽचेतनोऽपि वा । कर्त्ता वा सोऽप्यकर्त्ता वा भोक्ता वा भोज्यमेव वा ॥ १२५ ॥ यज्ज्ञात्वा न निवर्त्तन्ते क्षेत्रज्ञे तु निरञ्जने । अवाच्यं तदनाख्यानादग्राह्यत्वादहेतुनि ॥ १२६ ॥ अप्रतर्क्यमचिन्त्यत्वादवाप्यत्वाच्च सर्वशः । नाभिलिम्पति तत्तत्वं सम्प्राप्य मनसा सह ॥ १२७ ॥ क्षेत्रज्ञे निर्गुणे शुद्धे शान्ते क्षीणे निरञ्जने । व्यपे(पे)तसुखदुःखे च निरुद्धे शान्तिमागते ॥ १२८ ॥ निरात्मके पुनस्तस्मिन्वाच्यावाच्यो न विद्यते । एतौ संहारविस्तारौ व्यक्ताव्यक्तौ ततः पुनः ॥ १२९ ॥ सृजते ग्रसते चैव ग्रस्तः पर्यवतिष्ठते । क्षेत्रज्ञाधिष्ठितं सर्वं पुनः सर्वं प्रवर्त्तते ॥ १२० ॥ अधिष्ठानप्रवृत्तेन तस्य ते बुद्धिपूर्वकम् । साधर्म्यवैधर्म्यकृतसंयोगो विधितस्तयोः । अनादिमान् स संयोगो महापुरुषजः स्मृतः ॥ १२१ ॥ यावच्च सर्गप्रतिसर्गकालस्तावच्च तिष्ठति सुसान्निरुध्य । पूर्वं हितव्ये तदबुद्धिपूर्वं प्रवर्त्तते तत्पुरुषार्थमेव ॥ १३२ ॥ एषा निसर्गप्रतिसर्गपूर्वं प्रधानिकी चेश्वरकारिता च । अनाद्यनन्ता ह्यभिमानपूर्वकं वित्रासयन्ती जगदभ्युपैति ॥ १३३ ॥ इत्येष प्राकृतः सर्गस्तृतीयो हेतुलक्षणः । उक्तो ह्यस्मिंस्तदात्यन्तं कविभिस्तत्प्रमुच्यते ॥ १३४ ॥ इत्येष प्रतिसर्गो वस्त्रिविधः कीर्त्तितो मया । विस्तरेणानुपूर्व्या च भूयः किं वर्त्तयाम्यहम् ॥ १३५ ॥ इति श्रीमहापुराणे वायुप्रोक्ते चत्वारिंशोऽध्यायः ॥ ४० ॥ ७॥ ऋषय ऊचुः ॥ सूत सुमहदाख्यानं भवता परिकीर्त्तितम् । प्रजानां मनुभिः सार्द्धं देवानामृषिभिः सह ॥ १ ॥ पितृगन्धर्वभूतानां पिशाचोरगरक्षसाम् । दैत्यानां दानवानां च यक्षाणामेव पक्षिणाम् ॥ २ ॥ अत्यद्भुतानि कर्म्माणि विधिमान्धर्म्मनिश्चयः । विचित्राश्च कथायोगा जन्म चाग्र्यमनुत्तमम् ॥ ३ ॥ तत्कथ्यमानमस्माकं भवता श्लक्ष्णया गिरा । मनःकर्णसुखं सौते प्रीणात्याभूतसम्भवम् ॥ ४ ॥ एवमाराध्य ते सूतं सत्कृत्य च महर्षयः । पप्रच्छुः सत्रिणः सर्वे पुनः सर्गप्रवर्त्तनम् ॥ ५ ॥ कथं सूत महाप्राज्ञ पुनः सर्गः प्रपत्स्यते । वन्धेषु सम्प्रलीनेषु गुणसाम्ये तमोमये ॥ ६ ॥ विकारेष्वविसृष्टेषु ह्यव्यक्ते चात्मनि स्थिते । अप्रवृत्तौ ब्रह्मणस्तु महासायुज्यगैस्तदा । कथं प्रपत्स्यते सर्गस्तन्नः प्रब्रूहि पृच्छताम् ॥ ७ ॥ एवमुक्त

स्ततः सूतस्तदासौ लोमहर्षणः। व्याख्यातुमुपचक्राम पुनः सर्गप्रवर्त्तनम् ॥ ८ ॥ अहं वो वर्त्तयिष्यामि यथा सर्गः प्रपत्स्यते। पूर्ववत्स तु विज्ञेयः समासात्तं निबोधत ॥ ९ ॥ दृष्टं चैवानुमेयञ्च तर्कं वक्ष्यामि युक्तितः। तस्माद्वाचो निवर्त्तन्ते ह्यप्राप्य मनसा सह ॥ १० ॥ अव्यक्तवत् परोक्षत्वाद्ग्रहणं तद्दुरासदम्। विकारैः प्रतिसंहृष्टे गुणसाम्ये निवर्त्तते ॥ ११ ॥ प्रधानं पुरुषाणाञ्च साधर्म्येणैव तिष्ठति। धर्म्माधर्म्मौ प्रलीयेते अव्यक्तौ प्राणिनां सदा ॥ १२ ॥ सत्त्वमात्रात्मको धर्म्मो गुणसत्त्वे प्रतिष्ठितः। तमोमात्रात्मकोऽधर्म्मो गुणे तमसि तिष्ठति ॥ १३ ॥ अविभागवतावेतौ गुणसाम्यास्थितावुभौ। सर्वकार्य्ये बुद्धिपूर्वं प्रधानस्य प्रपत्स्यते ॥ १४ ॥ अबुद्धिपूर्वं क्षेत्रज्ञ अधिष्ठास्यति तान् गुणान्। एवं तानभिमानेन प्रपत्स्येत पुरस्तदा ॥ १५ ॥ यदा प्रवर्त्तितव्यन्तु क्षेत्रक्षेत्रज्ञयोर्द्वयोः। भोज्यभोक्तृत्वसम्बन्धं प्रपत्स्येते युतावुभौ ॥ १६ ॥ तस्माच्छरणमव्यक्तं साम्ये स्थित्वा गुणात्मकान्। क्षेत्रज्ञाधिष्ठितं तच्च वैषम्यं भजते तु तत् ॥ १७ ॥ ततः प्रपत्स्यते व्यक्तं क्षेत्रक्षेत्रज्ञयोर्द्वयोः। क्षेत्रज्ञाधिष्ठितं सत्त्वं विकारं जनयिष्यति ॥ १८ ॥ महदाद्यं विशेषान्तं चतुर्विंशगुणात्मकम्। क्षेत्रज्ञस्य प्रधानस्य पुरुषस्य प्रपत्स्यते ॥ १९ ॥ ब्रह्माण्डे प्रथमः सोऽथ भविता चेश्वरः पुनः। ततो ज्ञेयस्य कृत्स्नस्य सर्वभूतपतिः शिवः ॥ २० ॥ ईश्वरः सर्व्वमुक्तानां ब्रह्मा ब्रह्ममयो महान्। आदिदेवः प्रधानस्यानुग्रहाय प्रवक्ष्यते ॥ २१ ॥ अनाद्यौ स्वयमुत्पन्नावुभौ सूक्ष्मौ तु तौ स्मृतौ। अनादिसंयोगयुतौ सर्वक्षेत्रज्ञमेव च ॥ २२ ॥ अबुद्धिपूर्वकं युक्तौ मशकौ तु वरौ तदा। अप्रत्ययमनाद्यं च स्थितावुदकमप्स्यशः ॥ २३ ॥ प्रवृत्ते पूर्वतः पूर्वं पुनः सर्गे प्रपत्स्यते। अज्ञागुणैः प्रवर्त्तन्ते रजःसत्त्वतमात्मकम् ॥ २४ ॥ प्रवृत्तिकाले रजसाभिपन्नमहत्त्वभूतादिविशेष्यताञ्च। विशेषतां चेन्द्रियताञ्च यान्ति गुणावसाने पतिभिर्मनुष्याः ॥ २५ ॥ सत्याभिध्यायिनस्तस्य ध्यायिनः सन्निमित्तकम्। रजःसत्त्वतमा व्यक्ता विधर्म्माणः परस्परम् ॥ २६ ॥ आद्यन्ते संप्रपत्स्यन्ते क्षेत्रतज्ज्ञास्तु सर्वशः। संसिद्धकार्य्यकरणा उत्पद्यन्तेऽभिमानिनः ॥ २७ ॥ सर्वे सत्वाः प्रपद्यन्ते ह्यव्यक्तात्पूर्वमेव च। प्रसूते या च सुवहाः साधिकाश्चाप्यसाधिका ॥ २८ ॥ संसरन्तस्तु ते सर्वे स्थानप्रकरणैः सह। कार्य्याणि प्रतिपत्स्यन्ते उत्पद्यन्ते पुनः पुनः ॥ २९ ॥ गुणमात्रात्मकाश्चैव धर्म्माधर्म्मौ परस्परम्। आरप्सन्तीह चान्योन्यं वरेणानुग्रहेण च ॥ ३० ॥ सर्वे तुल्याः प्रसृष्टार्थं सर्गादौ यान्ति विक्रियाम्। गुणास्तत्प्रतिधावन्ते तस्मात्तत्तस्य रोचते ॥ ३१ ॥ गुणास्ते यानि सर्वाणि प्राक् दृष्टेः प्रतिपेदिरे। तान्येव प्रतिपद्यन्ते सृष्टमानाः पुनः पुनः ॥ ३२ ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते। तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥ ३३ ॥ महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्त्तिषु। विप्रयोगाश्च भूतानां गुणेभ्यः संप्रवर्त्तते ॥ ३४ ॥ इत्येष वो

मया ख्यातः पुनः सर्गः समासतः। समासादेव वक्ष्यामि ब्रह्मणोऽथ समुद्भवम् ॥ ३५ ॥ अव्यक्तात्कारणात्तस्मान्नित्यात्सदसदात्मकात् । प्रधान
पुरुषाभ्यान्तु जायते च महेश्वरः ॥ ३६ ॥ स पुनः सम्भावयिता जायते ब्रह्मसंज्ञितः। सृजते स पुनर्लोकानभिमानगुणात्मकान् ॥ ३७ ॥ अहङ्का
रस्तु महतस्तस्माद्भूतानि चात्मनः। युगपत् सम्प्रवर्त्तन्ते भूतान्येवेन्द्रियाणि च। भूतभेदाश्च भूतेभ्य इति सर्गः प्रवर्त्तते ॥ ३८ ॥ विस्तरावयवस्तेषां
यथाप्रज्ञं यथाश्रुतम्। कीर्त्तितं वो यथा पूर्वं तथैवाभ्युपधार्य्यताम् ॥ ३९ ॥ एतच्छ्रुत्वा नैमिषेयास्तदानीं लोकोत्पत्तिं संस्थितिं च व्ययञ्च । तस्मिन्
सत्रेऽवभृथं प्राप्य शुद्धाः पुण्यं लोकमृषयः प्राप्नुवन्ति ॥ ४० ॥ यथा यूयं विधिवद्देवतादीनिष्ट्वा चैवावभृथं प्राप्य शुद्धाः। त्यक्त्वा देहानायुषोऽन्ते कृता
र्थान्पुण्याँल्लोकान्प्राप्य यथेष्टं चरिष्यथ ॥ ४१ ॥ एते ते नैमिषेया वै इष्ट्वा सृष्ट्वा च वै तदा। जग्मुश्चावभृथस्नाताः स्वर्गं सर्वे तु सत्रिणः ॥ ४२ ॥
विप्रास्तथा यूयमपि चेष्ट्वा वहुविधैर्मखैः। आयुषोऽन्ते ततः स्वर्गं गन्तारः स्थ द्विजोत्तमाः ॥ ४३ ॥ प्रक्रिया प्रथमे पादे कथावस्तुपरिग्रहः।
अनुषङ्ग उपोद्घात उपसंहार एव च ॥ ४४ ॥ एवमेतच्चतुष्पादं पुराणं लोकसम्मतम्। उवाच भगवान् साक्षाद्वायुर्लोकहिते रतः ॥ ४५ ॥
नैमिषे सत्रमासाद्य मुनिभ्यो मुनिसत्तमाः तत्प्रसादादसंदिग्धं भूतोत्पत्तिलयानि च ॥ ४६ ॥ प्राधानिकीमिमां सृष्टिं तथैवेश्वरकारिताम्।
सम्यग्विदित्वा मेधावी न मोहमधिगच्छति ॥ ४७ ॥ इदं यो ब्राह्मणो विद्वानितिहासं पुरातनम्। शृणुयाच्छ्रावयेद्वापि तथाध्यापयतेऽपि च ॥ ४८ ॥
स्थानेषु स महेन्द्रस्य मोदते शाश्वतीः समाः। ब्रह्मसायुज्यगो भूत्वा ब्रह्मणा सह मोक्ष्यते ॥ ४९ ॥ तेषां कीर्त्तिमतां कीर्त्तिं प्रजेशानां महात्मनाम्।
प्रथयन्पृथिवीशानां ब्रह्मभूयाय गच्छति ॥ ५० ॥ धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मतम्। कृष्णद्वैपायनेनोक्तं पुराणं ब्रह्मवादिना ॥ ५१ ॥
मन्वन्तरेश्वराणां च यः कीर्त्तिं प्रथयेदिमाम्। देवतानामृषीणाञ्च भूरिद्रविणतेजसाम्। स सर्वैर्मुच्यते पापैः पुण्यञ्च महदाप्नुयात् ॥ ५२ ॥ यश्चेदं
श्रावयेद्विद्वान्सदा पर्वणि पर्वणि। धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय कल्पते ॥ ५३ ॥ यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः। अक्षयं सार्व
कामीयं पितॄंस्तच्चोपतिष्ठति ॥ ५४ ॥ यस्मात्पुरा ह्यनन्तीदं पुराणं तेन चोच्यते। निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ ५५ ॥ तथैव
त्रिषु वर्णेषु ये मनुष्याः प्रधानतः। इतिहासमिमं श्रुत्वा धर्माय विदधे मतिम् ॥ ५६ ॥ यावन्त्यस्य शरीरेषु रोमकूपाणि सर्वशः। तावत्कोटि
सहस्राणि वर्षाणां दिवि मोदते। ब्रह्मसायुज्यगो भूत्वा दैवतैः सह मोदते ॥ ५७ ॥ सर्व्वपापहरं पुण्यं पवित्रञ्च यशस्वि च। ब्रह्मा ददौ
शास्त्रमिदं पुराणं मातरिश्वने ॥ ५८ ॥ तस्माच्चोशनसा प्राप्तं तस्माच्चापि बृहस्पतिः। बृहस्पतिस्तु प्रोवाच सवित्रे तदनन्तरम् ॥ ५९ ॥ सविता

मृत्यवे प्राह मृत्युश्चेन्द्राय वै पुनः। इन्द्रश्चापि वसिष्ठाय सोऽपि सारस्वताय च ॥ ६० ॥ सारस्वतास्त्रिधाम्ने च त्रिधामा च शरद्वते । शरद्वतस्त्रि
विष्टाय सोऽन्तरिक्षाय दत्तवान् ॥ ६१ ॥ वर्षिणे चान्तरिक्षो वै सोऽपि त्रय्यारुणाय च। त्रय्यारुणो धनञ्जये स च प्रादात्कृतञ्जये ॥ ६२ ॥ कृत
ञ्जयात्तृणञ्जयो भरद्वाजाय सोऽप्यथ। गौतमाय भरद्वाजः सोऽपि निर्य्यन्तरे पुनः ॥ ६३ ॥ निर्यन्तरस्तु प्रोवाच तथा वाजश्रवाय च । स ददौ
सोमशुष्माय स ददौ तृणबिन्दवे ॥ ६४ ॥ तृणबिन्दुस्तु दक्षाय दक्षः प्रोवाच शक्तये। शक्तेः पराशरश्चापि गर्भस्थः श्रुतवानिदम् ॥ ६५ ॥ परा
शराज्जातुकर्णस्तस्माद्द्वैपायनः प्रभुः । द्वैपायनात्पुनश्चापि मया प्राप्तं द्विजोत्तमाः ॥ ६६ ॥ शांशपायन उवाच ॥ मया वै तत्पुनः
प्रोक्तं पुत्रायामितबुद्धये। इत्येव वाचा ब्रह्मादिगुरुणा समुदाहृता ॥ ६७ ॥ नमस्कार्य्याश्च गुरवः प्रयत्नेन मनीषिभिः। धन्यं यशस्यमायुष्यं पुण्यं
सर्वार्थसाधकम् ॥ ६८ ॥ पापघ्नं नियमेनेदं श्रोतव्यं ब्राह्मणैः सदा । नाशुचौ नापि पापाय नाप्यसंवत्सरोषिते ॥ ६९ ॥ नाश्रद्दधानाविदुषे नापु
त्राय कथञ्चन । नाहिताय प्रदातव्यं पवित्रमिदमुत्तमम् ॥ ७० ॥ अव्यक्तं वै यस्य योनिं वदन्ति व्यक्तं देहं कालमन्तर्गतञ्च । वह्निं वक्त्रं चन्द्र
सूर्य्यौ च नेत्रे दिशः श्रोत्रे घ्राणमाहुश्च वायुम् ॥ ७१ ॥ वाचो वेदांश्चान्तरिक्षं शरीरं क्षितिं पादौ तारका रोमकूपान् । सर्वाणि चाङ्गानि तथैव
तानि विद्यास्सर्वा यस्य पुच्छं वदन्ति ॥ ७२ ॥ तं देवदेवं जननं जनानां सर्व्वेषु लोकेषु प्रतिष्ठितञ्च। वरं वराणां वरदं महेश्वरं ब्रह्माणमादिं प्रयतो
नमस्ये ॥ ७३ ॥ इति श्रीमहापुराणे वायुप्रोक्ते सृष्टिवर्णनं नाम एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ छ ॥ शौनकादिऋषय ऊचुः ॥
सूत सूत महाभाग त्वया भगवता सता। व्यासप्रसादाधिगतशास्त्रसम्बोधनेन च ॥ १ ॥ अष्टादशपुराणानि सेतिहासानि चानघ । उपक्रमोपसंहार
विधिनोक्तानि कृत्स्नशः ॥ २ ॥ चतुर्दशसहस्रं च मात्स्यं प्रोक्तमतिस्फुटम् । तत्संख्यकं भविष्यञ्च प्रोक्तं पञ्चशताधिकम् ॥ ३ ॥ मार्कण्डेयं
महारम्यं प्रोक्तं नवसहस्रकम् । कथितं ब्रह्मवैवर्त्तमष्टादशसहस्रकम् ॥ ४ ॥ शतोत्तरञ्च ब्रह्माण्डं सूर्यसंख्यासहस्रकम्। अथ भागवतं दिव्य
मष्टादशसहस्रकम् ॥ ५ ॥ सहस्राणि दशैवोक्तं पुराणं ब्रह्मनामकम् । अयुतश्लोकघटितं पुराणं वामनाभिधम् ॥ ६ ॥ तथैवायुत
संख्यातं षट्शताधिकमादिकम् । त्रयोविंशतिसाहस्रमानिलं तद्व्रतं शुभम् ॥ ७ ॥ त्रयोविंशतिसाहस्रं नारदीयमुदाहृतम् । एकोनविंशसाहस्रं
वैनतेयमुदाहृतम् ॥ ८ ॥ सहस्रपञ्चपञ्चाशत्प्रोक्तं पाद्मं सुविस्तरम् । सप्तदशसहस्रन्तु कूर्मं प्रोक्तं मनोहरम् ॥ ९ ॥ चतुर्विंशति
साहस्रं सौकरं परमाद्भुतम्। एकाशीतिसहस्राणि स्कान्दमुक्तं सुविस्तृतम् ॥ १० ॥ एवमष्टादशोक्तानि पुराणानि बृहन्ति च । पुराणेष्वेषु

बहवो धर्मास्ते विनिरूपिताः ॥ ११ ॥ रागिणाञ्च विरागाणां यतीनां ब्रह्मचारिणाम् । गृहस्थानां वनस्थानां स्त्रीशूद्राणां विशेषतः ॥ १२ ॥ ब्राह्मणक्षत्रियविशां ये च सङ्करजातयः । गङ्गाद्या या महानद्यो यज्ञव्रततपांसि च ॥१३॥ अनेकविधदानानि यमाश्च नियमैः सह । योगधर्मा बहुविधाः सांख्या भागवतास्तथा ॥ १४ ॥ भक्तिमार्गा ज्ञानमार्गा वैराग्यानिलनीरजाः । उपासनविधिश्चोक्तः कर्मसंशुद्धिचेतसाम् ॥ १५ ॥ ब्राह्मं शैवं वैष्णवं च सौरं शाक्तं तथार्हतम् । षड्दर्शनानि चोक्तानि स्वभावनियतानि च ॥ १६ ॥ एतदन्यच्च विविधं पुराणेषु निरूपितम् । अतः परं किमप्यस्ति न वा बोद्धव्यमुत्तमम् ॥ १७ ॥ न ज्ञायेत यदि व्यासो गोपयेदथ वा भवान् । अत्र नः संशयं छिन्धि पूर्णः पौराणिको यतः ॥ १८ ॥ सूत उवाच ॥ शृणु शौनक वक्ष्यामि प्रश्नमेनं सुदुर्लभम् । अतिगोप्यतरं दिव्यमनाख्येयं प्रचक्षते ॥ १९ ॥ पराशरसुतो व्यासः कृत्वा पौराणिकीं कथाम् । सर्ववेदार्थघटितां चिन्तयामास चेतसि ॥ २० ॥ वर्णाश्रमवतां धर्मो मया सम्यगुदाहृतः । मुक्तिमार्गा बहुविधा उक्ता वेदाविरोधतः ॥ २१ ॥ जीवेश्वरब्रह्मभेदो निरस्तः सूत्रनिर्णये । निरूपितं परं ब्रह्म श्रुतियुक्तविचारतः ॥ २२ ॥ अक्षरं परमं ब्रह्म परमात्मा परं पदम् । यदर्थं ब्रह्मचर्यादिवानप्रस्थयतिव्रतम् ॥ २३ ॥ आचरन्ति महाप्राज्ञा धारणाञ्च पृथग्विधाम् । आसनं प्राणरोधश्च प्रत्याहारश्च धारणा ॥ २४ ॥ ध्यानं समाधिरेतानि यमैश्च नियमैः सह । अष्टाङ्गानि यदर्थञ्च चरन्ति मुनिपुङ्गवाः ॥ २५ ॥ यदर्थं कर्म कुर्वन्ति वेदाज्ञामात्रतत्पराः । परार्पणधिया सम्यग्निष्कामाः कलिलोज्झिताः ॥ २६ ॥ यज्ज्ञप्तये निराकर्त्तुं पापाचरणमात्मनः । गङ्गादितीर्थचर्याणि निषेवन्ते शुचिव्रताः ॥ २७ ॥ तद्ब्रह्म परमं शुद्धमनाद्यन्तमनामयम् । नित्यं सर्वगतं स्थाणु कूटस्थं कूटवर्जितम् ॥ २८ ॥ सर्वेन्द्रियचराभासं प्राकृतेन्द्रियवर्जितम् । दिक्कालाद्यनवच्छिन्नं नित्यं चिन्मात्रमव्ययम् ॥ २९ ॥ अध्यास्तं सर्पवद्यत्र विश्वमेतत्प्रकाशते । विश्वस्मिन्नपि चान्वेति निर्विकारश्च रज्जुवत् ॥ ३० ॥ सम्यग्विचारितं यद्वत्फेनोर्मिबुद्बुदोदकम् । तथा विचारितं ब्रह्म विश्वस्मान्न पृथग्भवेत् ॥ ३१ ॥ सर्वं ब्रह्मैव नानात्वं नास्तीति निगमा जगुः । यस्माद्भवन्ति ब्रह्माण्डकोटयो न भवन्ति च ॥ ३२ ॥ यदुन्मेषनिमेषाभ्यां जगतां प्रलयोदयौ । भवेतां या परा शक्तिर्यदाधारतया स्थिता ॥ ३३ ॥ यस्मिन्निदं यतश्चेदं येनेदं यदिदं स्मृतम् । यदज्ञानाज्जगद्भाति यस्मिन् ज्ञाते जगन्न हि ॥ ३४ ॥ असत्यं यज्जडं दुःखमवस्त्विति निरूपितम् । विपरीतमतो यद्वै सच्चिदानन्दमूर्त्तिकम् ॥ ३५ ॥ जीवे जाग्रति विश्वाख्यं स्वप्ने यत्तैजसं स्मृतम् । सुषुप्तौ प्राज्ञसंज्ञं तत्सर्वावस्थासु संस्मृतम् ॥ ३६ ॥ यच्चक्षुषां चक्षुरथ श्रोत्राणां श्रोत्रमस्ति च । त्वक् त्वचां रसनं तस्य प्राणं प्राणस्य यद्विदुः ॥ ३७ ॥ बुद्धिर्ज्ञानेन च प्राणाः क्रियाशक्त्या निरन्तरम् । यन्नेशिरे समभ्येतुं

ज्ञातुं च परमार्थतः ॥ ३८ ॥ रज्जावहिर्मरौ वारि नीलिमा गगने यथा । असद्विश्वमिदं भाति यस्मिन्नज्ञानकल्पितम् ॥ ३९ ॥ घटावच्छिन्न एवायं
महाकाशो विभिद्यते । कार्योपाधिपरिच्छिन्नं तद्वद्ध्जीवसंज्ञिकम् ॥ ४० ॥ मायया चित्रकारिण्या विचित्रगुणशीलया । ब्रह्माण्डं चित्रमतुलं यस्मिन्
भित्ताविवार्पितम् ॥ ४१ ॥ धावतोऽन्याननतिक्रान्तं वदतो वागगोचरम् । वेदवेदान्तसिद्धान्तैर्विनिर्णीतं तदक्षरम् ॥ ४२ ॥ अक्षरान्न परं किञ्चित्सा
काष्ठा सा परा गतिः । इत्येवं श्रूयते वेदे बहुधापि विचारिते ॥ ४३ ॥ अक्षरस्यात्मनश्चापि स्वात्मरूपतया स्थितम् । परमानन्दसन्दोहरूपमानन्द
विग्रहम् ॥ ४४ ॥ लीलाविलासरसिकं वल्लवीयूथमध्यगम् । शिखिपिच्छकिरीटेन भास्वद्रत्नाचितेन च ॥ ४५ ॥ उल्लसद्विद्युदाटोपकुण्डलाभ्यां विरा
जितम् । कर्णोपान्तचरन्नेत्रखञ्जरीटमनोहरम् ॥४६॥ कुञ्जकुञ्जप्रियावृन्दविलासरतिलम्पटम् । पीताम्बरधरं दिव्यं चन्दनालेपमण्डितम् ॥४७॥ अधरामृत
संसिक्तवेणुनादेन वल्लवीः । मोहयन्तञ्चिदानन्दमनङ्गमदभञ्जनम् ॥ ४८ ॥ कोटिकामकलापूर्णं कोटिचन्द्रांशुनिर्मलम् । त्रिरेखकण्ठविलसद्रत्नगुञ्जामृगा
कुलम् ॥ ४९ ॥ यमुनापुलिने तुङ्गे तमालवनकानने । कदम्बचम्पकाशोकपारिजातमनोहरे ॥ ५० ॥ शिखिपारावतशुकपिककोलाहलाकुले ।
निरोधार्थं गवामेव धावमानमितस्ततः ॥ ५१ ॥ राधाविलासरसिकं कृष्णाख्यं पुरुषं परम् । श्रुतवानस्मि वेदेभ्यो यतस्तद्गोचरोऽभवत् ॥ ५२ ॥
एवं ब्रह्मणि चिन्मात्रे निर्गुणे भेदवर्जिते । गोलोकसंज्ञिके कृष्णो दीव्यतीति श्रुतं मया ॥ ५३ ॥ नातः परतरं किञ्चिन्निगमागमयोरपि । तथापि निगमो
वक्ति ह्यक्षरात् परतः परः ॥ ५४ ॥ गोलोकवासी भगवानक्षरात्पर उच्यते । तस्मादपि परः कोऽसौ गीयते श्रुतिभिः सदा ॥ ५५ ॥ उद्दिष्टो वेद
वचनैर्विशेषो ज्ञायते कथम् । श्रुतेर्वार्थोऽन्यथा बोध्यः परतस्त्वक्षरादिति ॥ ५६ ॥ श्रुत्यर्थे संशयापन्नो व्यासः सत्यवतीसुतः । विचारयामास चिरं न
प्रपेदे यथातथम् ॥ ५७ ॥ सूत उवाच ॥ विचारयन्नपि मुनिर्नाप वेदार्थनिश्चयम् । वेदो नारायणः साक्षाद्यत्र मुह्यन्ति सूरयः ॥ ५८ ॥
तथापि महतीमार्त्तिं सतां हृदयतापिनीम् । पुनर्विचारयामास कं व्रजामि करोमि किम् ॥ ५९ ॥ पश्यामि न जगत्यस्मिन्सर्वज्ञं सर्वदर्शनम् ।
अज्ञात्वाऽन्यतमं लोके सन्देहविनिवर्त्तकम् ॥ ६० ॥ मेरोः कुहरिणीं गत्वा चचार परमं तपः । यत्र कार्त्तस्वरस्फूर्जज्ज्योत्स्नाजालैर्निरन्तरम् ॥ ६१ ॥
सदा प्रबाधते विष्वक्तमःस्तोमं दृशन्तुदम् । चकास्ते यत्र परमं कान्तारमतिसुन्दरम् ॥ ६२ ॥ नानाद्रुमलता[illegible]पक्षिनिनादितम् । क्षुत्पि
पासाभयक्रोधतापग्लानिविवर्जितम् ॥ ६३ ॥ जलाशयैर्बहुविधैः पद्मिनीखण्डमण्डितैः । जातरूपशिलाबद्धतटसञ्चारपाके. ॥ ६४ ॥ युक्तमम्भोज
पवनैः सेव्यमानं समन्ततः । शिवैरघ्यासितम्भावैर्हिंस्रैः सत्त्वैः समुज्झितम् ॥ ६५ ॥ निर्जनं दिव्यलतिकाप्रियखण्डविराजितम् । शुकैः पारावते

हंसैरुन्मदन्मत्तकोकिलम् ॥ ६६ ॥ उत्पतत्पद्मरजसां पटलामोददिङ्मुखम् । तत्रापि काञ्चिनी दिव्या गुहा परमशोभना ॥ ६७ ॥ तां प्रविश्य जिताहारो जितचित्तो जितासनः । सस्मार वेदांश्चतुरस्तदेकाग्रमना मुनिः ॥ ६८ ॥ त्रयीं जगाम शरदां शतस्य स्मरतोऽस्य हि । प्रादुरासंस्ततो वेदाश्चत्वारश्चारुदर्शनाः ॥ ६९ ॥ स्फुरत्पद्मपलाशाक्षा जटामुकुटधारिणः । कुशमुष्टिकराम्भोजा मृगत्वङ्मण्डितांसकाः ॥ ७० ॥ स्वरैः षोडशभिः वल्गद्वदनाः प्रणवान्तराः । कचवर्गोद्भवैर्वर्णैः पञ्चावयवपाणयः ॥ ७१ ॥ पवर्गदक्षचरणा वामपादास्तवर्गतः । आतरन्त्यन्तवर्णाश्च येषां कुक्षिद्वयात्मकौ ॥ ७२ ॥ नाभिनिद्राः कान्तपृष्ठा मोदरा यरलवोत्कचाः । अग्निदक्षांशरुचिरा धराग्रीवा भृतांसकाः ॥ ७३ ॥ अन्तस्थसन्धिसंस्थाना वैखरीवाग्विजृम्भिताः । अपश्यन्मथुरामेषां हृदयाम्भोजकल्पिताम् ॥ ७४ ॥ हरेर्भगवतः साक्षादाविर्भावस्थली हि सा । काशीमपश्यद्भ्रूमध्ये मायामाधारसंस्थिताम् ॥ ७५ ॥ लिङ्गदेशे ततः काञ्चीमवन्तीं नाभिमण्डले । कण्ठस्थां द्वारकामेषां प्रयागं प्राणगं तथा ॥ ७६ ॥ सव्यापसव्ययोस्तेषां गङ्गाऽपि यमुना नदी । मध्ये सरस्वती साक्षाद्गयाक्षेत्रं तथानने ॥ ७७ ॥ हनुग्रीवामध्यगतं प्रभासक्षेत्रमुत्तमम् । बदर्याश्रममेतेषां ब्रह्मरन्ध्रे ददर्श ह ॥ ७८ ॥ पौण्ड्रवर्धननेपालपीठं नयनयोर्युगे । पीठं पूर्णगिरिंनाम ललाटे समदृश्यत ॥ ७९ ॥ कण्ठे च मथुरापीठं काञ्चीपीठं कटिस्थितम् । जालन्धरं तथा पीठं स्तनदेशेष्वदृश्यत ॥ ८० ॥ भृगुपीठं कर्णदेशे ह्ययोध्यां नासिकापुटे । ब्रह्मरन्ध्रे स्थितं ब्राह्मं शैवं सीमन्तसीमनि ॥ ८१ ॥ शाक्तं जिह्वाग्रधिषणं वैष्णवं हृदयाम्बुजे । सौरं चक्षुःप्रदेशस्थं बौद्धञ्छायासु सङ्गतम् ॥ ८२ ॥ सौत्रामणिं कण्ठदेशे पशुबन्धमथोरसि । वाजपेयं कटितटे ह्यग्निहोत्रं तथानने ॥ ८३ ॥ अश्वमेधं कटितटे नरमेधमथोदरे । राजसूयं शिरोदेशे आवसथ्यं तथाऽधरे ॥ ८४ ॥ ऊर्ध्वोष्ठे दक्षिणाग्निश्च गार्हपत्यं मुखान्तरे । हव्यं श्रुतौ मन्त्रभेदांस्तया रोमस्ववस्थितान् । भृत्यैरिव महाराजं पुराणैर्न्यायमिश्रितैः ॥ ८५ ॥ संहिताभिश्च तन्त्रैश्च पृथक्पृथगुपासितान् । कर्मज्ञानोपासनाभिर्जनानुग्रहकारकान् ॥ ८६ ॥ दृष्ट्वा सुविस्मितमना मुनिः कृष्णो बभूव तान् । ब्रह्मतेजोमयान्दिव्यांस्तपतोऽर्कानिव च्युतान् । ज्वलतोऽग्नीनिवोदर्कान्कोटीन्दुसमदर्शनान् ॥ ८७ ॥ ववन्दे सहसोत्थाय दण्डवत्पतितो मुनिः । कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहमितीरयन् ॥ ८८ ॥ अद्य मे सफलं जन्म अद्य मे सफलं मनः । अद्य मे सफलश्चायुर्यद्भवन्तोऽक्षिगोचराः ॥ ८९ ॥ अलौकिकं लौकिकञ्च यत् किञ्चिदपि विद्यते । न तद्वोऽविदितं वेद्यं भूतं भव्यं भवच्च यत् ॥ ९० ॥ न प्रवृत्तिफला यूयं दर्शयन्तोऽपि तान्सदा । यदृच्छाकरसङ्कोचविधानायेह रागिणाम् ॥ ९१ ॥ प्रपञ्चस्यापि मिथ्यात्वे ब्रह्मत्वे वा विधीतरौ । न मृषारागविषयौ तत्सङ्कोचविधिक्षयौ ॥ ९२ ॥ अतो लोकहितैर्नूनं परमार्थनिरूपणे । स्वोक्ताः स्वर्गादिविषयाः नश्वरा इति निन्दिताः ॥ ९३ ॥

अधिकारिविभेदेन कर्मज्ञानोपदेशतः । त्रातं सर्वं जगन्नूनं शब्दब्रह्मात्ममूर्त्तिभिः ॥९४॥ अतोऽहं प्रष्टुमिच्छामि भवन्तश्चेत्कृपालवः । कर्मणां फलमादिष्टं
सर्गः कामैकचेतसाम् ॥९५॥ ईशार्पितधियां पुंसां कृतस्यापि च कर्मणः । चित्तशुद्धिस्ततो ज्ञानं मोक्षश्च तदनन्तरम् ॥९६॥ मोक्षो ब्रह्मैक्यमित्येवं सच्चि
दानन्दमेव यत् । सर्वं समाप्यते तस्मिञ्ज्ञाते यद्धि कृताकृतम् ॥ ९७ ॥ यन्निःसङ्गं चिदाकाशं ज्ञानरूपमसंवृतम् । निरीहमचलं शुद्धमगुणं व्यापकं
स्मृतम् ॥ ९८ ॥ विकारेषु विनश्यत्सु निर्विकारं न नश्यति । यथान्धतमसा व्याप्तलोकस्य रविरोजसा ॥ ९९ ॥ लोहस्येव मणिस्तद्वदरणिश्चानले यथा ।
यदाभासेन सा सत्तां प्रतिपद्य विजृम्भते ॥ १०० ॥ जीवेश्वरादिरूपेण विश्वाकारेण चाप्यहो । तस्यामपि प्रलीनायां कूटस्थश्च यदेकलम् ॥१०१ ॥ भव
द्भिरेवं निर्णीतं तत्तथैव न संशयः । तथापि मम जिज्ञासा वर्त्तते केवलं हृदि ॥१०२॥ अतोऽपि परमं किञ्चिद्वर्त्तते किल वा न वा । तद्वदन्तु महाभागा
भवन्तस्तत्त्वदर्शनाः ॥ १०३ ॥ यच्छ्रवः फलमेवेह जनुषो मे कृतार्थता । एवं ब्रुवन्तमनघं व्यासं सत्यवतीसुतम् । साधु साध्विति सङ्कीर्त्य प्रत्यूचु
र्निगमा वचः ॥ १०४ ॥ वेदा ऊचुः ॥ साधु साधु महाप्राज्ञ विष्णुरात्मा शरीरिणाम् । अजोऽपि जन्म सम्पद्य लोकानुग्रहमीहसे ॥ १०५ ॥ अन्यथा
ते न घटते संसारकर्म्मबन्धनम् । अस्पृष्टो मायया देव्या कदाचिज्ज्ञानगूहया ॥ १०६ ॥ बिभर्षि स्वेच्छया रूपं स्वेच्छयैव निगूहसे । अस्मत्सम्मत
एवार्थो भवता सम्प्रदर्शितः ॥ १०७ ॥ पुराणेष्वितिहासेषु सूत्रेष्वपि च नैकधा । अक्षरं ब्रह्म परमं सर्वकारणकारणम् ॥ १०८ ॥ तस्यात्मनोऽप्यात्म
भावतया पुष्पस्य गन्धवत् । रसवद्वा स्थितं रूपमवेहि परमं हि तत् ॥ १०९ ॥ अनुभूतं तदस्माभिर्जाते प्राकृतिके लये । अक्षरात्परतस्तस्माद्य
त्परं केवलो रसः । न च तत्र वयं शक्ताः शब्दातीते तदात्मकाः ॥ ११० ॥ इति श्रीमहापुराणे वायुप्रोक्ते व्याससंशयापनोदनं नाम
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ वायुरुवाच ॥ अत ऊर्द्ध्वं प्रवक्ष्यामि गयामाहात्म्यमुत्तमम् । यच्छ्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्रसंशयः
॥ १ ॥ सूत उवाच ॥ सनकाद्यैर्म्महाभागैर्देवर्षिः स च नारदः । सनत्कुमारं पप्रच्छ प्रणम्य विधिपूर्व्वकम् ॥ २ ॥ नारद उवाच ॥ सनत्कुमार
मे ब्रूहि तीर्थं तीर्थोत्तमोत्तमम् । तारकं सर्वभूतानां पठतां शृण्वतां तथा ॥ ३ ॥ सनत्कुमार उवाच ॥ वक्ष्ये तीर्थवरं पुण्यं श्राद्धादौ सर्वतारकम् ।
गयातीर्थं सर्वदेशे तीर्थेभ्योऽप्याधिकं शृणु ॥ ४ ॥ गयासुरस्तपस्तेपे ब्रह्मणा क्रतवेऽर्थितः । प्राप्तस्य तस्य शिरसि शिलां धर्मो ह्यधारयत् ॥ ५ ॥ तत्र
ब्रह्माऽकरोद्यागं स्थितश्चापि गदाधरः । फल्गुतीर्थादिरूपेण निश्चलार्थमहर्निशम् । गयासुरस्य विप्रेन्द्रब्रह्माद्यैर्देवतैः सह ॥ ६ ॥ कृतयज्ञो ददौ ब्रह्मा
ब्राह्मणेभ्यो गृहादिकम् । श्वेतकल्पे तु वाराहे गयायागमकारयत् ॥७॥ गयानाम्ना गया ख्याता क्षेत्रं ब्रह्माभिकांक्षितम् । कांक्षन्ति पितरः

भीरवः ॥ ८ ॥ गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति। गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत्। पद्भ्यामपि जलं स्पृष्ट्वा सोऽस्मभ्यं किं न
दास्यति ॥ ९ ॥ गयां गत्वान्नदाता यः पितरस्तेन पुत्रिणः। पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम्। नो चेत्पञ्चदशाहं वा सप्तरात्रिं त्रिरात्रिकम् ॥ १० ॥
महाकल्पकृतं पापं गयां प्राप्य विनश्यति। पिण्डं दद्याच्च पित्रादेरात्मनोऽपि तिलैर्विना ॥११॥ ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः। पापं तत्सङ्गजं
सर्व्वं गयाश्राद्धाद्विनश्यति ॥ १२ ॥ आत्मजोऽप्यन्यजो वापि गयाभूमौ यदा तदा। यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ॥ १३ ॥ ब्रह्मज्ञानं
गयाश्राद्धं गोगृहे मरणं तथा। वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्व्विधा ॥ १४ ॥ ब्रह्मज्ञानेन किं कार्य्यं गोगृहे मरणेन किम्। वासेन किं कुरुक्षेत्रे यदि
पुत्रो गयां व्रजेत् ॥ १५ ॥ गयायां सर्व्वकालेषु पिण्डं दद्याद्विचक्षणः। अधिमासे जन्मदिने चास्तेऽपि गुरुशुक्रयोः॥१६॥न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपि
बृहस्पतौ। तथा दैवप्रमादेन प्रहतेषु व्रणेषु च। पुनः कर्म्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक् ॥ १७ ॥ सकृद्गयाभिगमनं सकृत्पिण्डस्य पातनम्।
दुर्लभं किं पुनर्न्नित्यमस्मिन्नेव व्यवस्थितिः ॥ १८ ॥ प्रमादान्म्रियते क्षेत्रे ब्रह्मादेर्मुक्तिदायके। ब्रह्मज्ञानाद्यथा मुक्तिर्लभ्यते नात्र संशयः ॥ १९ ॥
कीटकादिमृतानाञ्च पितॄणां तारणाय च। तस्मात्सर्व्वप्रयत्नेन कर्त्तव्यं सुविचक्षणैः ॥ २० ॥ ब्रह्मप्रकल्पितान्विप्रान्हव्यकव्यादिनाऽर्च्चयेत्।
तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः ॥ २१ ॥ मुण्डनं चोपवासश्च सर्व्वतीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥२२॥
दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः। दण्डं न्यस्त्वा विष्णुपदे पितृभिः सह मुच्यते ॥ २३ ॥ न दण्डी किल्बिषं धत्ते पुण्यं वा परमार्थतः।
अतः सर्व्वां क्रियां त्यक्त्वा विष्णुं ध्यायति भावुकः ॥ २४ ॥ संन्यसेत्सर्व्वकर्म्माणि वेदमेकं न संन्यसेत्। मुण्डं कुर्य्याच्च पूर्व्वेऽस्मिन्पश्चिमे दक्षिणो
त्तरे ॥ २५ ॥ सार्द्धं क्रोशद्वयं मानं गयेति ब्रह्मणेरितम्। पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥ २६ ॥ तन्मध्ये सर्व्वतीर्थानि त्रैलोक्ये यानि सन्ति
वै। श्राद्धकृद्यो गयाक्षेत्रे पितॄणामनृणो हि सः ॥ २७ ॥ शिरसि श्राद्धकृद्यस्तु कुलानां शतमुद्धरेत्। गृहाच्चलितमात्रेण गयायां गमनं प्रति। स्वर्गा
रोहणसोपानं पितॄणाञ्च पदे पदे ॥ २८ ॥ पदे पदेऽश्वमेधस्य यत्फलं गच्छतो गयाम्। तत्फलञ्च भवेन्नूनं समग्रं नात्र संशयः ॥ २९ ॥ पायसे
नापि चरुणा सक्तुना पिष्टकेन वा। तण्डुलैः फलमूलाद्यैर्गयायां पिण्डपातनम् ॥ ३० ॥ तिलकल्केन खण्डेन गुडेन सघृतेन वा। केवलेनैव दध्ना
वा ऊर्जेन मधुनाऽथ वा ॥ ३१ ॥ पिण्याकं सघृतं खण्डं पितृभ्योऽक्षयमित्युत। इज्यते वार्त्तवं भोज्यं हविष्यान्नं मुनीरितम् ॥ ३२ ॥ एकतः
सर्व्ववस्तूनि रसवन्ति मधूनि हि। स्मृत्वा गदाधराद्यञ्जं फल्गुतीर्थाम्बु चैकतः ॥ ३३ ॥ पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनम्। दक्षिणा चात्र

सङ्कल्पस्तीर्थश्राद्धेष्वयं विधिः ॥ ३४ ॥ नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः । सकारुण्येन कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः ॥ ३५ ॥ अन्यत्रावा
हिताः काले पितरो यान्त्यमुं प्रति । तीर्थे सदा वसन्त्येते तस्मादावाहनं न हि ॥ ३६ ॥ तीर्थश्राद्धं प्रयच्छद्भिः पुरुषैः फलकाङ्क्षिभिः । कामं क्रोधं
तथा लोभं त्यक्त्वा कार्य्या क्रियाऽनिशम् ॥ ३७ ॥ ब्रह्मचार्य्येकभोजी च भूशायी सत्यवाक्छुचिः । सर्व्वभूतहिते रक्तः स तीर्थफलमश्नुते ॥ ३८ ॥
तीर्थान्यनुसरन्धीरः पाषण्डं पूर्व्वतस्त्यजेत् । पाषण्डः स च विज्ञेयो यो भवेत्कामकारतः ॥ ३९ ॥ तीर्थेषु ये नरा धीराः कर्म्म कुर्व्वन्ति तद्गताः ।
यथा ब्रह्मविदो वेद्यं वस्तु चानन्यचेतसः । प्रविशन्ति परेशाख्यं ब्रह्म ब्रह्मपरायणाः ॥ ४० ॥ यास्ते वैतरणी नाम नदी त्रैलोक्यविश्रुता ।
साऽवतीर्णा गयाक्षेत्रे पितॄणां तारणाय वै । स्नातो गोदो वैतरण्यां त्रिःसप्तकुलमुद्धरेत् ॥४१ ॥ तथाऽक्षयवटं गत्वा विप्रान्सन्तोषयिष्यति ।
ब्रह्मप्रकल्पितान्विप्रान्हव्यकव्यादिनाऽर्च्चयेत् । तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः ॥ ४२ ॥ गयायां न हि तत्स्थानं यत्र तीर्थं न विद्यते ।
सान्निध्यं सर्व्वतीर्थानां गयातीर्थं ततो वरम् ॥ ४३ ॥ मीने मेषे स्थिते सूर्य्ये कन्यायां कार्मुके घटे । दुर्ल्लभं त्रिषु लोकेषु गयायां पिण्डपातनम्
॥ ४४ ॥ मकरे वर्त्तमाने च ग्रहणे चन्द्रसूर्य्ययोः । दुर्ल्लभं त्रिषु लोकेषु गयाश्राद्धं सुदुर्ल्लभम् ॥ ४५ ॥ गयायां पिण्डदानेन यत्फलं लभते नरः ।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ॥ ४६ ॥ इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ छ ॥
नारद उवाच ॥ गयासुरः कथं जातः किंप्रभावः किमात्मकः । तपस्तप्तं कथं तेन कथं देहपवित्रता ॥ १ ॥ सनत्कुमार उवाच ॥
विष्णोर्नाभ्यम्बुजाज्जातो ब्रह्मा लोकपितामहः । प्रजाः ससर्ज संप्रोक्तः पूर्व्वं देवेन विष्णुना ॥ २ ॥ आसुरेणैव भावेन ह्यसुरानसृजत्पुरा ।
सौमनस्येन भावेन देवान्सुमनसोऽसृजत् ॥ ३ ॥ गयासुरोऽसुराणाञ्च महाबलपराक्रमः । योजनानां सपादञ्च शतं तस्योच्छ्रयः स्मृतः ॥ ४ ॥
स्थूलः षष्टियोजनानां श्रेष्ठोऽसौ वैष्णवः स्मृतः । कोलाहलगिरिवरे तपस्तेपे सुदारुणम् ॥ ५ ॥ बहुवर्षसहस्राणि निरुच्छ्वासं स्थिरोऽभवत् । तत्त
पस्तापिता देवाः संक्षोभं परमं गताः ॥ ६ ॥ ब्रह्मलोकं गता देवाः प्रोचुस्तेऽथ पितामहम् । गयासुराद्रक्ष देव ब्रह्मा देवांस्ततोऽब्रवीत् ॥ ७ ॥
व्रजामः शङ्करं देवा ब्रह्माद्याश्च गताः शिवम् । कैलासे चाब्रुवन्नत्वा रक्ष देव महासुरात् ॥ ८ ॥ ब्रह्माद्यानब्रवीच्छम्भुर्व्रजामः शरणं हरिम् । क्षीराब्धौ
देवदेवेशः स नः श्रेयो विधास्यति । ब्रह्मा महेश्वरो देवा विष्णुं नत्वा प्रतुष्टुवुः ॥ ९ ॥ देवा ऊचुः ॥ ॐ नमो विष्णवे भर्त्रे सर्व्वेषां
प्रभविष्णवे । रोचिष्णवे जिष्णवे च राक्षसादिग्रसिष्णवे ॥ १० ॥ धरिष्णवेऽखिलस्यास्य योगिनां पारयिष्णवे । वर्द्धिष्णवे ह्यनन्ताय नमो भ्राजिष्णवे

॥ ११ ॥ सनत्कुमार उवाच ॥ एवं स्तुतो वासुदेवः सुराणां दर्शनं ददौ । किमर्थमागता देवा विष्णुनोक्तास्तमब्रुवन् ॥ १२ ॥
पुरभयाद्देव रक्षास्मानब्रवीद्धरिम् । ब्रह्माद्या यान्तु तं दैत्यमागमिष्याम्यहं ततः ॥ १३ ॥ केशवो गरुडारूढो वरं दातुं गयासुरे । सर्व्वे स्वं स्वं
स्थाय ययुर्वाहनमुत्तमम् ॥ १४ ॥ ऊचुस्तं वासुदेवाद्याः किमर्थं तप्यते त्वया । सन्तुष्टाः स्वागताः सर्वे वरं ब्रूहि गयासुर ॥ १५ ॥ गयासुर
व ॥ यदि तुष्टाः स्थ मे देवा ब्रह्मविष्णुमहेश्वराः । सर्व्वदेवद्विजातिभ्यो यज्ञतीर्थशिलोच्चयात् ॥ १६ ॥ देवेभ्योऽतिपवित्रोऽहमृषिभ्योऽपि शिवाव्य
। मन्त्रेभ्यो देवदेवेभ्यो योगिभ्यश्चापि सर्व्वशः ॥१७॥ न्यासिभ्यश्चापि कर्म्मिभ्यो धर्म्मिभ्यश्च तथा पुनः । ज्ञातिभ्योऽतिपवित्रेभ्यः पवित्रः स्यां
सुराः ॥ १८ ॥ पवित्रमस्तु तं देवा दैत्यमुक्त्वा ययुर्दिवम् । दैत्यं दृष्ट्वा च स्पृष्ट्वा च सर्व्वे हरिपुरं ययुः ॥ १९ ॥ शून्यं लोकत्रयं जातं शून्या
ुरी ह्यभूत् । यम इन्द्रादिभिः सार्द्धं ब्रह्मलोकं ततोऽगमत् ॥ २० ॥ ब्रह्माणमूचिरे देवा गयासुरविलोपिताः । त्वया दत्तोऽधिकारो वै गृहाण त्वं
मह ॥ २१ ॥ ब्रह्माब्रवीत्ततो देवान्व्रजामो विष्णुमव्ययम् । ब्रह्मादयोऽब्रुवन्विष्णुं त्वया दत्तवरेऽसुरे ॥ २२ ॥ तद्दर्शनाद्ययुः स्वर्गं शून्यं लोक
ाभूत् । दैवैरुक्तो वासुदेवो ब्रह्माणं स वचोऽब्रवीत् ॥ २३ ॥ गत्वासुरं प्रार्थयस्व यज्ञार्थं देहि देहकम् । विष्णूक्तः स सुरो ब्रह्मा गत्वाऽपश्यन्महासु
॥ २४ ॥ गयासुरोऽब्रवीद्दृष्ट्वा ब्रह्माणं त्रिदशैः सह । संपूज्योत्थाय विधिवत्प्रणतः श्रद्धयान्वितः ॥ २५ ॥ गयासुर उवाच ॥ अद्य मे
ं जन्म अद्य मे सफलं तपः । यदागतोऽतिथिर्ब्रह्मा सर्व्वं प्राप्तं मयाद्य वै ॥ २६ ॥ योगिन्योगाङ्गवित्सर्व्वलोकस्वामिन्पितर्गुरो । यदर्थमा
ब्रह्मंस्तत्कार्य्यं करवाण्यहम् ॥ २७ ॥ ब्रह्मोवाच ॥ पृथिव्यां यानि तीर्थानि दृष्टानि भ्रमता मया । यज्ञार्थं न तु ते तानि पवित्राणि शरी
॥ २८ ॥ त्वया देहे पवित्रत्वं प्राप्तं विष्णुप्रसादतः । अतः पवित्रं देहं त्वं यज्ञार्थं देहि मेऽसुर ॥ २९ ॥ गयासुर उवाच ॥ धन्योऽहं देव
यद्देहं प्रार्थ्यते त्वया । पितृवंशः कृतार्थो मे देहे यागं करोषि चेत् ॥ ३० ॥ त्वयैवोत्पादितो देहः पवित्रस्तु त्वया कृतः । सर्व्वेषामुपकाराय
ऽवश्यं भवत्विति ॥ ३१ ॥ इत्युक्त्वा सोऽपतद्भूमौ श्वेतकल्पे गयासुरः । नैर्ऋतीं दिशमाश्रित्य तदा कोलाहले गिरौ ॥ ३२ ॥ शिरः कृत्वोत्तरे
पादौ कृत्वा तु दक्षिणे । ब्रह्मा सम्भृतसम्भारो मानसानृत्विजोऽसृजत् ॥ ३३ ॥ अग्निशर्माणममृतं शौनकं याज्ञवल्क्यं मृदुम् । कुथुमिं वेद
डल्यं हारितं काश्यपं कृपम् ॥३४॥ गर्गं कौशिकवासिष्ठौ मुनिं भार्गवमव्ययम् । वृद्धं पाराशरं कण्वं माण्डव्यं श्रुतिकेवलम् ॥ ३५ ॥ श्वेतं सुतालं
सुहोत्रं कङ्कमेव च । लौकाक्षिश्च महाबाहुं जैगीषव्यं तथैव च ॥ ३६ ॥ दधिपञ्चमुखं विप्रमृषभं कर्कमेव च । कात्यायनं गोभिलञ्च मुनिमुग्र

महाव्रतम् ॥ ३७ ॥ सुपालकं गौतमञ्च तथा वेदशिरोव्रतम् । जटामालिनमव्यग्रं चाट्टहासञ्च दारुणम् ॥ ३८ ॥ आत्रेयं चाप्यङ्गिरसमौपमन्युं महाव्रतम् । गोकर्णञ्च गुहावासं शिखण्डिनमुमाव्रतम् ॥ ३९ ॥ एतानन्यांश्च विप्रेन्द्रान्वेधा लोकपितामहः । परिकल्प्याकरोद्यागं गयासुरशरीरके ॥ ४० ॥ अग्निशर्मापि पश्चाग्रीन्मुखादेतानथासृजत् । दक्षिणाग्निं गार्हपत्याहवनीयौ तपोऽव्ययः ॥ ४१ ॥ सत्यावसथ्यौ देवर्षे येषु यज्ञाः प्रतिष्ठिताः । यज्ञस्य च प्रतिष्ठार्थं विप्रेभ्यो दक्षिणां ददौ ॥ ४२ ॥ हुत्वा पूर्णाहुतिं ब्रह्मा स्नात्वा चावभृथेन तु । यज्ञयूपं सुरैः सार्द्धं समानीय व्यरोपयत् ॥ ४३ ॥ ब्रह्मणः सरसां श्रेष्ठे सरस्येवाश्रितं शुभम् । चलितश्चाकितो ब्रह्मा धर्म्मराजमभाषत ॥ ४४ ॥ जाता गृहे तव शिला समानीयाविचारयन् । दैत्यस्य शीघ्रं शिरसि तां धारय ममाज्ञया ॥ ४५ ॥ निश्चलार्थं यमः श्रुत्वा धारयन्मस्तके शिलाम् । शिलायां धारितायान्तु सशिलश्चासुरोऽचलत् ॥४६॥ देवानूचेऽथ रुद्रादींश्छिलायां निश्चलाः किल । तिष्ठन्तु देवाः सकलास्तथेत्युक्त्वा च ते स्थिताः ॥४७॥ देवाः पादैर्लंघयित्वा तथापि चलितोऽसुरः । ब्रह्माथ व्याकुलो विष्णुं गतः क्षीराब्धिशायिनम् । तुष्टाव प्रणतो भूत्वा नत्वा चादृत्य तं प्रभुम् ॥ ४८ ॥ ब्रह्मोवाच ॥ ब्रह्माण्डस्य पते नाथ नमामि जगतां पतिम् । गतिं कीर्त्तिमतां नृणां भुक्तिमुक्तिप्रदायकम् ॥४९॥ विष्वक्सेनोऽब्रवीद्विष्णुं देव त्वां स्तौति पद्मजः । हरिराहानय त्वं तं विष्णूक्तः स तमानयत् । अजमूचे हरिः कस्मादागतोऽसि वदस्व तत् ॥ ५० ॥ ब्रह्मोवाच ॥ देवदेव कृते यागे प्रचचाल गयासुरः । शिलायां देवरूपिण्यां न्यस्तायां तस्य मस्तके ॥५१॥ रुद्रादिषु च देवेषु संस्थितेष्वसुरोऽचलत् । इदानीं निश्चलार्थं हि प्रसादं कुरु माधव ॥५२॥ ब्रह्मणो वचनं श्रुत्वा ह्याकृष्य स्वशरीरतः । मूर्त्तिं ददौ निश्चलार्थं ब्रह्मणे भगवान्हरिः ॥५३॥ आनीय मूर्त्तिं ब्रह्मापि शिलायां समधारयत् । तथापि चलितं वीक्ष्य पुनर्देवमथाह्वयत् ॥५४॥ आगत्य विष्णुः क्षीराब्धेः शिलायां संस्थितोऽभवत् । जनार्दनाभिधानेन पुण्डरीकेति नामतः । शिलायां निश्चलार्थं हि स्वयमादिगदाधरः ॥५५॥ निश्चलार्थं पञ्चधासीच्छिलायां प्रपितामहः । पितामहोऽथ फल्ग्वीशः केदारः कनकेश्वरः ॥ ५६ ॥ ब्रह्मा स्थितः स्वयं तत्र गजरूपी विनायकः । गयादित्यश्चोत्तरार्को दक्षिणार्कस्त्रिधा रविः ॥५७॥ लक्ष्मीः सीताभिधानेन गौरी च मङ्गलाह्वया । गायत्री चैव सावित्री त्रिसन्ध्या च सरस्वती ॥ ५८ ॥ इन्द्रो बृहस्पतिः पूषा वसवोऽष्टौ महाबलाः । विश्वेदेवाश्चाश्विनेयौ मारुतो विश्वनायकः । सयक्षोरगगन्धर्वास्तस्थुर्देवाः स्वशक्तिभिः ॥ ५९ ॥ आद्यया गदया चासौ यस्माद्दैत्यः स्थिरीकृतः । स्थित इत्येव हरिणा तस्मादादिगदाधरः ॥६०॥ ऊचे गयासुरो देवान्किमर्थं वञ्चितो ह्यहम् । यज्ञार्थं ब्रह्मणे दत्तं शरीरममलं मया । विष्णोर्वचनमात्रेण किं न स्यां निश्चलो ह्यहम् ॥ ६१ ॥ यत्सुरैः पीडितोऽत्यर्थं गदया हरिणा तथा । पीडितो यद्यहं

देवाः प्रसन्नाः सन्तु सर्वदा ॥ ६२ ॥ गदाधरादयस्तुष्टाः प्रोचुः सार्द्धं गयासुरम् । वरं ब्रूहि प्रसन्नाः स्मो देवानूचे गयासुरः ॥ ६३ ॥ यावत्पृथ्वी पर्वताश्च यावच्चन्द्रार्कतारकाः । तावच्छिलायां तिष्ठन्तु ब्रह्मविष्णुमहेश्वराः । अन्ये च सकला देवा मन्नाम्ना क्षेत्रमस्तु वै ॥ ६४ ॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । तन्मध्ये सर्वतीर्थानि प्रयच्छन्तु हितं नृणाम् ॥ ६५ ॥ स्नानादितर्पणं कृत्वा पिण्डदानात्फलाधिकम् । महात्मा वै सहस्रञ्च कुलानां चोद्धरेन्नरः ॥६६॥ व्यक्ताव्यक्तस्वरूपेण यूयं तिष्ठत सर्वदा । गदाधरः स्वयं लोकाद्ध्यात्सर्वाघनाशनात् ॥६७॥ श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते । ब्रह्महत्यादिकं पापं विनश्यतु च सेविनाम् ॥ ६८ ॥ नैमिषं पुष्करं गङ्गा प्रयागश्चाविमुक्तिकम् । एतान्यन्यानि तीर्थानि दिवि भुव्यन्तरिक्षतः । समायान्तु सदा नृणां प्रयच्छन्तु हितं सुराः ॥ ६९ ॥ किं बहूक्त्या सुरगणा युष्मास्वेकापि देवता । चेन्न तिष्ठेदहं चापि समयः प्रतिपाल्यताम् ॥ ७० ॥ गयासुरवचः श्रुत्वा प्रोचुर्विष्ण्वादयः सुराः । त्वया यत्प्रार्थितं सर्व्वं तद्भविष्यत्यसंशयम् ॥ ७१ ॥ अस्मत्पादानर्चयित्वा यास्यन्ति परमां गतिम् । देवैर्दत्तवरो दैत्यो हर्षितो निश्चलोऽभवत् ॥७२॥ स्थितेषु चैव देवेषु ब्राह्मणेभ्यो ददावजः । ग्रामांश्च पञ्चपञ्चाशत्पञ्चक्रोशीं गयां तथा । गृहान्कृत्वा ददौ दिव्यान्सर्व्वोपस्करसंयुतान् ॥ ७३ ॥ कामधेनुं कल्पवृक्षं पारिजातादिकांस्तरून् । महानदीं क्षीरवहां घृतकुल्यास्तथैव च ॥ ७४ ॥ मधुश्रवां मधुकुल्यां दध्याद्याढ्यसरांसि च । सुवर्णदीर्घिकां चैव बहूनन्नादिपर्व्वतान् ॥ ७५ ॥ भक्ष्यभोज्यफलादींश्च सर्व्वं ब्रह्मा सृजन्ददौ । न याचयध्वं विप्रेन्द्रा अन्यानुक्त्वा ददावजः ॥ ७६ ॥ दत्त्वा ययौ ब्रह्मलोकं नत्वा ह्यादिगदाधरम् । धर्म्मारण्ये तत्र धर्म्मं याजयित्वा ययाचिरे ॥ ७७ ॥ धर्म्मयागे च लोभाद्वै प्रतिगृह्य धनादिकम् । ततो ब्रह्म समागत्य ब्राह्मणांस्ताञ्छशाप ह ॥ ७८ ॥ कृतवन्तो यतो लोभं मद्दत्तेष्वखिलेष्वपि । तस्मात्तृणाधिका यूयं भविष्यन्ति सदा द्विजाः ॥ ७९ ॥ युष्माकं स्याद्वारिवहा नदी पाषाणपर्व्वताः । नद्यादयो वारिवहा मृन्मयाश्च तथा गृहाः ॥८०॥ कामधेनुः कल्पवृक्षो मह्येकमुपतिष्ठताम् । एवं शप्ता ब्रह्मणा ते प्रार्थयन्तोऽब्रुवन्नजम्॥८१॥ त्वया यद्दत्तमखिलं तत्सर्वं शापतो गतम् । जीवनार्थं प्रसादं नो भगवान्कर्त्तुमर्हसि ॥ ८२ ॥ तच्छ्रुत्वा ब्राह्मणान्ब्रह्मा प्रोवाचेदं दयान्वितः । तीर्थोपजीविका यूयमाचन्द्रार्कं भविष्यथ ॥ ८३ ॥ लोकाः पुण्या गयायां ये श्राद्धिनो ब्रह्मलोकगाः । युष्मान्ये पूजयिष्यन्ति तैरहं पूजितः सदा ॥ ८४ ॥ आक्रान्तं दैत्यजठरं धर्म्मेण विरजाद्रिणा । नाभिकूपसमीपे तु देवी या विरजा स्थिता । तत्र पिण्डादिकं कृत्वा त्रिःसप्तकुलमुद्धरेत् ॥ ८५ ॥ महेन्द्रागिरिणा तस्य कृतौ पादौ सुनिश्चलौ । तत्र पिण्डादिकृत्सप्त कुलान्युद्धरते नरः ॥ ८६ ॥ इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ छ ॥ ॥ छ ॥

नारद उवाच ॥ कथं शिला समुत्पन्ना ययाक्रान्तो गयासुरः । किं रूपं किं च माहात्म्यं तस्याः किं वद नाम च ॥ १ ॥ सनत्कुमार उवाच ॥
आसीद्धर्म्मो महातेजाः सर्व्वविज्ञानपारगः । विश्वरूपा च तत्पत्नी भर्त्तृव्रतपरायणा ॥ २ ॥ तस्यां धर्म्मात्समुत्पन्ना कन्या धर्म्मव्रता सती । सर्व्व
लक्षणसम्पन्ना लक्ष्मीरिव गुणाधिका ॥ ३ ॥ तस्यां ये तु गुणा ह्यासंस्ते तिष्ठन्ति जगत्त्रये । धर्म्मो धर्म्मव्रतायास्तु त्रिषु लोकेषु मार्गयन् ॥ ४ ॥ नानु
रूपं वरं लेभे धर्म्मोऽथ वरसिद्धये । तपः कुरु वरार्थं त्वं तथेत्युक्त्वा वनं ययौ ॥ ५ ॥ कन्या सा च तपस्तेपे सर्व्वेषां दुष्करञ्च यत् । वायुभक्षा
श्वेतकल्पे युगानामयुतं पुरा ॥ ६ ॥ ब्रह्मणो मानसः पुत्रो मरीचिर्नाम विश्रुतः । पर्य्यटन्पृथिवीं सर्व्वां कन्यारत्नं ददर्श सः ॥ ७ ॥ रूपयौवनसम्पन्नां
परमे तपसि स्थिताम् । पप्रच्छाथ मरीचिस्तां का त्वं कस्यापि तद्वद ॥ ८ ॥ रूपेणानेन मां भीरु विमोहयसि सुव्रते । ब्रह्मात्मजोऽहं विख्यातो
मरीचिर्व्वेदपारगः ॥ ९ ॥ मरीचेर्व्वचनं श्रुत्वा कन्या प्रोवाच तं मुनिम् । अहं धर्म्मव्रता नाम धर्म्मपुत्री तपोऽन्विता ॥ १० ॥ पतिव्रतार्थं विप्रेन्द्र
चरामि परमं तपः । धर्म्मव्रतां मरीचिस्तामुवाच प्रीतिपूर्व्वकम् ॥ ११ ॥ पतिव्रता दर्शनान्मे भविष्यसि शुभव्रते । पतिव्रतेच्छया पृथ्वीं विचरामि
ह्यहर्निशम् ॥ १२ ॥ त्वञ्चेत्पतिव्रता जाता भजे त्वां भज मां वरम् । लोके न त्वादृशी कन्या मम तुल्यो न ते वरः ॥ १३ ॥ धर्म्मव्रते धर्म्मपत्नी
तस्मात्त्वं भव मेऽधुना । धर्म्मव्रता मुनिं प्राह धर्म्मं याचय सुव्रत ॥ १४ ॥ तच्छ्रुत्वा धर्म्ममगमन्मुनिं धर्मो ददर्श ह । तेजःपुञ्जं वरं नत्वा आसना
र्घ्यादिनार्च्चयत् ॥ १५ ॥ किमर्थमागतः पृष्टो मरीचिर्धर्म्ममब्रवीत् । कन्यार्थं भ्रमता पृथ्वीं दृष्टा ते कन्यका वरा । मह्यं कन्याञ्च तां देहि श्रेयस्तव
भविष्यति ॥ १६ ॥ अर्घ्यादिना समभ्यर्च्य धर्म्मः प्रोचे तथेति तम् । धर्म्मव्रतां समानीय दत्तवांस्तां मरीचये ॥ १७ ॥ वरं च दत्तवांस्तस्मै तद्वाक्यं
यत्तथा कृतम् । अग्निहोत्रेण सहितां स्वाश्रमं तां द्विजोऽनयत् ॥ १८ ॥ रेमे मुनिस्तया सार्द्धं यथा विष्णुः श्रिया सह । पार्व्वत्या च यथा शम्भुः
सरस्वत्या यथा ह्यजः ॥ १९ ॥ जज्ञे पुत्रशतं तस्यां मरीचेर्विष्णुनोपमम् । मरीचिः फलपुष्पार्थं वनं गत्वा समागतः ॥ २० ॥ श्रान्तः कदाचित्तां
पत्नीमुवाचेति पतिव्रताम् । भुक्त्वा तु शयनस्थस्य पादसंवाहनं कुरु ॥ २१ ॥ धर्म्मव्रता तथेत्युक्त्वा शयनस्थस्य सा मुनेः । पादसंवाहनं चक्रे घृते
नाभ्यज्य तत्परा ॥ २२ ॥ निद्रायमाणेऽथ मुनौ ब्रह्मा तं देशमागतः । इत्येष दृष्ट्वा ब्रह्माणं मनसार्च्चयितुं प्रभुम् ॥ २३ ॥ पादसंवाहनं कुर्य्यां किं
पूज्योऽयं जगद्गुरुः । इत्याकुला समुत्तस्थौ मत्वा सा तं गुरोर्गुरुम् ॥ २४ ॥ अर्घ्यपाद्यादिकं दत्त्वा ब्रह्माणं समपूजयत् । सत्कृतायान्तु शय्यायां विश्राम
मकरोदजः ॥ २५ ॥ एतस्मिन्नन्तरे भर्त्ता समुत्तस्थौ च तल्पतः । धर्म्मव्रतामपश्यन्स विप्रः क्रुद्धः शशाप ताम् ॥ २६ ॥ पादसंवाहनं त्यक्त्वा

स्मादाज्ञां विहाय मे । गतान्यत्र ततः पापाच्छापदग्धा शिला भव ॥ २७ ॥ भर्त्रा धर्म्मव्रता शप्ता मरीचिं प्राह सा रुषा । शयाने त्वयि संप्राप्ते
ता त्वजनको गुरुः ॥ २८ ॥ त्वयोत्थाय हि कर्त्तव्यं स्वगुरोः पूजनं सदा । मया तु धर्म्मचारिण्या तव कार्य्ये कृते मुने ॥ २९ ॥ अदोषाहं यतः
ता तस्माच्छापं ददामि ते । त्वञ्च शापं महादेवाद्भर्त्तः प्राप्स्यस्यसंशयम् ॥ ३० ॥ व्याकुलं तं पतिं दृष्ट्वा व्याकुलागात्प्रजापतिम् ।
त्वा शयानं ब्रह्माणमग्निं प्रज्वाल्य चेन्धनैः ॥ ३१ ॥ गार्हपत्ये स्थिता चक्रे तपः परमदुष्करम् । तथा शप्तो मरीचिश्च तपस्तेपे सुदारु
म् ॥ ३२ ॥ पतिव्रतायास्तपसा मरीचेस्तपसा तथा । इन्द्रादयश्च सन्तप्ता गतास्ते शरणं हरिम् ॥ ३३ ॥ ऊचुः क्षीराम्बुधौ सुप्तं सन्तप्ता
तपसा हरे । पतिव्रतायाश्च मुनेस्त्रैलोक्यं रक्ष केशव ॥ ३४ ॥ इन्द्रादीनां वचः श्रुत्वा विष्णुर्धर्म्मव्रतां ययौ । एतस्मिन्नेव
ले तु प्रबुद्धो भगवानजः । ऊचुर्धर्म्मव्रतां देवा अग्निस्थां तां सकेशवाः ॥ ३५ ॥ अग्निमध्ये तपः कर्त्तुं कस्य शक्तिः पतिव्रते ।
या कृतं तत्परमं सर्व्वलोकभयङ्करम् ॥ ३६ ॥ वरं वरय धर्म्मज्ञे अस्मत्तो यदभीप्सितम् । विष्ण्वादीनां वचः श्रुत्वा देवान्धर्म्मव्रताब्रवीत्
३७ ॥ भर्तृशापमशक्ताहं निवर्त्तयितुमोजसा । दत्तो मरीचिना शापो मह्यं स ह्यपगच्छतु ॥ ३८ ॥ धर्म्मव्रतावचः श्रुत्वा प्रोचुरेतां सुराः
ः । धर्म्मव्रते धर्म्मपुत्रि शापोऽयं परमर्षिणा ॥ ३९ ॥ दत्तस्ते न निराकर्त्तुं शक्यो देवद्विजातिभिः । तस्मादन्यं वरं ब्रूहि यतो धर्म्मस्य संस्थितिः
४० ॥ भवेद्धि त्रिषु लोकेषु वेदोक्तस्य शुभव्रते । देवानां वचनं श्रुत्वा देवान्धर्म्मव्रताब्रवीत् ॥ ४१ ॥ भर्त्तुः शापान्मोचयितुं न शक्ताश्च
ामराः । मह्यं वरं प्रयच्छध्वमेवंविधमनुत्तमम् ॥ ४२ ॥ शिलाहं हि भविष्यामि ब्रह्माण्डे पावनी शुभा । नदीनदसरस्तीर्थदेवादिभ्योऽतिपा
ि ॥ ४३ ॥ ऋष्यादिभ्यो मुनिभ्यश्च मुख्यदेवेभ्य एव च । त्रैलोक्ये यानि लिङ्गानि व्यक्ताव्यक्तात्मकान्यपि । तानि तिष्ठन्तु मद्देहे तीर्थरूपेण
र्वदा ॥ ४४ ॥ तीर्थान्यपि च सर्व्वाणि नक्षत्रप्रमुखास्तथा । तिष्ठन्तु देवाः सकला देव्यश्च मुनयस्तथा ॥ ४५ ॥ ब्रह्मा विष्णुश्च रुद्रश्च लक्षयित्वा
् मयि । पञ्चाग्नयः कुमाराद्या बहुरूपेण संस्थिताः ॥ ४६ ॥ मूर्त्तामूर्त्तस्वरूपेण पदरूपेण देवताः । शिलायां क्रोशमात्रेण मूर्त्तिरूपाः स्थिता भुवि
४७ ॥ तां दृष्ट्वा सर्व्वलोकश्च महापातकनाशिनीम् । पूतो धर्म्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक् ॥ ४८ ॥ शिलास्थितेषु तीर्थेषु स्नात्वा
त्वाथ तर्पणम् । श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते ॥ ४९ ॥ गदाधरो दृश्यतीर्थे सर्व्वतीर्थोत्तमोत्तमम् । स्थास्यन्ति च मरिष्यन्ति यान्तु
ह्मपुरीं नराः । वाराणसी प्रयागश्च पुरुषोत्तमसंज्ञकम् ॥ ५० ॥ गङ्गासागरसंज्ञश्च नित्यं तिष्ठतु फल्गुनि । गदाधराधिष्ठितं तत्सर्व्वतीर्थोत्तमोत्तमम् ।

मुक्तिर्भवेत् पितृणां च मृतानां श्राद्धतः सदा ॥ ५१ ॥ जरायुजाण्डजा वापि स्वेदजा वापि चोद्भिदः । त्यक्त्वा देहं शिलायान्ते यान्तु विष्णुस्वरूपताम् ॥५२॥ यथार्चिते हरौ सर्व्वे यज्ञाः पूर्णा भवन्ति हि । तथा श्राद्धं तर्पणञ्च स्नानं चाक्षयमस्त्विह॥५३॥ मम देहे सुरेशानां ये जपन्ति श्रुतादिकम् । अचिरेणापि ते सिद्धाः सिद्धिभाजो भवन्तु वै ॥ ५४ ॥ पितृणां कुलसाहस्रमात्मना सहितं नरः । श्राद्धादिना समुद्धृत्य विष्णुलोकं नयेद्ध्रुवम् ॥ ५५ ॥ यावत्यो हि सरिच्छ्रेष्ठा गङ्गाद्याश्च ह्रदाः शुभाः । समुद्राद्याः सरोमुख्या मानसाद्याः सुरेश्वराः । नृणां श्राद्धं विदधतो मुक्तये निवसन्तु मे ॥ ५६ ॥ शरीरेण समायान्तु कश्चिन्नो यान्तु देवताः । एको विष्णुस्त्रिधामूर्त्तिर्यावत्सङ्कीर्त्यते बुधैः ॥ ५७ ॥ तावच्छिलायां सर्व्वाणि तीर्थानि सह दैवतैः । सदा तिष्ठन्तु मुनयो गन्धर्व्वाणां गणाश्च ये ॥५८॥ सर्व्वदेवस्वरूपा च नामेयं देवरूपिणी । यावत्तिष्ठति ब्रह्माण्डं तावत्तिष्ठतु वै शिला । मम देहेऽश्मरूपे च ये जपन्ति तपन्ति च ॥ ५९ ॥ जुहोत्यग्नौ च तेषां वै तदक्षय्योपतिष्ठताम् । अक्षयन्तु भवेच्छ्राद्धं जपहोमतपांसि च । शिलापर्व्वतरूपेण मयि तिष्ठतु सर्व्वदा ॥६०॥ पतिव्रतावचः श्रुत्वा देवाः प्रोचुः पतिव्रताम् । त्वया यत्प्रार्थितं सर्व्वं तद्भविष्यत्यसंशयम्॥६१॥ गयासुरस्य शिरसि भविष्यसि यदा स्थिरा । तदा पादादिरूपेण स्थास्यामस्त्वयि सुस्थिराः । वरं शिलायै दत्त्वैवं तत्रैवान्तर्दधुः सुराः ॥ ६२ ॥ इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ छ ॥ सनत्कुमार उवाच ॥ वक्ष्ये शिलाया माहात्म्यं शृणु नारद मुक्तिदम् । यस्या गायन्ति देवाश्च माहात्म्यं मुनिपुङ्गवाः ॥ १ ॥ शिला स्थिता पृथिव्यां सा देवरूपातिपावनी । विचित्राख्यं शिलातीर्थं त्रिषु लोकेषु विश्रुतम् ॥ २ ॥ तस्याः संस्पर्शनाल्लोकाः सर्वे हरिपुरं ययुः । शून्ये लोकत्रये जाते शून्या यमपुरी ह्यभूत् ॥ ३ ॥ यम इन्द्रादिभिर्गत्वा ऊचे ब्रह्माणमद्भुतम् । अधिकारं गृहाणाथ यमदण्डं पितामह ॥ ४ ॥ यममूचे ततो ब्रह्मा स्वगृहे धारयस्व ताम् । ब्रह्मोक्तो धर्मराजस्तु गृहे तां समधारयत् ॥ ५ ॥ यमोऽधिकारं स्वं चक्रे पापिनां शासनादिकम् । एवंविधा गुरुतरा शिला जगति विश्रुता ॥ ६ ॥ यथा ब्रह्मा यथा विष्णुर्यथा देवो महेश्वरः । ब्रह्माण्डे च यथा मेरुस्तथेयं देवरूपिणी ॥ ७ ॥ गयासुरस्य शिरसि गुरुत्वाद्धारिता यतः । अतः पवित्रयोर्योगः पितृणां मोक्षदायकः ॥ ८ ॥ पवित्रयोर्द्वयोर्योगे हयमेधमजोऽकरोत् । भागार्थमागतान्दृष्ट्वा विष्ण्वादीनब्रवीच्छिला ॥ ९ ॥ शिलास्थितिप्रतिज्ञां तु कुर्वन्तु पितृमुक्तये । तथेत्युक्त्वा शिलायान्ते देवा विष्ण्वादयः स्थिताः ॥ १० ॥ शिलारूपेण मूर्त्त्या च पदरूपेण देवताः । मूर्त्तामूर्त्तस्वरूपेण स्थिताः पूर्वप्रतिज्ञया ॥ ११ ॥ दैत्यस्य मुण्डपृष्ठे तु यस्मात्सा संस्थिता शिला । तस्मात्स मुण्डपृष्ठाद्रिः पितृणां ब्रह्मलोकदः॥१२॥ आच्छादितः शिलापादः प्रभासेनाद्रिणा यतः । भासितो भास्करे

णेति प्रभासः परिकल्पितः ॥१३॥ प्रभासं हि विनिर्भिद्य शिलाङ्गुष्ठो विनिर्गतः । अङ्गुष्ठोत्थित ईशोऽपि प्रभासेशः प्रकीर्तितः ॥ १४ ॥ शिलाङ्गुष्ठैकदेशो
सा च प्रेतशिला स्मृता । पिण्डदानाद्यतस्तस्यां प्रेतत्वान्मुच्यते नरः ॥१५॥ महानदीप्रभासाद्योः सङ्गमे स्नानकृन्नरः । रामो देव्या सह स्नातो रामत
ततः स्मृतम् ॥१६॥ प्रार्थितोऽत्र महानद्या राम स्नातो भवेति च । रामतीर्थं ततो भूत्वा त्रिषु लोकेषु विश्रुतम् ॥१७॥ जन्मान्तरशतं साग्रं यत्कृतं दुष्
मया । तत्सर्वं विलयं यातु रामतीर्थाभिषेचनात् ॥ १८ ॥ मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्वीत मानवः । रामतीर्थे पिण्डदस्तु विष्णुलोकं प्रयात्यसं
तथेत्युक्त्वा स्थितो रामः सीतया भरताग्रजः ॥ १९ ॥ राम राम महाबाहो देवानामभयङ्कर । त्वां नमस्येऽत्र देवेशं मम नश्यतु पातकम् ॥ २०
मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्यात्सपिण्डकम् । प्रेतत्वात्तस्य पितरो विमुक्ताः पितृतां ययुः ॥ २१ ॥ आपस्त्वमसि देवेश ज्योतिषां पतिरेव च । प
नाशय मे देव मनोवाक्कायकर्मजम् ॥ २२ ॥ नमस्कृत्य प्रभासेशं भासमानं शिवं व्रजेत् । तत्र शम्भुं नमस्कृत्य कुर्याद्यमबलिं ततः ॥ २३ ॥ रामे
गते शैलमागत्य भरतः स्थितः । पितृपिण्डादिकं कृत्वा रामं संस्थाप्य तत्र च ॥ २४ ॥ रामं सीतां लक्ष्मणञ्च मुनीन्स्थापितवान्प्रभुः । भरतस्याः
पुण्ये नित्यं पुण्यतमैर्वृतम् । मतङ्गस्य पदं तत्र दृश्यते सर्वमानुषैः ॥ २५ ॥ स्थापितं धर्मसर्वस्वं लोकस्यास्य निदर्शनात् । मतङ्गस्य पदे श्राद्धी स
स्तारयते पितॄन् ॥ २६ ॥ रामतीर्थे नरः स्नात्वा रामं सीतां समर्च्य च । रामेश्वरं प्रणम्याथ न देही जायते पुनः ॥ २७ ॥ शिलाया जघनं भूयः स
क्रान्तं नगेन तु । धर्मराजेन संप्रोक्तो न गच्छेति नगः स्मृतः ॥ २८ ॥ यमराजधर्मराजौ निश्चलार्थं व्यवस्थितौ । ताभ्यां बलिं प्रयच्छामि पितॄणां मु
हेतवे ॥ २९ ॥ द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ । ताभ्यां बलिं प्रयच्छामि स्यातामेतावहिंसकौ ॥ ३० ॥ ऐन्द्रवारुणवायव्ययाम्यनैर्ऋत
स्थिताः । वायसाः प्रतिगृह्णन्तु भूयो पिण्डं मया स्थितम् ॥ ३१ ॥ यमोऽसि यमदूतोऽसि वायसोऽसि महाबल । सप्तजन्मकृतं पापं बलिं भुक्त्वा वि
शय ॥ ३२ ॥ रामे वनं गते शैलमागत्य भरतेन हि । पितुः पिण्डादिकं कृत्वा रामेशः स्थापितोऽत्र वै ॥ ३३ ॥ स्नात्वा नत्वा च रामेशं रामस
समन्वितम् । तत्र श्राद्धं सपिण्डञ्च कृत्वा विष्णुपुरं व्रजेत् । पितृभिः सह धर्मात्मा कुलानाञ्च शतैः सह ॥ ३४ ॥ शिलाया दक्षिणे हस्ते स्थापितः कु
पर्वतः । तिमिरादित्य ईशानभर्गावेते महेश्वराः ॥ ३५ ॥ वह्निर्द्रौ वरुणौ रुद्राश्चत्वारः पितृमोक्षदाः । भरताश्रममासाद्य तान्नमेत्पूजयेन्नरः ॥ ३६ ॥ प
भ्यश्चोपपापेभ्यो मुच्यते पितृभिः सह । यत्र कुत्रापि देवर्षे भरतस्याश्रमे नरः । स्नातः श्राद्धादिकं कुर्यात्तत्कल्पेऽपि न हीयते ॥ ३७ ॥ गयायां चाक्ष
श्राद्धं जपहोमतपांसि च । सर्वमानन्त्यमाहुर्वै यद्दत्तं भरताश्रमे ॥ ३८ ॥ चतुर्युगस्वरूपेण चतस्रो रविमूर्त्तयः । दृष्टाः स्पृष्टाः पूजितास्ताः पितृ

मुक्तिदायकाः ॥३९॥ मुक्तिर्वामन इत्येव तारकाख्यो विधिः परः । संसारार्णवतप्तानां नावावेतौ सुरेश्वरौ । तारकं ब्रह्म विश्वेषां मृतानां जीवतामिदम् ॥४०॥ त्रिविक्रमश्च ब्रह्माणं यः पश्येत्पुरुषोत्तमम् । पितृभिः सह धर्मात्मा स याति परमां गतिम् ॥४१॥ शिलाया वामपादेऽपि तथाभ्युद्यन्तको गिरिः । स्थापितः पिण्डदस्तत्र पितॄन्ब्रह्मपुरं नयेत् ॥ ४२ ॥ नैमिषारण्यपार्श्वे तु ईजे ब्रह्मा सुरैः सह । मुख्यसंज्ञं हि तत्तीर्थं देवास्तत्र पदे स्थिताः ॥ ४३ ॥ त्रिषु तेषु पदेष्वेव तीर्थेषु मुनिसत्तम । यत्किञ्चिदशुभं कर्म तत्प्रणश्यति नारद ॥ ४४ ॥ तन्नैमिषवनं पुण्यं सेवितं पुण्यपूरुषैः । तत्र व्यासः शुकः पैलः कण्वो वेधाः शिवो हरिः ॥ ४५ ॥ तेषां दर्शनमात्रेण मुच्यते पातकैर्नरः । वामहस्ते शिलायास्तु तथा चोद्यन्तको गिरिः ॥ ४६ ॥

---

१ अस्माच्छ्लोकादग्रे पाठान्तरश्लोका उपलभ्यन्ते । ते यथा—स्थापितः पिण्डदस्तत्र पितॄन् ब्रह्मपुरं नयेत् ॥ १ ॥ कुण्डश्चोद्यन्तकस्तत्र ह्यात्मनस्तपसा कृतः । ब्रह्मणा तत्र सावित्रीकुमार्भ्यां सह स्थितम् ॥ २ ॥ हाहाहूहूप्रभृतयो गीतिनादं प्रचक्रिरे । कुण्डमुद्यन्तकं तत्र गीतवादित्रको गिरिः ॥ ३ ॥ अगस्त्यो भगवान्यत्र तपश्चोग्रं चकार ह । ब्रह्मणस्तु वरं लेभे माहात्म्यं भुवि दुर्लभम् ॥ लोपामुद्रां तथा भार्य्यां पितॄणां परमां गतिम् ॥ ४ ॥ स्नातस्तत्र च मध्याह्ने सावित्रीं समुपास्य च । कोटिजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥ ५ ॥ अगस्त्यस्य पदे स्नात्वा पिण्डदो ब्रह्मलोकगः । पितृभिः सह धर्म्मात्मा पूज्यमानो दिवौकसाम् ॥ ६ ॥ ब्रह्मयोनिं प्रविश्याथ निर्गच्छेद्यस्तु मानवः । परं ब्रह्म स यातीह विमुक्तो योनिसङ्कटात् ॥ ७ ॥ नत्वा गयाकुमारञ्च ब्राह्मण्यं लभते नरः । सोमकुण्डाभिषेकी च सोमलोकं नयेत्पितॄन् ॥ ८ ॥ बलिः काकशिलायान्तु काकेभ्य ऋणमोक्षदः । स्वर्गद्वारेश्वरं नत्वा स्वर्गाद्ब्रह्मपुरं व्रजेत् ॥ ९ ॥ पिण्डदो व्योमगङ्गायां निर्म्मलः स्वर्नयेत् पितॄन् । शिलाया दक्षिणे हस्ते भस्मकूटमधारयत् । ततोऽसौ भस्मकूटाद्रिर्भस्मस्नातश्च नारद ॥ १० ॥ वटो वटेश्वरस्तत्र स्थितश्च प्रपितामहः । मतङ्गस्य पदे पुण्ये पिण्डदः स्वर्नयेत्पितॄन् ॥ ११ ॥ तस्याग्रे रुक्मिणीकुण्डं पश्चिमे कपिला नदी । कपिलेशो नदीतीरे ह्यमासोमसमागमे ॥ १२ ॥ कपिलायां नरः स्नात्वा कपिलेशं नमेच्च यः । श्राद्धदः स्वर्गगामी स्यान्माहेशीकुण्ड एव च ॥ १३ ॥ गौरी च मङ्गला तत्र सर्व्वसौभाग्यदायिनी । जनार्दनो भस्मकूटे तस्य हस्ते च पिण्डदः ॥ १४ ॥ मन्त्रेण चात्मनोऽन्येषां सव्यहस्ते तिलैर्विना । जीवतां दधिसंमिश्रं सर्व्वे ते विष्णुलोकगाः ॥ १५ ॥ एष पिण्डो मया दत्तस्तव हस्ते जनार्दन । देहि देव गयाशीर्षे तस्मै तस्मिन्मृते तु तम् ॥ १६ ॥ एष पिण्डो मया दत्तस्तव हस्ते जनार्दन । गयाशीर्षे त्वया देयो मह्यं पिण्डो मृते मयि ॥ १७ ॥ जनार्दन नमस्तुभ्यं नमस्ते पितृरूपिणे । पितृपते नमस्तुभ्यं नमस्ते मुक्तिहेतवे ॥ १८ ॥ गयायां पितृरूपेण स्वयमेव जनार्दन । लक्ष्मीकान्त नमस्तेऽस्तु नमस्ते पितृमोक्षद ॥ १९ ॥ तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् । पुण्डरीकाक्षमभ्यर्च्य स्वर्गं माप्नुर्नरा ध्रुवम् ॥ २० ॥ वामजानु तु संपात्य नत्वा भीमो जनार्दनम् । श्राद्धं सपिण्डकं कृत्वा भ्रातृभिर्विष्णुलोकगः ॥ २१ ॥ शिलाया दक्षिणे पादे प्रेतकूटो गिरिर्धृतः । धर्म्मराजेन पादाभ्यां गिरिः प्रेतशिलाश्रयः ॥ २२ ॥ पादेन दूरे निक्षिप्तः शिलायाः पापभारतः । प्रेतभावस्वरूपेण फलग्रहणकानने ॥ २३ ॥ पृष्ठे स्थिताश्च बहवो विघ्नकारिण एव ते । श्राद्धादिकरणान्नृणां तीर्थं पितृविमुक्तिदम् ॥ २४ ॥ गतः शिलाङ्गसंस्पर्शात्प्रेतकूटः पवित्रताम् । प्रेतकूटश्च तत्रास्ते देवास्तत्र पदे स्थिताः । तत्र श्राद्धादिकं कृत्वा प्रेतत्वान्मोचयेत्पितॄन् ॥ २५ ॥ शिलासमीपे ये विप्र प्रेतरूपा भयानकाः । सर्व्वे ते यमलोके तु पृथिव्यां पर्यटन्ति वै ॥ २६ ॥ गयासुरस्य शिरसि पुण्ये प्रेतादिवर्जिते । स्थिता ब्रह्मा

स पर्वतः समानीतो ह्यगस्त्येन महात्मना । तत्र ब्रह्मा हरश्चैव तपश्चोग्रञ्च चक्रतुः ॥ ४७ ॥ तत्रागस्त्यस्य हि वरं कुण्डं त्रैलोक्यदुर्लभम् । यत्र मुन्यष्टकं सिद्धं तपस्तप्त्वा शिवं गतम् । कुण्डे मुन्यष्टकं नत्वा पितॄन्ब्रह्मपुरं नयेत् ॥ ४८ ॥ अगस्त्येनाथ देवर्षे ह्युदयाद्रेर्महात्मना । शिलाया वामहस्तेऽपि स्थापितो गिरिराट् शुभः । वादित्राद्यैर्दिव्यगीतैराढ्यो वादित्रको गिरिः ॥ ४९ ॥ तत्र विद्याधरो नाम गन्धर्वाप्सरसाङ्गणैः । समेतोऽद्यापि गीतानि दिव्यानि सह गीयते ॥ ५० ॥ मोहनश्च सुनीथश्च शैलूजो मोहनोत्तमः । पर्वतो नारदध्यानी सङ्गीती पुष्पदन्तकः । हाहा हूहूप्रभृतयो गीतदानं प्रचक्रिरे ॥ ५१ ॥ तथा चित्ररथो नाम सर्वगन्धर्वसंवृतः । गायति मधुराण्येव गीतान्यद्रौ महोत्सवम् ॥ ५२ ॥ अतः स पर्वतो देवैः सेव्यतेऽद्यापि नित्यशः । धर्मजास्तत्र देवेशो हरो भस्माङ्गरागवान् ॥ ५३ ॥ पार्वत्या सहितो रुद्रः पर्वते गीतनादिते । मोदते पूजितो ध्येयः पितॄणां परमां गतिम् ॥ ५४ ॥ गयायां परमात्मा हि गोपतिर्वा गदाधरः । हीयते वैष्णवी माया तथा रुद्रार्चया मुने ॥ ५५ ॥ शिलाया दक्षिणे हस्ते भस्मकूटो गिरिर्धृतः । धर्म्मराजेन तत्रास्ते ह्यगस्त्यः सह भार्य्यया ॥ ५६ ॥ अगस्त्यस्य पदे स्नातः पिण्डदो ब्रह्मलोकगः । ब्रह्मणस्तु वरं लेभे माहात्म्यं भुवि दुर्लभम् ॥ ५७ ॥ लोपामुद्रां तथा भार्य्यां पितॄणां परमां गतिम् । तत्रागस्त्येश्वरं दृष्ट्वा मुच्यते ब्रह्महत्यया ॥ ५८ ॥ अगस्त्यञ्च सभार्य्यंञ्च पितॄन्ब्रह्मपुरं नयेत् । दण्डिनाथ तपस्तेपे सीताद्रेर्दक्षिणे गिरौ ॥ ५९ ॥ वटो वटेश्वरस्तत्र स्थितश्च प्रपितामहः । तदग्रे रुक्मिणीकुण्डं पश्चिमे कपिला नदी । कपिलेशो नदीतीरे ह्यमासोमसमागमे ॥ ६० ॥ कपिलायां नरः स्नात्वा कपिलेशं समर्च्य च । कृते

---

—द्यो देवा गतः सोपि पवित्रताम् ॥ २७ ॥ कीकटेषु गया पुण्या पुण्यं राजवनं गृहम् । च्यवनस्याश्रमः पुण्यो नदी पुण्या पुनःपुना ॥ २८ ॥ वैकुण्ठे हेमदण्डश्च हेमकूटो गिरिस्तथा । श्राद्धपिण्डादिकृत्तत्र पितॄन्ब्रह्मपुरं नयेत् ॥ २९ ॥ शिलादक्षिणपादे तु गृध्रकूटो गिरिर्धृतः । धर्मराजेन सुस्थैर्य्यकरणाय सुपावनः ॥ ३० ॥ गृध्ररूपेण तत्राथ तपः कृत्वा महर्षयः । विमुक्ता गृध्रकूटोऽयं तत्र गृध्रेश्वरः स्थितः ॥ ३१ ॥ तत्र गृध्रेश्वरं दृष्ट्वा यान्ति शम्भुपदं नरः । तत्र गृध्रवटं नत्वा मासकामो दिवं व्रजेत् ॥ ३२ ॥ तत्र गृध्रगुहायाश्च पिण्डदः शिवलोकभाक् । तत्र माहेश्वरी धारा पिण्डदः स्वर्नयेत्पितॄन् ॥ ३३ ॥ मूलक्षेत्रं सरस्तत्र पिण्डदो ब्रह्मलोकभाक् । ऋणमोक्षं पापमोक्षं शिवं दृष्ट्वा शिवं व्रजेत् ॥ ३४ ॥ आदिपालेन गिरिणा समाक्रान्तं शिलोदरम् । यत्रास्ते गजरूपेण विघ्नेशो विघ्ननाशनः । नाभौ च पिण्डदो यस्तु पितॄन्ब्रह्मपुरं नयेत् ॥ ३५ ॥ नितम्बे मुण्डपृष्ठस्य देववदारुवनं त्वभूत् । मुण्डपृष्ठेऽरविन्दाद्रिं दृष्ट्वा पापं विनाशयेत् ॥ ३६ ॥ क्रौञ्चरूपेण संविष्टो मुनिस्तत्र तपोऽकरोत् । तस्य पादाङ्कितो यस्मात्क्रौञ्चपादः प्रकीर्त्तितः ॥ ३७ ॥ स्नातो जलाशये तत्र नयेत् स्वर्गं कुलत्रयम् । शिलायां व्यक्तरूपेण व्यक्ताव्यक्तात्मना स्थितः । लक्ष्मीशो विबुधैः सार्द्धं तस्माद्देवमयी शिला ॥ ३८ ॥

श्राद्धे पिण्डदाने पितरो मोक्षमाप्नुयुः ॥ ६१ ॥ तत्राग्निधारा गिरिवरादागतोद्यन्तकादतु । तत्र सारस्वतं कुण्डं सरस्वत्या प्रकल्पितम् ॥ ६२ ॥ शुक्रस्तत्र सुतैः सार्द्धं षण्डामर्कादिभिः प्रभुः । तत्र तत्र मुनीन्द्राणां पदेषु मुनिसत्तम । श्राद्धपिण्डादिकृत्स्नातः पितॄंस्तारयते नरः ॥ ६३ ॥ शिलाया वामहस्तेऽपि गृध्रकूटो गिरिर्धृतः । गृध्ररूपेण संसिद्धास्तपस्तप्त्वा महर्षयः ॥ ६४ ॥ अतो गिरिर्गृध्रकूटस्तत्र गृध्रेश्वरः स्थितः । दृष्ट्वा गृध्रेश्वरं नत्वा यायाच्छम्भोः पदं नरः ॥ ६५ ॥ तत्र गृध्रे गुहायाञ्च पिण्डदः शिवलोकभाक् । तत्र गृध्रे वटं नत्वा प्राप्तकामो दिवं व्रजेत् ॥ ६६ ॥ ऋणमोक्षं पापमोक्षं शिवं दृष्ट्वा शिवं व्रजेत् । शूलक्षेत्रञ्च तत्रास्ते पिण्डदः स्वर्नयेत्पितॄन् ॥ ६७ ॥ आदिपालेन गिरिणा समाक्रान्तं शिलोदरम् । तत्रास्ते गजरूपेण विघ्नेशो विघ्ननाशनः । तं दृष्ट्वा मुच्यते विघ्नैः पितॄन् ब्रह्मपुरं नयेत् ॥ ६८ ॥ नितम्बे मुण्डपृष्ठस्य देवदारुवनं त्वभूत् । मुण्डपृष्ठारविन्द्राद्री दृष्ट्वा पापं विनाशयेत् । गयानाभौ सुषुम्नायां पिण्डदः स्वर्नयेत्पितॄन् ॥ ६९ ॥ शिलाया वामपादे तु स्थापितः प्रेतपर्वतः । धर्मराजेन पापेभ्यो गिरिः प्रेतशिलाह्वयः ॥ ७० ॥ पादेन दूरे निक्षिप्तः शिलायाः पादभारतः । गतः शिलायाः संसर्गात्प्रेतकूटः पवित्रताम् ॥ ७१ ॥ प्रेतकुण्डञ्च तत्रास्ते देवास्तत्र पदे स्थिताः । तत्र कुण्डादिकं कृत्वा प्रेतत्वान्मोचयेत्पितॄन् ॥ ७२ ॥ पृथक्स्थिताश्च बहवो विघ्नकारिण एव ते । श्राद्धादिकारिणां नृणां तीर्थे पितृविमुक्तये । प्रेता धानुष्करूपेण करग्रहणकारकाः ॥ ७३ ॥ पादाङ्कितां मुण्डपृष्ठां महादेवनिवासिनीम् । तां दृष्ट्वा सर्वलोकश्च मुक्तः पापोपपातकैः ॥ ७४ ॥ गयाशिरसि पुण्ये च सर्वपापैर्विवर्जिते । प्रेतादिवर्जितं यस्मात्ततोऽतिपावनं वरम् ॥ ७५ ॥ कीकटेषु गया पुण्या पुण्यं राजगृहं वनम् । च्यवनस्याश्रमं पुण्यं नदी पुण्या पुनःपुना ॥ ७६ ॥ वैकुण्ठो लोहदण्डश्च गृध्रकूटश्च शोणकः । अत्र श्राद्धादिना सर्वान्पितॄन्ब्रह्मपुरं नयेत् ॥ ७७ ॥ क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत् । तस्य पादाङ्कितो यस्मात्क्रौञ्चपादस्ततः स्मृतः ॥ ७८ ॥ स्नातो जलाशये तत्र नयेत्स्वर्गं स्वकं कुलम् । बलिः काकशिलायाञ्च काकेभ्य ऋणमोक्षदः ॥ ७९ ॥ मुण्डपृष्ठस्य सानौ हि लोमशो लोमहर्षणः । द्वावेतौ परमं तप्त्वा तपःसिद्धिं परां गतौ ॥ ८० ॥ आहूतास्तु सरिच्छ्रेष्ठा लोमशेन महानदी । शरावती वेत्रवती चन्द्रभागा सरस्वती ॥ ८१ ॥ कावेरी सिन्धुरीरा च चन्दना च सरिद्वरा । वासिष्ठी सरयूर्गङ्गा यमुना गण्डकीन्दिरा ॥ ८२ ॥ महावैतरणी नाम्ना निरुरा च दिवौकसः । सावन्त्यलकनन्दा च ह्युदीची कनकाह्वया ॥ ८३ ॥ कौशिकी ब्रह्मदा ज्येष्ठा सर्वस्यापविमोचिनी । कृष्णवल्वा चर्म्मवती द्वे नद्यौ मुक्तिदायिके ॥ ८४ ॥ आहूते सरितां श्रेष्ठे लोमहर्षेण सादरात् । तपसस्तु प्रभावेण नर्म्मदा मुनिपुङ्गव । तासु सर्वासु यः स्नात्वा

पिण्डदः स्वर्नयेत्पितॄन् ॥ ८५ ॥ ब्रह्मयोनिं प्रविश्याथ निर्गच्छेद्यस्तु मानवः । परं ब्रह्म स यातीह विमुक्तो योनिसङ्कटात् ॥ ८६ ॥ निक्षरायां
पुष्करिण्यां स्नातः श्राद्धादिकं नरः । कुर्य्यात्क्रौञ्चपदे दिव्ये नियमाद्वासरत्रयम् । सर्वान्पितॄन्नयेत्स्वर्गं पञ्चपापिन एव च ॥ ८७ ॥ जनार्दनो
भस्मकूटे तस्य हस्ते तु पिण्डदः । आत्मनोऽप्यथवान्येषां सव्येनापि तिलैर्विना । जीवतां दधिसंमिश्रं सर्वे ते विष्णुलोकगाः ॥ ८८ ॥ यस्तु
पिण्डो मया दत्तस्तव हस्ते जनार्द्दन । यदुद्दिश्य त्वया देयस्तस्मिन्पिण्डो मृते प्रभो ॥ ८९ ॥ एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ।
अन्तकाले गते मह्यं त्वया देयो गयाशिरे । ९० ॥ जनार्दन नमस्तुभ्यं नमस्ते पितृमोक्षद । पितृपते नमस्तेऽस्तु नमस्ते पितृरूपिणे ॥ ९१ ॥
गयायां पितृरूपेण स्वयमेव जनार्दनः । तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ॥ ९२ ॥ नमस्ते पुण्डरीकाक्ष ऋणत्रयविमोचक । लक्ष्मी
कान्त नमस्तेऽस्तु पितृणां मोक्षदो भव ॥ ९३ ॥ वामजानु सुसंपात्य नत्वा भीमो जनार्दनम् । श्राद्धं सपिण्डकं कृत्वा भ्रातृभिर्ब्रह्मलोकभाक् ।
पितृभिः सह धर्मात्मा कुलानाञ्च शतेन च ॥ ९४ ॥ शिलायां व्यक्तरूपेण व्यक्ताव्यक्तात्मना स्थितः । लक्ष्मीशो विबुधैः सार्द्धं तस्मादेवमयी
शिला ॥ ९५ ॥ इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ७ ॥ नारद उवाच ॥ कथं व्यक्तस्वरूपेण
स्थितश्चादिगदाधरः । कथं व्यक्तस्वरूपेण व्यक्ताव्यक्तात्मना स्थितः ॥ १ ॥ कथं गदा समुत्पन्ना यथा ह्यादिगदाधरः । गदालोलं कथं चासीत्
सर्व्वपापक्षयङ्करम् ॥ २ ॥ सनत्कुमार उवाच ॥ गदो नामासुरो ह्यासीद्वज्राद्वज्रतरो दृढः । तपसा दारुणेनासौ ब्रह्मलब्धवरः पुरा ।
प्रार्थितो ब्रह्मणे प्रादात्स्वशरीरास्थि दुस्त्यजम् ॥ ३ ॥ ब्रह्मोक्तो विश्वकर्म्मापि गदां चक्रेऽद्भुतां तदा । तदस्थि वज्रनिष्पेषैः कुन्दैः स्वर्गे
ह्यधारयत् ॥ ४ ॥ अथ कालेन महता मनौ स्वायम्भुवे क्वचित् । हेती रक्षो ब्रह्मपुत्रः तपस्तेपे सुदारुणम् ॥ ५ ॥ दिव्यवर्षसहस्राणां शतं वायु
मभक्षयत् । उन्मुखश्चोर्द्ध्वबाहुश्च पादाङ्गुष्ठभरेण ह ॥ ६ ॥ एकेनातिष्ठदव्यग्रः शीर्णपर्णानिलाशनः । ब्रह्मादींस्तपसा तुष्टान्वरं वव्रे वरप्रदान् ॥ ७ ॥
देवैर्दैत्यैश्च शस्त्रास्त्रैर्विविधैर्मनुजादिभिः । कृष्णेशानादिचक्राद्यैरवध्यः स्यां महाबलः ॥ ८ ॥ तथेत्युक्त्वान्तर्हितास्ते हेतिर्देवानथाजयत् ।
इन्द्रत्वमकरोद्धेतिर्भीता ब्रह्महरादयः ॥ ९ ॥ हरिं ते शरणं जग्मुरूचुर्हेतिं जहीति तान् । ऊचे हरिरवध्योऽयं हेतिर्देवासुरैः सुराः ॥ १० ॥
महास्त्रं मे प्रयच्छध्वं हेतिं हन्मि हि येन तम् । इत्युक्तास्ते ततो देवा गदां तां हरये ददुः ॥ ११ ॥ दधार तां गदामादौ देवैरुक्तो गदाधरः । गदया
हेतिमाहत्य देवैः स त्रिदिवं ययौ ॥ १२ ॥ गदामादाववष्टभ्य गयासुरशिरःशिलाम् । निश्चलार्थं स्थितो यस्मात्तस्मादादिगदाधरः ॥ १३ ॥

शिलापर्वतरूपेण व्यक्त आदिगदाधरः । शिलासौ मुण्डपृष्ठाद्रिः प्रभासो नामपर्व्वतः ॥ १४ ॥ उद्यन्तो गीतनादश्च भस्मकूटो गिरिर्म्महान् । गृध्रकूटः प्रेतकूटश्चादिपालोऽरविन्दकः ॥१५॥ पञ्चलोकः सप्तलोको वैकुण्ठो लोहदण्डकः । क्रौञ्चपादोऽक्षयवटः फल्गुतीर्थं मधुश्रवाः ॥ १६॥ दधिकुल्या मधुकुल्या देविका च महानदी । वैतरण्यादिरूपेण व्यक्त आदिगदाधरः ॥ १७ ॥ विष्णोः पदं रुद्रपदं ब्रह्मणः पदमुत्तमम् । काश्यपस्य पदं दिव्यं द्वौ हस्तौ यत्र निर्गतौ ॥ १८ ॥ पञ्चाग्नीनां पदान्यत्र इन्द्रागस्त्यपदे परे । रवेश्च कार्त्तिकेयस्य क्रौञ्चमातङ्गयोरपि ॥ १९ ॥ मुख्यलिङ्गानि सर्व्वाणि व्यक्ताव्यक्तात्मना स्थितः । आद्यो गदाधरश्चैव व्यक्तः श्रीमान् गदाधरः ॥ २० ॥ गायत्री चैव सावित्री सन्ध्या चैव सरस्वती । गयादित्यश्चोत्तरार्कौ दक्षिणार्कोऽपि नैमिषः ॥ २१ ॥ श्वेतार्को गणनाथश्च वसवोऽष्टौ मुनीश्वराः । रुद्राश्चैकादशैवाथ तथा सप्तर्षयोऽपरे ॥ २२ ॥ सोमनाथश्च सिद्धेशः कपर्दीशो विनायकः । नारायणो महालक्ष्मीर्ब्रह्मा श्रीपुरुषोत्तमः ॥ २३ ॥ मार्कण्डेयेशः कोटीशो ह्यङ्गिरेशः पितामहः । जनार्दनो मङ्गला च पुण्डरीकाक्ष उत्तमः ॥ २४ ॥ इत्यादिव्यक्तरूपेण स्थितश्चादिगदाधरः । हेतिर्यो राक्षसस्तस्मिन्हते विष्णुः पुरं गतः ॥ २५ ॥ ब्रह्मणा सह रुद्राद्यैः कारिते निश्चलेऽसुरे । तुष्टावाद्यगदापाणिं वेधा हर्षेण निर्वृतः ॥ २६ ॥ ब्रह्मोवाच ॥ गदाधरं व्यपगतकालकल्मषं गयागतं विदितगुणं गुणातिगम् । गुहागतं गिरिवरगौरगेहगं गणार्चितं वरदमहं नमामि ॥ २७ ॥ अहःश्रियं त्रिदशगणादिसुश्रियं भवश्रियं दितिभवदारणश्रियम् । कलिश्रियं कलिमलमर्दनाश्रियं गदाधरं नौमि तमाश्रितश्रियम् ॥२८॥ दृढादृढं परिवृढगाढसंस्तुतं कामाद्भुतं सुदृढमरूढिरूढिगम् । तमाढ्यगं दृढदुरिताद्यढौकितं स्वढौकृतं दृढतरगोत्रसूक्तिभम् ॥२९॥ विदेहकं करणकलाविवर्जितं विजन्मकं दिनकरवेदिभूषितम् । गदाधरं ध्वनिमुखवर्जितं परं नमाम्यहं सततमनादिमीश्वरं हरिम् ॥३०॥ मनोऽतिगं मतिगतिवर्जितं परं सदाद्वयं स्तुतिशिरसि संस्तुतं बुधैः। चिदात्मकं कलिगतकारणातिगं गदाधरं हृदयगतं नमामि तम् ॥ ३१ ॥ सनत्कुमार उवाच ॥ देवैः सार्द्धं ब्रह्मणैवं स्तुतश्चादिगदाधरः । ऊचे वरं वृणीष्व त्वं वरं ब्रह्मा तमब्रवीत् ॥ ३२ ॥ शिलायां देवरूपिण्यां न तिष्ठामस्त्वया विना । स्थास्यामोऽत्र त्वया सार्द्धं नित्यं व्यक्तादिरूपिणा ॥३३॥ एवमस्तु श्रिया सार्द्धं स्थितश्चादिगदाधरः । लोकानां रक्षणार्थाय जगतां मुक्तिहेतवे । सुव्यक्तः पुण्डरीकाक्षो जनार्दन इति श्रुतः ॥ ३४ ॥ वेदैरगम्या या मूर्त्तिरादिभूता सनातनी । सुव्यक्ता श्वेतकल्पे सा भविष्यति तथा पुनः । वाराहकल्पे ह्यव्यक्ता व्यक्तिमप्यगमत्पुरा ॥ ३५ ॥ सन्तारणाय लोकानां देवानां रक्षणाय च । गयाशिरसि सुव्यक्तो भविष्यति न संशयः ॥ ३६ ॥ ये द्रक्ष्यन्ति सदा भक्त्या देवमादिगदाधरम् । कुष्ठरोगादिनिर्म्मुक्ता यास्यन्ति हरिमन्दिरम् ॥ ३७ ॥ ये द्रक्ष्यन्ति सदा

भक्त्या देवमादिगदाधरम् । ते प्राप्स्यन्ति धनं धान्यमायुरारोग्यमेव च ॥ ३८ ॥ कलत्रपुत्रपौत्रादिगुणकीर्त्तिसुखानि च । श्रद्धया ये नमस्यन्ति राज्यं ब्रह्मपुरं तथा । भुक्त्वा व्रजेयुः सततं पुण्यपुञ्जफलं नराः ॥ ३९ ॥ गन्धदानेन गन्धाढ्यः सौभाग्यं पुष्पदानतः । धूपदानेन राज्याप्तिर्दीपादीप्तिर्भविष्यति ॥ ४० ॥ ध्वजदानात्पापहानिर्यात्राकृद्ब्रह्मलोकभाक् । श्राद्धपिण्डप्रदो यस्तु विष्णुं नेष्यति वै पितॄन् ॥ ४१ ॥ श्रद्धया ये नमस्यन्ति स्तोत्रेणादिगदाधरम् । स्तोष्यन्ति च समभ्यर्च्य पितॄन्नेष्यन्ति माधवम् । शिवोऽपि परया प्रीत्या तुष्टावादिगदाधरम् ॥ ४२ ॥ शिव उवाच ॥ अव्यक्तरूपो यो देवो मुण्डपृष्ठादिरूपतः । फल्गुतीर्थादिरूपेण नमाम्यादिगदाधरम् ॥ ४३ ॥ व्यक्ताव्यक्तस्वरूपेण पदरूपेण संस्थितः । मुसलिङ्गादिरूपेण नमाम्यादिगदाधरम् ॥ ४४ ॥ अव्यक्तरूपो यो देवो जनार्दनस्वरूपतः । मुण्डपृष्ठे स्वयं जातो नमाम्यादिगदाधरम् ॥ ४५ ॥ शिलायां देवरूपिण्यां स्थितं ब्रह्मादिभिः सुरैः । पूजितं सत्कृतं देवैस्तं नमामि गदाधरम् ॥४६॥ यं च दृष्ट्वा ततः स्पृष्ट्वा पूजयित्वा प्रणम्य च । श्राद्धादौ ब्रह्मलोकाप्तिर्नमाम्यादिगदाधरम् ॥ ४७ ॥ महदादेश्च जगतो व्यक्तस्यैकं हि कारणम् । अव्यक्तज्ञानरूपं तं नमाम्यादिगदाधरम् ॥ ४८ ॥ देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् । जाग्रत्स्वप्नविनिर्मुक्तं नमाम्यादिगदाधरम् ॥ ४९ ॥ नित्यानित्यविनिर्मुक्तं सत्यमानन्दमव्ययम् । तुरीयं ज्योतिरात्मानं नमाम्यादिगदाधरम् ॥५०॥ सनत्कुमार उवाच ॥ एवं स्तुतो महेशेन प्रीतो ह्यादिगदाधरः । स्थितो देवः शिलायां स ब्रह्माद्यैर्देवतैः सह ॥ ५१ ॥ संस्थितं मुण्डपृष्ठाद्रौ देवमादिगदाधरम् । स्तुवन्ति पूजयन्तीह ब्रह्मलोकं प्रयान्तु ते ॥ ५२ ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् । कामानवाप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ॥ ५३ ॥ वन्ध्या च लभते पुत्रं वेदवेदाङ्गपारगम् । राजा विजयमाप्नोति शूद्रश्च सुखमाप्नुयात् ॥५४॥ पुत्रार्थी लभते पुत्रानभ्यर्च्यादिगदाधरम् । मनसा प्रार्थितं सर्वं पूजाद्यैः प्राप्नुयाद्धरेः ॥ ५५ ॥ इति श्रीवायुपुराणे वायुप्रोक्ते गयामाहात्म्यं नाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ७ ॥ सनत्कुमार उवाच ॥ गयायात्रां प्रवक्ष्यामि शृणु नारद मुक्तिदाम् । निष्कृतिः श्राद्धकर्तॄणां ब्रह्मणा गीयते पुरा ॥ १॥ उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः । विधाय कार्पटीवेशं कृत्वा ग्रामं प्रदक्षिणम् ॥ २ ॥ ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् । ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ॥ ३ ॥ प्रतिग्रहादुपावृत्तः सन्तुष्टो नियतः शुचिः । अहङ्कारविमुक्तो यः स तीर्थफलमश्नुते ॥ ४ ॥ यस्य हस्तौ च पादौ च मनश्चापि सुसंयतम् । विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥५ ॥ ततो गयाप्रवेशे च पूर्वतोऽस्ति महानदी । तत्र तोयं समुत्पाट्य स्नातव्यं निर्मले जले ॥६॥ देवादींस्तर्पयित्वाथ श्राद्धं कृत्वा यथाविधि । स्ववेदशाखागदितमर्घ्यावाहनवर्जितम् ॥ ७ ॥ अपरेऽह्नि

शुचिर्भूत्वा गच्छेद्वै प्रेतपर्वते । ब्रह्मकुण्डे ततः स्नात्वा देवादींस्तर्पयेत्सुधीः ॥ ८ ॥ कुर्य्याच्छ्राद्धं सपिण्डानां प्रयतः प्रेतपर्वते । प्राचीनावीतिना
भाव्यं दक्षिणाभिमुखः सुधीः ॥ ९ ॥ कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा । अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥ १० ॥ आगच्छन्तु
महाभागा युष्माभी रक्षितास्त्विह । मदीयाः पितरो ये च कुले जाताः सनाभयः ॥ ११ ॥ तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् । ते सर्वे
तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ॥ १२ ॥ आचम्योक्त्वा च पश्चाच्च प्राणायामं प्रयत्नतः । पुनरावृत्तिरहितब्रह्मलोकाप्तिहेतवे ॥ १३ ॥ एवञ्च
विधिवच्छ्राद्धं कृत्वा पूर्वं यथाक्रमम् । पितॄनावाह्य चाभ्यर्च्य मन्त्रैः पिण्डप्रदो भवेत् ॥ १४ ॥ तीर्थे प्रेतशिलादौ च चरुणा सघृतेन वा । प्रक्षाल्य
पूर्वं तत्स्थानं पञ्चगव्यैः पृथक्पृथक् । तैर्मन्त्रैरथ संपूज्य पञ्चगव्यैश्च देवताम् ॥ १५ ॥ यावत्तिला मनुष्यैश्च गृहीता पितृकर्मसु । गच्छन्ति तावदसुराः
सिंहत्रस्ता यथा मृगाः ॥ १६ ॥ अष्टकासु च वृद्धौ च गयायां च मृतेऽहनि । मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ॥ १७ ॥
वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्वकम् । पाथपूर्वं समारभ्य दक्षिणाग्रकुशैः क्रमात् । पित्रादीनां समास्तीर्य शेषं यथोक्तमाचरेत् ॥ १८ ॥ दद्युः
श्राद्धं सपिण्डानां तेषां दक्षिणभागतः । कुशानास्तीर्य विधिना सकृद्दत्वा तिलोदकम् ॥ १९ ॥ गृहीत्वाञ्जलिना तेभ्यः पितृतीर्थेन यत्नतः । सक्तुना
मुष्टिमात्रेण दद्यादक्षय्यपिण्डकम् । सम्बन्धिनस्तिलाद्भिश्च कुशेष्वावाहयेत्ततः ॥ २० ॥ आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः । तृप्यन्तु पितरः सर्वे
मातृमातामहादयः ॥ २१ ॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् । आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥ २२ ॥ पिता पितामह
श्चैव तथैव प्रपितामहः । माता पितामही चैव तथैव प्रपितामही ॥ २३ ॥ मातामहस्तत्पिता च प्रमातामहकादयः । तेषां पिण्डो मया
दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ २४ ॥ मुष्टिमात्रप्रमाणञ्च ह्यार्द्रामलकमात्रकम् । शमीपत्रप्रमाणं वा पिण्डं दद्याद्गयाशिरे । उद्धरेत्सप्तगोत्राणि
कुलानि शतमुद्धरेत् ॥ २५ ॥ पितुर्मातुः स्वभार्याया भगिन्या दुहितुस्तथा । पितृष्वसुर्मातृष्वसुः सप्त गोत्राः प्रकीर्त्तिताः ॥ २६ ॥
चतुर्विंशतिर्विंशश्च षोडश द्वादशैव हि । रुद्रादिवसवश्चैव कुलान्येकोत्तरं शतम् ॥ २७ ॥ नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः ।
न कारुण्येन कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः ॥ २८ ॥ पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनम् । दक्षिणा चान्नसङ्कल्पं तीर्थश्राद्धेष्वयं
विधिः ॥ २९ ॥ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते । आवाहयिष्ये तान्सर्वान्दर्भपृष्ठे तिलोदकैः ॥ ३० ॥ बन्धुवर्गकुले ये च

१ कव्यवाडनलः इति च पाठः ।

गतिर्येषां न विद्यते । आवाहयिष्ये तान्सर्वान् दर्भपृष्ठे तिलोदकैः ॥ ३१ ॥ इत्येतैर्मन्त्रैः सजलैस्तिलैर्दर्भेषु ध्यानवान् । आवाह्याभ्यर्च्य तेभ्यश्च पिण्डान्दद्याद्यथाक्रमम् ॥ ३२ ॥ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ३३ ॥ मातामहकुले ये च गतिर्येषां न विद्यते । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ३४ ॥ बन्धुवर्गकुले ये च गतिर्येषां न विद्यते । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ३५ ॥ अजातदन्ता ये केचिद्ये च गर्भे प्रपीडिताः । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ३६ ॥ अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे । विद्युच्चोरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ३७ ॥ दावदाहे मृता ये च सिंहव्याघ्रहताश्च ये । दंष्ट्रिभिः शृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहम् ॥ ३८ ॥ उद्बन्धनमृता ये च विषशस्त्रहताश्च ये । आत्मापघातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ३९ ॥ अरण्ये वर्त्मनि वने क्षुधया तृषया हताः । भूतप्रेतपिशाचाद्यैस्तेभ्यः पिण्डं ददाम्यहम् ॥ ४० ॥ रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४१ ॥ असिपत्रवने घोरे कुम्भीपाकेषु ये गताः । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४२ ॥ अनेकयातनासंस्थाः प्रेतलोकश्च ये गताः । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४३ ॥ अनेकयातनासंस्था ये नीता यमकिङ्करैः । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४४ ॥ नरकेषु समस्तेषु यातनासु च ये स्थिताः । तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४५ ॥ पशुयोनिगता ये च पक्षिकीटसरीसृपाः । अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ॥ ४६ ॥ जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्म्मणा । मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥ ४७ ॥ दिव्यन्तरिक्षभूमिष्ठाः पितरो बान्धवादयः । मृता असंस्कृता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ४८ ॥ ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम । ते सर्व्वे तृप्तिमायान्तु पिण्डेनानेन सर्व्वदा ॥ ४९ ॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ५० ॥ पितृवंशे मृता ये च मातृवंशे च ये मृताः । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ ५१ ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥ ५२ ॥ विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ ५३ ॥ आ ब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । कुलद्वये ये मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥ ५४ ॥ मित्राणि शिष्याः पशवश्च वृक्षा दृष्टा ह्यदृष्टाश्च कृतोपकाराः । जन्मान्तरे ये मम सङ्गताश्च तेभ्यः स्वधा पिण्डमहं ददामि ॥ ५५ ॥ एतैश्च सर्व्वमन्त्रैस्तु प्रोक्षितान्तं समूह्य च । पिण्डान्दद्याद्यथापूर्व्वं स्त्रीणां मात्रादिकक्रमात् ॥ ५६ ॥ स्वगोत्रे परगोत्रे वा दम्पत्योः

पिण्डपातनम् । अपृथङ्ग् निष्फलं श्राद्धं पिण्डश्चोदकतर्पणम् ॥ ५७ ॥ पिण्डपात्रे तिलान्क्षिप्त्वा पूरयित्वा शुभोदकैः । परिषिच्य त्रिधा सर्वान् प्रणिपत्य समापयेत् ॥ ५८ ॥ पितॄन्विसृज्य चाचम्य साक्षिणः श्रावयेत्सुरान् । साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा । मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥ ५९ ॥ आगतोऽस्मि गयां देव पितृकार्य्ये गदाधर । त्वमेव साक्षी भगवन्ननृणोऽहमृणत्रयात् ॥ ६० ॥ सर्व्वस्थानेषु चैवं स्यात् पिण्डदानन्तु नारद । प्रेतपर्व्वतमारभ्य कुर्य्यात्तीर्थेषु च क्रमात् ॥ ६१ ॥ तिलमिश्रांस्ततः सक्तून्निःक्षिपेत्प्रेतपर्व्वते । अपसव्येन देवर्षे दक्षिणाभिमुखेन च ॥ ६२ ॥ ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम । ते सर्व्वे तृप्तिमायान्तु सक्तुभिस्तिलमिश्रितैः ॥ ६३ ॥ आब्रह्मस्तम्बपर्य्यन्तं यत्किञ्चित्सचराचरम् । मया दत्तेन तोयेन तृप्तिमायान्तु सर्व्वशः ॥ ६४ ॥ प्रेतत्वाच्च विमुक्ताः स्युः पितरस्तस्य नारद । प्रेतत्वं तस्य माहात्म्यात्कुले चापि न जायते ॥ ६५ ॥ नाम्ना प्रेतशिला ख्याता गयाशिरसि मुक्तये । तीर्थमन्त्रादिरूपेण स्थित आदिगदाधरः ॥ ६६ ॥ इति श्रीवायुपुराणे वायुप्रोक्ते गयामाहात्म्यं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ७ ॥ सनत्कुमार उवाच ॥ आदौ तु पञ्चतीर्थेषु चोत्तरे मानसे विधिः । आचम्य कुशहस्तेन शिरश्चाभ्युक्ष्य वारिणा ॥ १ ॥ उत्तरं मानसं गच्छेन्मन्त्रेण स्नानमाचरेत् । उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये ॥ २ ॥ सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये । देवादींस्तर्पयित्वाथ श्राद्धं कुर्यात् सपिण्डकम् ॥ ३ ॥ मानसं हि सरो ह्यत्र तस्मादुत्तरमानसम् । सूर्य्यं नत्वार्चयित्वाथ सूर्य्यलोकं नयेत्पितॄन् ॥ ४ ॥ नमो भगवते भर्त्रे सोमभौमज्ञरूपिणे । जीवभार्गवसौरेयराहुकेतुस्वरूपिणे ॥ ५ ॥ उत्तरान्मानसान्मौनी व्रजेद्दक्षिणमानसम् । उदीचीतीर्थमित्युक्तं तत्रोदीच्यं विमुक्तिदम् । अत्र स्नातो दिवं याति स्वशरीरेण मानवः ॥ ६ ॥ मध्ये कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम् । स्नातः कनकवद्भाति नरो याति पवित्रताम् ॥ ७ ॥ तस्य दक्षिणभागे च तीर्थं दक्षिणमानसम् । अतः कनखलं लोके ख्यातं तीर्थमनुत्तमम् ॥ ८ ॥ दक्षिणे मानसे चैव तीर्थत्रयमुदाहृतम् । स्नात्वा तेषु विधानेन कुर्य्याच्छ्राद्धं पृथक्पृथक् ॥ ९ ॥ दक्षिणे मानसे स्नानं करोम्यात्मविशुद्धये । सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ॥ १० ॥ ब्रह्महत्यादिपापौघयातनाया विमुक्तये । दिवाकर करोमीह स्नानं दक्षिणमानसे ॥ ११ ॥ नमामि सूर्य्यं तृप्त्यर्थं पितॄणां तारणाय च । पुत्रपौत्रधनैश्वर्य्यायुरारोग्यवृद्धये ॥ १२ ॥ अनेन स्नानपूजादि कृत्वा श्राद्धं सपिण्डकम् । कृत्वा नत्वा च मौन्यर्कमिमं मन्त्रमुदीरयेत् ॥ १३ ॥ फल्गुतीर्थं व्रजेत्तस्मात् सर्व्वतीर्थोत्तमोत्तमम् । मुक्तिर्भवति कर्तॄणां पितॄणां श्राद्धतः सदा ॥ १४ ॥ ब्रह्मणा प्रार्थितो विष्णुः फल्गुको ह्यभवत्पुरा । दक्षिणाग्नौ हुतं

तत्र तद्रजः फल्गुतीर्थकम् ॥ १५ ॥ तस्मिन्फलति फल्वा गौः कामधेनुर्जलं मही । दृष्टेरन्तर्गतं यस्मात्फल्गुतीर्थं न निष्फलम् ॥ १६ ॥ तीर्थानि यानि सर्व्वाणि भुवनेष्वखिलेष्वपि । तानि स्नातुं समायान्ति फल्गुतीर्थं सुरैः सह ॥ १७ ॥ गङ्गा पादोदकं विष्णोः फल्गुर्ह्यादिगदाधरः । स्वयं हि द्रवरूपेण तस्माद्गङ्गाधिकं विदुः ॥ १८ ॥ अश्वमेधसहस्राणां सहस्रं यः समाचरेत् । नासौ तत्फलमाप्नोति फल्गुतीर्थे यदाप्नुयात् ॥ १९ ॥ फल्गुतीर्थे विष्णुजले करोमि स्नानमादृतः । पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये ॥ २० ॥ फल्गुतीर्थे नरः स्नात्वा तर्पणं श्राद्धमाचरेत् । सपिण्डकं स्वसूत्रोक्तं नमेदथ पितामहम् ॥ २१ ॥ नमः शिवाय देवाय ईशाय पुरुषाय वै । अघोरवामदेवाय सद्योजाताय शम्भवे ॥ २२ ॥ फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् । आत्मानं तारयेत्सद्यो दश पूर्वान्दशापरान् ॥ २३ ॥ नत्वा गदाधरं देवं मन्त्रेणानेन पूजयेत् । ओं नमो वासुदेवाय नमः सङ्कर्षणाय च ॥ २४ ॥ प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे । पञ्चतीर्थे नरः स्नात्वा ब्रह्मलोकं नयेत्पितॄन् ॥ २५ ॥ अमृतैः पञ्चभिः स्नानं [१]वस्त्राद्यलंकृतम् । न कुर्य्याद्यो गदापाणेस्तस्य श्राद्धमसार्थकम् ॥ २६ ॥ नागकूटाद्गृध्रकूटाद्युपादुत्तरमानसात् । एतद्गयाशिरः प्रोक्तं फल्गुतीर्थन्तदुच्यते ॥ २७ ॥ मुण्डपृष्ठनगाधस्तात्फल्गुतीर्थमनुत्तमम् । अत्र श्राद्धादिना सर्व्वे पितरो मोक्षमाप्नुयुः ॥ २८ ॥ प्रथमेऽह्नि विधिः प्रोक्तो द्वितीये दिवसे व्रजेत् । धर्म्मारण्यं तत्र धर्म्मो यस्माद्यज्ञमकारयत् ॥ २९ ॥ गमनाद्ब्रह्मलोकाप्तिर्भवत्येव हि नारद । मतङ्गवाप्यां यः स्नात्वा तर्पणं श्राद्धमाचरेत् ॥ ३० ॥ गत्वा नत्वा मतङ्गेशमिमं मन्त्रमुदीरयेत् । प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ॥ ३१ ॥ मयागत्य मतङ्गेऽस्मिन्पितॄणां निष्कृतिः कृता । पूर्व्वं हि ब्रह्मतीर्थं च कूपे श्राद्धादि कारयेत् ॥ ३२ ॥ तत्कूपयूपयोर्म्मध्ये सर्व्वांस्तारयते पितॄन् । धर्म्मं धर्म्मेश्वरं नत्वा महाबोधितरुं नमेत् ॥ ३३ ॥ नमस्तेऽश्वत्थराजाय ब्रह्मविष्णुशिवात्मने । बोधिद्रुमाय कर्तॄणां पितॄणां तारणाय च ॥ ३४ ॥ येऽस्मत्कुले मातृवंशे बान्धवा दुर्गतिं गताः । त्वद्दर्शनात्स्पर्शनाच्च स्वर्गतिं यान्तु शाश्वतीम् ॥ ३५ ॥ ऋणत्रयं मया दत्तं गयामागत्य वृक्षराट् । त्वत्प्रसादान्महापापाद्विमुक्तोऽहं भवार्णवात् ॥ ३६ ॥ तृतीये ब्रह्मसरसि स्नात्वा श्राद्धं सपिण्डकम् । कृत्वा सर्व्वप्रमाणेन मन्त्रेण विधि

---

१ चलद्दलाय वृक्षाय सर्व्वदा स्थितिहेतवे । बोधिसत्त्वाय यज्ञाय अश्वत्थाय नमो नमः ॥ ३१ ॥ एकादशोऽसि रुद्राणां वसूनां पावकस्तथा । नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पल ॥ ३२ ॥ अश्वत्थ यस्मात्त्वयि वृक्षराज नारायणस्तिष्ठति सर्व्वकालम् । अतः शुभस्त्वं सततं तरूणां धन्योऽसि दुःस्वप्नविनाशनोऽसि ॥ ३३ ॥ अश्वत्थरूपिणं देवं शङ्खचक्रगदाधरम् । नमामि पुण्डरीकाक्षं वृक्षरूपधरं हरिम् ॥ ३४ ॥ इति पाठान्तरम् ।

यत्सुतः ॥ ३७ ॥ स्नानं करोमि तीर्थेऽस्मिन् ऋणत्रयविमुक्तये । तत्कूपयूपयोर्मध्ये ब्रह्मलोकं नयेत्पितॄन् ॥ ३८ ॥ यागं कृत्वोत्थितो यूपो ब्रह्मणा यूप इत्यसौ । कृत्वा ब्रह्मसरःश्राद्धं सर्व्वांस्तारयते पितॄन् ॥ ३९ ॥ यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् । ब्रह्माणं च नमस्कृत्य ब्रह्मलोकं नयेत्पितॄन् ॥४०॥ नमोऽस्तु ब्रह्मणेऽजाय जगज्जन्मादिरूपिणे । भक्तानाञ्च पितॄणाञ्च तारकाय नमो नमः ॥४१॥ गोप्रचारसमीपस्था आम्रा ब्रह्मप्रकल्पिताः । तेषां सेचनमात्रेण पितरो मोक्षगामिनः ॥ ४२ ॥ आम्रं ब्रह्मसरोद्भूतं ब्रह्मदेवमयं तरुम् । विष्णुरूपं प्रसिञ्चामि पितॄणां मुक्तिहेतवे ॥ ४३ ॥ एको मुनिः कुम्भकुशाग्रहस्त आम्रस्य मूले सलिलं ददामि । आम्रश्च सिक्तः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥ ४४ ॥ ततो यमबलिं दद्यान्मन्त्रेणानेन संयतः । यमराजधर्म्मराजौ निश्चलार्थं व्यवस्थितौ ॥४५॥ ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्तिहेतवे । ततः श्वानबलिं दद्यान्मन्त्रेणानेन नारद ॥४६॥ द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ । ताभ्यां बलिं प्रयच्छामि रक्षेतां पथि सर्व्वदा ॥४७॥ ततः काकबलिं दद्यान्मन्त्रेणानेन नारद । ऐन्द्रवारुणवायव्ययाम्या वै नैर्ऋतास्तथा ॥४८॥ वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं समर्पितम् । फल्गुतीर्थे चतुर्थेऽह्नि स्नानादिकमथाचरेत् ॥४९॥ गयाशिरस्यथ श्राद्धं पादे कुर्य्यात्सपिण्डकम् । साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रितं कृतम् ॥ ५० ॥ नागाज्जनार्दनाद्ब्रह्मयूपाच्चोत्तरमानसात् । एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ ५१ ॥ पितामहं समासाद्य यावदुत्तरमानसम् । फल्गुतीर्थन्तु विज्ञेयं देवानामपि दुर्लभम् ॥ ५२ ॥ क्रौञ्चपादात्फल्गुतीर्थं यावत्साक्षाद्गयाशिरः । मुखं गयासुरस्यैतत्तस्माच्छ्राद्धमिहाक्षयम् ॥ ५३ ॥ मुण्डपृष्ठान्नगाधस्तात्साक्षात्तत्फल्गुतीर्थकम् । आद्यो गदाधरो देवो व्यक्ताव्यक्तात्मना स्थितः ॥ ५४ ॥ विष्ण्वादिपदरूपेण पितॄणां मुक्तिहेतवे । एतद्विष्णुपदं दिव्यं दर्शनात्पापनाशनम् ॥ ५५ ॥ स्पर्शनात्पूजनाद्वापि पितॄणां दत्तमक्षयम् । श्राद्धं सपिण्डकं कृत्वा कुलसाहस्रमात्मना ॥ ५६ ॥ नयेद्विष्णुपदं दिव्यमनन्तं शिवमव्ययम् । श्राद्धं कृत्वा रुद्रपदे नयेत्कुलशतं नरः ॥ ५७ ॥ सहात्मना शिवपुरं तथा ब्रह्मपदे नरः । ब्रह्मलोकं कुलशतं समुद्धृत्य नयेत्पितॄन् ॥ ५८ ॥ कश्यपस्य पदे श्राद्धी ब्रह्मलोकं नयेत्पितॄन् । दक्षिणाग्निपदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ॥ ५९ ॥ गार्हपत्यपदे श्राद्धी वाजपेयफलं लभेत् । श्राद्धं कृत्वाहवनीये अश्वमेधफलं लभेत् ॥ ६० ॥ श्राद्धं कृत्वा सभ्यपदे ज्योतिष्टोमफलं लभेत् । आवसथ्यपदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ॥ ६१ ॥ श्राद्धं कृत्वा शक्रपदे इन्द्रलोकं नयेत्पितॄन् । अगस्त्यस्य पदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ॥ ६२ ॥ क्रौञ्चमातङ्गयोः श्राद्धी ब्रह्मलोकं नयेत्पितॄन् । श्राद्धी सूर्य्यपदे पञ्च पापिनोऽर्कपुरं नयेत् ॥ ६३ ॥ कार्तिकेयपदे श्राद्धी शिवलोकं नयेत्पितॄन् । गणेशस्य पदे श्राद्धी रुद्रलोकं नयेत्पितॄन् ॥ ६४ ॥

गजकर्णतर्पणकृन्निर्मलं स्वर्नयेत्पितॄन् । अन्येषाञ्च पदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ॥ ६५ ॥ सर्व्वेषां काश्यपं श्रेष्ठं विष्णो रुद्रस्य वै पदम् । ब्रह्मणश्च पदं चापि श्रेष्ठं तत्र प्रकीर्त्तितम् ॥ ६६ ॥ प्रारम्भे च समाप्तौ च तेषामन्यतमं स्मृतम् । श्रेयस्करं भवेत्तत्र श्राद्धकर्त्तुश्च नारद ॥ ६७ ॥ कश्यपस्य पदे दिव्ये भारद्वाजो मुनिः पुरा । श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकम् ॥ ६८ ॥ शुक्लकृष्णौ ततो हस्तौ पदमुद्भिद्य निर्गतौ । दृष्ट्वा हस्तद्वयं तत्र मुनिः संशयमागतः ॥ ६९ ॥ ततः स्वमातरं शान्तां पप्रच्छ स महामुनिः । कश्यपस्य पदे दिव्ये शुक्ले कृष्णेऽथ वा करे ॥ ७० ॥ पिण्डो देयो मया मातर्जानासि पितरं वद ॥ शान्तोवाच ॥ भारद्वाज महाप्राज्ञ देहि कृष्णाय पिण्डकम् ॥ ७१ ॥ भारद्वाजस्ततः पिण्डं दातुं कृष्णाय चोद्यतः । श्वेतोऽदृश्योऽब्रवीत्तत्र पुत्रस्त्वं हि ममौरसः ॥ ७२ ॥ कृष्णोऽब्रवीन्मम क्षेत्रं ततो मे देहि पिण्डकम् । स्वैरि ण्यथाब्रवीद्दातुं क्षेत्रिणे बीजिने ततः ॥ ७३ ॥ भारद्वाजस्ततः पिण्डं कश्यपस्य पदे ददौ । हंसयुक्तविमानेन ब्रह्मलोकमुभौ गतौ ॥ ७४ ॥ रामो रुद्रपदे श्राद्धे पिण्डदानाय चोद्यतः । पिता दशरथः स्वर्गात्प्रसार्य्य करमागतः ॥ ७५ ॥ नादात्पिण्डं करे रामो ददौ रुद्रपदे ततः । शास्त्रार्थातिक्रमाद्भीतं रामं दशरथोऽब्रवीत् ॥ ७६ ॥ तारितोऽहं त्वया पुत्र रुद्रलोकमवाप्नुयाम् । हस्ते पिण्डप्रदानेन स्वर्गतिर्न हि मे भवेत् ॥ ७७ ॥ त्वञ्च राज्यं चिरं कृत्वा पालयित्वा द्विजान्प्रजाः । यज्ञान्सदक्षिणान्कृत्वा विष्णुलोकं व्रजिष्यसि ॥ ७८ ॥ पुर्य्ययोध्याजनैः सार्द्धं कृमिकीटादिभिः सह । इत्युक्त्वासौ दशरथो रुद्रलोकं परं ययौ ॥ ७९ ॥ भीष्मो विष्णुपदे श्रेष्ठे आहूय पितरं स्वकम् । श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकम् ॥ ८० ॥ पितुर्विनिर्गतौ हस्तौ गयाशिरसि शन्तनोः । नादात्पिण्डं करे भीष्मो ददौ विष्णुपदे ततः ॥ ८१ ॥ शन्तनुः प्राह सन्तुष्टः शास्त्रार्थे निश्चलो भवान् । त्रिकालदृष्टिर्भवतु चान्ते विष्णुश्च ते गतिः ॥ ८२ ॥ स्वेच्छया मरणं चास्तु इत्युक्त्वा मुक्तिमागतः । कनकेशञ्च केदारं नारसिंहं च वामनम् ॥ ८३ ॥ उदङ्मार्गे समभ्यर्च्य पितॄन्सर्व्वांश्च तारयेत् । गयाशिरसि यः पिण्डान्येषां नाम्ना तु निर्वपेत् ॥ ८४ ॥ नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः । गयाशिरसि यः पिण्डं शमीपत्रप्रमाणतः ॥ ८५ ॥ कन्दमूलफलाद्यैर्वा दद्यात्स्वर्गं नयेत्पितॄन् । पदानि यत्र दृश्यन्ते विष्ण्वादीनां तदग्रतः ॥ ८६ ॥ श्राद्धं कृत्वा सुपिण्डञ्च तेषां लोकान्नयेत्पितॄन् । सर्व्वत्र मुण्डपृष्ठाद्रिः पदैरेभिः सुलक्षितः ॥ ८७ ॥ प्रयान्ति पितरः सर्व्वे ब्रह्मलोकमनामयम् । हेत्यसुरस्य यच्छीर्षं गदया तद्द्विधाकृतम् ॥ ८८ ॥ ततः प्रक्षालिता यस्मात्तीर्थे तच्च विमुक्तये । गदालोलमिति ख्यातं सर्व्वेषामुत्तमोत्तमम् ॥ ८९ ॥ गदालोले महातीर्थे गदाप्रक्षालनाद्धरेः । स्नानं करोमि सिद्ध्यर्थमक्षयं पदमाप्नुयाम् ॥ ९० ॥

पञ्चमेऽह्नि गदालोले स्नात्वा कुर्य्यात्सपिण्डकम् । श्राद्धं पितॄन्ब्रह्मलोकं नयेदात्मानमेव च ॥ ९१ ॥ ब्रह्मप्रकल्पितान्विप्रान् हव्यकव्यादिनार्चयेत् । तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः ॥ ९२ ॥ कृते श्राद्धेऽक्षयवटे अन्नेनैव प्रयत्नतः । पितॄन्नयेद्ब्रह्मलोक मक्षयन्तु सनातनम् ॥ ९३ ॥ वटवृक्षसमीपे तु शाकेनाप्युदकेन वा । एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ९४ ॥ देयं दानं षोडशकं गयातीर्थपुरोधसे । वस्त्रं गन्धादिभिः पुत्रैः सम्यक्संपूज्य यत्नतः ॥ ९५ ॥ गयातीर्थवटे चैव पितॄणां दत्तमक्षयम् । दृष्ट्वा नत्वा च संपूज्य वटेशं सुसमाहितः ॥ ९६ ॥ पितॄन्नयेद्ब्रह्मलोकमक्षयन्तु सनातनम् । गयायां धर्म्मपृष्ठे च सरसि ब्रह्मणस्तथा ॥ ९७ ॥ गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम् । एकार्णवे वटस्याग्रे यः शेते योगनिद्रया ॥ ९८ ॥ बालरूपधरस्तस्मै नमस्ते योगशायिने । संसारवृक्षशस्त्रायाशेषपापहराय च ॥ ९९ ॥ अक्षयब्रह्मदात्रे च नमोऽक्षयवटाय वै । कलौ माहेश्वरा लोका येन तस्माद्गदाधरः । लिङ्गरूपोऽभवत्तञ्च वन्दे श्रीप्रपितामहम् ॥१००॥

इति श्रीवायुपुराणे वायुप्रोक्ते गयामाहात्म्यं नामोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ छ ॥ सनत्कुमार उवाच ॥ यज्ञञ्चक्रे गयो राजा बह्वन्नं बहुदक्षिणम् । यत्र द्रव्यसमूहानां संख्या कर्त्तुं न शक्यते ॥ १ ॥ स्थिता गयायामन्नादिपर्व्वताः पञ्चविंशतिः । प्रशंसन्ति द्विजास्तत्र देशे देशे सुपूजिताः ॥ २ ॥ नैव पूर्व्वं केप्यकुर्व्वन्न करिष्यन्ति चापरे । सिकता वा यथा लोके यथा च दिवि तारकाः ॥ ३ ॥ तथा बहुसुवर्णाद्यैरसङ्ख्यातास्तु दक्षिणाः । नैवेह पूर्वे ये केचिन्न करिष्यन्ति चापरे ॥ ४ ॥ प्रशंसन्ति द्विजास्तृप्ता देशे देशे सुपूजिताः । गयं विष्ण्वादयस्तुष्टा वरं ब्रूहीति चाब्रुवन् ॥ ५ ॥ गयस्तान्प्रार्थयामास ह्यभिशप्ताश्च ये पुरा । ब्रह्मणा ते द्विजाः पूता भवन्तु क्रतुपूजिताः ॥ ६ ॥ गयाश्राद्धविधानाय द्विजा मूर्त्ताश्चतुर्दश । तेषां वाक्यं प्रकुर्व्वीत यदि ब्रह्मा स्वयं भवेत् ॥ ७ ॥ गौतमं काश्यपं कौत्सं कौशिकं कण्वमेव च । भारद्वाजं ह्यौशनसं वात्स्यं पाराशरं तथा ॥ ८ ॥ हारितकुमारमाण्डव्यं लोकाक्षिं लोकसंमहत् । वासिष्ठञ्च तथात्रेयं गोत्राण्येषां चतुर्दश ॥ ९ ॥ गयापुरीति मन्नाम्ना ख्याता ब्रह्मपुरी यथा । एवमस्तु वरं दत्त्वा तथा चान्तर्दधुः सुराः ॥ १० ॥ गयश्च भोगान्सम्भुज्य विष्णुलोकं परं ययौ । विशालायां विशालोऽभूद्राजाऽपुत्रोऽब्रवीद्द्विजान् ॥ ११ ॥ कथं पुत्रादयो मे स्युर्विशालं चाब्रुवन्द्विजाः । गयायां पिण्डदानेन तव सर्व्वं भविष्यति ॥ १२ ॥ विशालोऽपि गयाशीर्षे पिण्डदः पुत्रवानभूत् । दृष्ट्वाकाशे सितं रक्तं कृष्णं पुरुषमब्रवीत् ॥ १३ ॥ के यूयं तेषु चैवैकः सितः प्रोचे विशालकम् । अहं सितस्ते जनक इन्द्रलोका द्विहागतः ॥ १४ ॥ मम पत्र पिता रक्तो ब्रह्महा पापकृत्तमः । अयं पितामहः कृष्ण ऋषयो येन घातिताः ॥ १५ ॥ अवीचिनरकं प्राप्तो मुक्तो

तीर्थे समुदिते स्नात्वा सावित्र्याः पुरतो नरः॥२७॥ सन्ध्यामुपास्य मध्याह्ने नयेत्कुलशतन्दिवम् । ।पिण्डदानं ततः कुर्य्यात्पितॄणां मुक्तिकाम्यया ॥२८
प्राचीसरस्वतीतीर्थे स्नात्वा चापि यथाविधि । सन्ध्यामुपास्य सायाह्ने विष्णुलोकं नयेत्पितॄन् ॥ २९ ॥ बहुजन्मकृतात्सन्ध्यालोपान्मुक्तस्त्रिसन्ध्य
कृत् । विशालायां लेलिहाने तीर्थे च भरताश्रमे ॥ ३० ॥ पादाङ्किते मुण्डपृष्ठे गदाधरसमीपतः । तीर्थे चाकाशगङ्गायां गिरिकर्णमुखेषु च ॥३१॥
स्नातोऽथ पिण्डदो ब्रह्मलोकं कुलशतं नयेत् । देवनद्यां वैतरण्यां स्नातः स्वर्गं नयेत्पितॄन् ॥ ३२ ॥ स्नातो गोदो वैतरण्यां त्रिःसप्तकुलमुद्धरेत्
सत्यं सत्यं पुनः सत्यं वैतरण्यां तु नारद ॥ ३३ ॥ एकविंशतिकुलान्याहुस्तारयेन्नात्र संशयः । या सा वैतरणी नाम नदी त्रैलोक्यविश्रुता ॥ ३४
अवतीर्णा गयाक्षेत्रे पितॄणां तरणाय वै । गोदावर्य्यां वैतरण्यां यमुनायां तथैव च ॥ ३५ ॥ देवनद्यां गोप्रचारे श्राद्धदः स्वर्नयेत्पितॄन् । पुण्
रिण्यां घृतकुल्यां मधुकुल्यां तथैव च ॥ ३६ ॥ कोटितीर्थे रुक्मिणीये पिण्डदः स्वर्नयेत्पितॄन् । त्रिरात्रोपोषणेनैव तीर्थाभिगमनेन च ॥ ३७
अदत्त्वा काञ्चनङ्गाश्च दरिद्रो जायते नरः । घृतकुल्या मधुकुल्या देविका च महानदी ॥ ३८ ॥ शिलायाः सङ्गमो यत्र मधुस्रवा प्रकीर्तिता । अयु
ताश्वमेधानां स्नानकृल्लभते नरः ॥ ३९ ॥ श्राद्धं सपिण्डकं कृत्वा पिण्डदानं तथैव च । कुलानां शतमुद्धृत्य विष्णुलोकं नयेन्नरः ॥ ४० ॥ दशा

---

१–मुक्तीकृतास्त्वया सर्व्वे व्रजामः स्वर्गमक्षयम् । सुपुत्रेण त्वया सर्व्वे ब्रह्मलोकं व्रजामहे ॥ ११ ॥ पुत्रपौत्रादिसंयुक्तो राज्यं कृत्वा दिवं व्रजन् । तत्र भोगैः सुतप्तस्त्वं तत
मोक्षमवाप्स्यसि ॥ १२ ॥ इ० पा० ।

मेधिके हंसतीर्थे चामरकङ्कटे। कोटितीर्थे रुक्मकुण्डे पिण्डदः स्वर्नयेत्पितॄन् ॥ ४१ ॥ वैतरण्यां घृतकुल्यां मधुकुल्यां तथैव च । कोटितीर्थे नरः स्नात्वा दृष्ट्वा कोटीश्वरञ्च यः ॥ ४२ ॥ कोटिजन्म भवेद्विप्रो धनाढ्यो वेदपारगः । मार्कण्डेयेशकोटीशौ नत्वा स्यात्पितृतारकः ॥ ४३ ॥ रुक्म पारिजातवने पार्व्वत्या सह शङ्करः । रहस्ये संस्थितो रेमे युगानामयुतं पुरा ॥ ४४ ॥ मरीचिः फलपुष्पार्थं पारिजातवनं गतः । दृष्ट्वा शप्तो महेशेन यस्मात्सुखविघातकः ॥ ४५ ॥ दुःखी भवेति तद्भीतो मरीचिस्तुष्टुवे शिवम् । तुष्टः प्रोवाच तं शम्भुर्वृणीष्व वरमुत्तमम् ॥ ४६ ॥ शापाद् भवतु मुक्तिर्म्मे मरीचिः प्राह शङ्करम् । भवेद्गयायां मुक्तिस्ते शिवोक्तः प्रययौ गयाम् ॥ ४७ ॥ शिलास्थितस्तपस्तेपे सर्व्वेषां दुष्करञ्च यत् । मरीचि रीश्वराच्छप्तः कृष्णत्वमगमत्पुरा ॥ ४८ ॥ तपसा दारुणेनेह स विप्रः शुक्लतां गतः । हरिरूचे मरीचिश्च वरं वृणुहि पुत्रक ॥ ४९ ॥ किमलभ्यं त्वयि तुष्टे मरीचिः प्राह माधवम् । हरशापाद्विमुक्तोऽहं शिला भवतु पावनी ॥ ५० ॥ पितृमुक्तिकरी च स्यात्तथेत्युक्त्वा दिवं गतः । दिवौकसां पुष्करिणीं समासाद्य नरः शुचिः ॥ ५१ ॥ यत्र दत्तं पितृभ्यस्तु भवत्यक्षयमित्युत । तत्र स्नातो दिवं याति स्वशरीरेण मानवः ॥ ५२ ॥ पाप्मानं प्रजहात्येष जीर्णत्वचमिवोरगः । तत्पङ्कजवनं पुण्यं पुण्यकृद्भिर्निषेवितम् ॥ ५३ ॥ पाण्डुशिला वै तत्रास्ते श्राद्धं यत्राक्षयं भवेत् । युधिष्ठिरस्तु तस्यां हि श्राद्धं कर्त्तुं ययौ मुने ॥ ५४ ॥ तत्र काले पाण्डुनोक्तं मद्धस्ते देहि पिण्डकम् । हस्तं त्यक्त्वा शिलायाञ्च पिण्डदानञ्चकार सः ॥ ५५ ॥ शिलायां पिण्डदानेन प्रहृष्टो व्यासनन्दनः । वरं ददौ स्वपुत्राय राज्यं कुरु महीतले ॥ ५६ ॥ अकण्टकन्तु सम्पूर्णं त्वं मे त्राता हि पुत्रक । स्वर्गं व्रज शरीरेण भ्रातृभिः परिवारितः ॥ ५७ ॥ दृष्टिमात्रेण सम्पूतान्नरकस्थान्दिवं नय । इत्युक्त्वा प्रययौ पाण्डुः शाश्वतं पदमव्ययम् ॥ ५८ ॥ उद्भिज्जाः स्वेदजा वापि ह्यण्डजा ये जरायुजाः । मधुस्रवां समासाद्य मृताः स्वर्गपुरं ययुः ॥ ५९ ॥ दशाश्वमेधिके हंसतीर्थे श्राद्धाद्दिवं व्रजेत् । दशाश्वमेधहंसौ च नत्वा शिवपुरं व्रजेत् ॥ ६० ॥ भरतस्याश्रमे श्राद्धान्नयेद्ब्रह्मालयं पितॄन् । मतङ्गस्य पदे श्राद्धी ब्रह्मलोकं नयेत्पितॄन् ॥ ६१ ॥ निर्म्मथ्याग्निं शमीगर्भे विधिर्विष्ण्वादिभिः सह । लेभे तीर्थन्तु यज्ञार्थं त्रिषु लोकेषु विश्रुतम् ॥ ६२ ॥ मखसंज्ञन्तु तत्तीर्थं पितॄणां मुक्ति दायकम् । स्नात्वा च तर्पणं कृत्वा पिण्डदो मुक्तिमाप्नुयात् ॥ ६३ ॥ पितॄन्स्वर्गं नयेन्नत्वा सङ्गमेऽङ्गारकेश्वरौ । गयाकूटे पिण्डदानादश्वमेधफलं लभेत् ॥ ६४ ॥ भस्मकूटे भस्मनाथं नत्वा च तारयेत्पितॄन् । त्यक्तपापो भवेन्मुक्तः सङ्गमे स्नानमाचरेत् ॥ ६५ ॥ इष्टिं चक्रेऽश्वमेधाख्यं वसिष्ठो मुनिसत्तमः । इष्टितो निर्गतः शम्भुर्वरं वृणु वसिष्ठकम् ॥ ६६ ॥ प्राहेति तं वसिष्ठोऽपि शिव तुष्टोऽसि मे यदि । वस्तव्यं चात्र देवेश तथेत्युक्त्वा शिवः स्थितः ॥ ६७ ॥

पिण्डदो धेनुकारण्ये कामधेनुपदेषु च । स्नात्वा नत्वाथ सम्पूज्य ब्रह्मलोकं नयेत्पितॄन् ॥ ६८ ॥ कर्दमाले गयानाभौ मुण्डपृष्ठसमीपतः । स्नात्वा श्राद्धादिकं कृत्वा पितॄणामनृणो भवेत् ॥ ६९ ॥ फल्गुचण्डीश्मशानाक्षिमङ्गलाद्याः समर्चयेत् । गयायाञ्च वृषोत्सर्गात्त्रिः सप्तकुलमुद्धरेत् ॥ ७० ॥ यत्र तत्र स्थिता देवा ऋषयोऽपि जितेन्द्रियाः । आद्यं गदाधरं ध्यायञ्छ्राद्धपिण्डादिदानतः ॥ ७१ ॥ कुलानां शतमुद्धृत्य ब्रह्मलोकं नयेत् पितॄन् । गया गयो गया दित्यो गायत्री च गदाधरः ॥ ७२ ॥ गया गयासुरश्चैव षड्गया मुक्तिदायकाः । गयाख्यानमिदं पुण्यं यः पठेत्सततं नरः ॥ ७३ ॥ शृणुयाच्छ्रद्धया यस्तु स याति परमां गतिम् । पाठयेद्वा गयाख्यानं विप्रेभ्यः पुण्यकृन्नरः ॥७४॥ गयाश्राद्धं कृतं तेन कृतं तेन सुनिश्चितम् । गयाया महिमानञ्च ह्यभ्यसेद्यः समाहितः ॥ ७५ ॥ तेनेष्टं राजसूयेन अश्वमेधेन नारद । लिखेद्वा लेखयेद्वापि पूजयेद्वापि पुस्तकम् ॥ ७६ ॥ तस्य गेहे स्थिरा लक्ष्मीः सुप्रसन्ना भविष्यति । उपाख्यानमिदं पुण्यं गृहे तिष्ठति पुस्तकम् ॥ ७७ ॥ सर्पाग्निचौरजनितं भयं तत्र न विद्यते । श्राद्धकाले पठेद्यस्तु गयामाहात्म्यमुत्तमम् ॥ ७८ ॥ विधिहीनन्तु तत्सर्वं पितॄणान्तु गयासमम् । यानि तीर्थानि त्रैलोक्ये तानि दृष्टानि तत्र वै । येन ज्ञातं गयाख्यानं श्रुतं वा पठितं मुने ॥ ७९ ॥ सूत उवाच ॥ सनत्कुमारो मुनिपुङ्गवाय पुण्यां कथाञ्चाथ निवेद्य भक्त्या । स्वमाश्रमं पुण्यवनैरुपेतं विसृज्य संगीतगुरुं जगाम ॥ ८० ॥ इति श्रीमहापुराणे वायुप्रोक्ते गयामहात्म्यं नाम पञ्चाशत्तमोऽध्यायः ॥५० ॥ समाप्तमिदं वायुपुराणम् ॥७॥

# श्रीवायुमहापुराणम् : श्लोकानुक्रमणी

ए

त

देवतानामिहांशेन (उ) ५.१३५
देवतानामृषीणाञ्च १.२६
देवतानामृषीणांच १.५३
देवतानामृपीणाञ्च १.१०७
देवतानाममृपीणाञ्च १.१२६
देवतानाममृपीणाञ्च ६१.१३८
देवतानाम्यः पितृभ्यश्च (उ) १२.१६
देवतास्तु तदोद्विग्ना ३२.८
देवतिर्यङ्मनुष्याणाम् १.१०४
देवत्वं पितृ वाक्येन १.१२२
देवत्वञ्च पितृत्वञ्च ३१.५८
देवदत्ताः सुतास्ताभ्यां (उ) ३७.२४०
देवदानव गन्धर्वा १२.१०
देवदानव गन्धर्वा ३५.३१
देवदानवगन्धर्वाः (उ) ८.२३०
देवदानवगन्धर्वै: ३६ ६
देवदानवगन्धर्वयक्ष- ४१.१७
देवदानव गोप्ता च ३०.१८४
देवदुन्दुभयो नेदुराकाशे (उ) ११.३५
देवदेव कृते यागे (उ) ४४.५१

देवदेवा महात्मानो (उ)] १४.२४
देवदेवो महातेजाः (उ) ३४.१६२
देवनद्यां गोप्रचारेशाद्वदः (उ) ५०.३६
देवनात् स मधुजंशे (उ) ३३.४५
देवभक्ता महात्मानो ५४.४
देवभूमिस्ततोऽन्यश्च (उ) ३७.३३८
देव भ्राजं महाभ्राजं ४२.४६
देवमानुषयोर्नेता (उ) ३५.१०
देवमित्रस्तु शाकल्यो ६०.३२
देवमित्रस्तु शाकल्यो ६०.६३
देवराज्यं बलेर्भाव्यं (उ) ३६.५५
देवर्षयः सुतास्तेषां ६१.८३
देवर्षयस्तथान्ये च ६१.९०
देवर्षगन्धर्वयुतः ४६.७७
देवर्षि भवने भृङ्गे (उ) १५.२२
देवर्षीणाञ्जनपितृ श्च (उ) १२.२५
देवलोक प्रतिष्ठाश्च ६१.८८
देवलोकाच्चयुताः ४६.९
देवलोकाच्च्युताः सर्वे ४६.१४
देवलोकाच्च्युतास्तत्र ४५.१६

देवसेनापतिस्त्वेवं (उ) ११.४६
देवसेनो महाबाहु- ३६.३३
देवस्थानेषु जायन्ते ५६.१७
देवस्य महतो यज्ञे १.११६
देवस्य महतो यज्ञे (उ) ४.२१
देवस्यानुचरास्तत्र ३०.६१
देवाकार्यादपि सूनोः २१.८५
देवाचार्यस्य महतो (उ) २२.२०
देवाज्ञया परिषदा (उ) ३०.३०
देवातिथेस्तु दायाद (उ) ३७.२२८
देवादींस्तर्पयित्वाथ (उ) ४८.७
देवानतर्पयद्यशैः (उ) ३१.६४
देवानां तुल्यधर्माणां (उ) ८.१६४
देवानां दानवानाञ्च (उ) २.४६
देवानांदानवानाञ्च (उ) ५.१
देवाश्च पितरश्चैव ८.१६३
देवानां परमं गुह्यम् (उ) २१.५६
देवानामपि देवश्च ३४.१२६
देवानामसुराणाञ्च १.१३८
देवानां हव्यवाहोऽग्निः २८.५

देवानूचेऽथ रुद्रांश्च-(उ) ४४.४७
देवान् पितॄंश्च (उ) ३७.३७५
देवान्वये देवता (उ) ३६.५८
देवान सुमनसो विद्धि (उ) ३८.९२
देवान् सृष्ट्वाथ ६.१०
देवाः पादैलंघयित्वा (उ) ४४.४८
देवापिः पौरवो राजा ३२.३६
देवापि पौरवो राजा (उ), ३७.४३१
देवावृधस्य त्वकंस्य १.१३२
देवाश्च पितरश्चैव (उ) १७.१४
देवाश्च पितरश्चैव (उ) १४.१
देवाश्च विविधा ये च ३३.२
देवासुरं यथावृत्तं ब्रुवतः (उ) ३५.६८
देवासुरगुरु द्वौ तु ५३.९३
देवासुर पितृवंश्च ८.१६८
देवासुर प्रमाणन्तद् ५६.६
देवासुर मनुष्याणां ३०.३
देवासुराद्रिद्रुमसागराणाम् ३.१२
देवासुरा नृपांश्चैव (उ) ८.१०६
देवासुरान पराभाव्य (उ) ३६.६७

देवासुराः पितृगणा ६१.१६३
देवासुरेभ्यो हीयन्ते (उ) ८.१६७
देवास्तु दायिनो यान्ति (उ) १९.९
देवास्ते पितरः सर्वे ५६.६२
देवास्त्वेतान् यजन्ते (उ) २१.८२
देविकायां वृषो नाम (उ) १५.४१
देविगच्छामहेद्रष्टुं (उ) ३६.२१
देवी क्रुद्धाब्रवीदेनान् (उ) ३५.१३१
देवी नाम विकाराणि ६.८६
देवी नाम्ना तथाकृतिः १०.१७
देवीं सरस्वतीं चैव १.१
देवी सा ह्यीन्द्रदुहिता (उ) ३५.१५२
देवेन्द्रा गुरु वो नाथा (उ) ३.२३
देवेभ्योऽति परित्रो-(उ) ४४.१७
देवेषु च महान् देवः ५.३८
देवैर्दैत्यैश्च (उ) ४७.८
देवैः परिवृतः सौम्यः ५२.५५
देवैः पीतं क्षये सोमम् ५२.५६
देवैः सार्धं ब्रह्माणैवं (उ) ४७.३२
देवैस्तै पितृभिः सार्धं ५६.६८

प

प्लावयामास तं देशं (उ) २६.५२

फ

फणा सहस्र कलितं २४.११
फलं वृक्षस्य वक्ष्यामि २१.२६
फलैः कनकसङ्काशैः ३८.२०
फल्गुचण्डीश श्मशाना (उ) ५०.७०
फल्गुतीर्थं व्रजेत्तस्मात् (उ) ४६.१४
फल्गुतीर्थे नरः स्नात्वा (उ) ४६.२१
फल्गुतीर्थे नरः स्नात्वा (उ) ४६.२३
फल्गुतीर्थे विष्णुजले (उ) ४६.२०

ब

बदरीणाञ्च स्वादुनां ३८.७०
बदरीफलमात्रं वै (उ) ३०.६३
बध्येद्वापसपङ्क्तीभिः १६.७
बन्धुपालितदायादो ३७.३२८
बन्धुवर्गकुले ये च (उ) ४८.३१
बन्धुवर्गकुले ये च (उ) ४८.३५
बभूव येन विक्रम (उ) ३७.१८७
बभूव सत्रं तत्तेषाम् २.२४
बभूवातिबलो भूय (उ) २६.५३
वभ्रवे च पिशङ्गाय (उ) ३५.१७०
वभ्रुः श्रेष्ठो मनुष्याणां (उ) ३४.१५
वभ्रून वै शवलान् (उ) ८.२३६
वर्हिकेतुः सकेतुश्च (उ) २६.१४८
वलवान् जायते ४.४६
वलवान् वै विवादोऽयं (उ) ३५.७१
वलाहकस्य जीमूतं ४६.३६
वलिर्यो नामीविख्यातो (उ) ६.८५
वलशीलादिभिस्तासाम् (उ) ८.८६
वलिनाधिष्ठितं राष्ट्रं (उ) ३५.६६
वलिः सितो महापार्श्वः (उ) ३६.८५
वलिं सुविदितं कुर्यात् (उ) १४.२२
वलिसंस्थेषु लोकेषु (उ) ३६.७४
वलेः पुत्रो महावीर्यो (उ) ७.३२
वले राज्याधिकारस्तु (उ) ३५.६०
वहिः कर्माणि ८.१८२
वहुजन्मकृतासन्ध्या (उ) ५०.३०
वहुनेत्रैर्महानेत्रैरेक ५४.४२
वहून्यहानि निःक्षिप्ते (उ) ८.३०२
वहुपादैर्महापादैरेक ५४.४१
वहुमन्याः प्रजाहीनाः (उ) ३७.४०२
वहुयाचनको लोको ५८.५३
वहुयोजनसाहस्रं ५०.३३
वहुरूपा घोररूपा (उ) ३८.१६८
वहुरूपान् विरूपांश्च ' १०.४५
वहुरूपाय चोग्राय (उ) ३५.१७३
वहुरूपाय मुण्डाय ५४.७६
वहुवर्षसहस्राणि (उ) ४४.६
वहुशो यस्यमानस्तु (उ) २२.५४
वहुहव्यस्त्वमेवाग्नौ (उ) १३.६०
वह्व्यो नार्य्यः सुरूपास्तु (उ) १८.३६
वह्वर्यश्चन्द्र इत्येषु ५३.५५
वह्लीकाश्चोष्मपाश्चैव ५६.८४
वाजयोनिर्गुणवपुर्वद्धः १६.१६
वाढं शृणु त्वं हेमाभ २५.५८
वार्हस्पत्यन्तु सुरभिर्यम १.१४३
वार्हस्पत्ये तथा शास्त्रे (उ) १७.५८
वालखिल्या क्रतोः ६१.८४
वालरूपधरस्तस्मै ४६.६६
वालाग्राण्यष्ट लिक्षा (उ) ३६.१२१
वालानाञ्चैव गोप्त्रे ३०.२१५
वालिकोवक्रकर्णश्च (उ) ७.२६
वालिशा वत यूयं (उ) ४.१४७
वाहोर्व्यंसनिनस्तस्य (उ) २६.१२६
वाह्लकार्य्याभगिन्यां (उ) ३४.६
वाह्लतो दक्षिणे चैव ५०.१३६
वाह्यतो घनतोयस्य ४६.१५४
वाह्लीकस्य विज्ञेयः (उ) ३७.२३०
विडालवदनैश्चोग्रैः ५४.३६
विना यज्ञोपवीतेन (उ) १७.३६
विन्दुश्च विन्दुसारश्च (उ) ८.३६
विभर्तिमानं मनुते ४.२८
विल्वप्रमाणैश्च शुभैः ३८.६४
वीजान्नानि तथा (उ) ३७.४००
वीभत्समशुचिञ्चैव (उ) १६.७६
वीजार्थेनस्थितास्तस्म् ८.२४
वुद्धाऽविप्यस्तया न्यायो ८.१२०
वुद्धा च सुरुचिं तं (उ) ८.१३६
वुद्धा तदनन्तरं सोऽय (उ) ३६.१६
वुद्धान् वुद्धतमांश्चैव १०.५०
वुद्धाय चैव शुद्धाय (उ) ३५.१७६
वुद्धिज्ञानेन च प्राणाः (उ) ४२.३८
वुद्धिपूर्वं प्रवर्त्तन्ते ६.६१
वुद्धिपूर्वंम्भगवता ५३.१२०
वुद्धिर्मनश्च लिङ्गाख्य (उ) ४०.२१
वुद्धिर्विवर्त्तमानस्य ५६.७४
वुद्धीन्द्रियाणि पञ्चैव ४.५४
वुद्धे वोधसुतश्चापि १०.३५
वुद्ध्यातिशययुक्तश्च ५६.१४
वुधात् सा जनयित्वा (उ) २३.१८
वुधेनान्तरमासाद्य (उ) २३.१७
वुधो वेगवतः पुत्रः (उ) २४.१५
वुध्यते पुरुषस्त्वाम ४.३१
वृको वृकाश्वो वृकजिद् (उ) ३४.२४३
वृक्षाश्चैवगताः शाखा ४.११६
वृहती नर्तकोन्येयी (उ) ३४.२४६
वृहन्त्वाच्च स्मृतो ब्रह्मा ५.३६
वृहन्त्वाद्वृंहण त्वाच्च ४.२६
वृहद्दुत्थः शारद्वांय ५६.६३
वृहद्वलान्त संक्षेपाद् १.१२६

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| सा तथैव महागन्धा | ३५.३९ | सान्त्वयित्वा च राजानम् | २.२३ | सारिकाभिर्मयूरैश्च | ३६.२ | सितलम्बधरो दीनो (उ) | ३१.३३ | सिनीवाली कुहूश्चैव | २८.१४ |
| सा तमो बहुला | ९.६ | सापि कृच्छ्रेण महता (उ) | ११.३१ | सार्द्धं क्रोशद्वयं मानं (उ) | ४३.२६ | सितेरजा शुचिमती | ४५.१०१ | सिनीवाली प्रमाणेन | ५६.५२ |
| सा तु गत्वा कुरून् (उ) | २२.१३ | सा प्राञ्जलिरुवाचेदं (उ) | २८.४२ | सार्द्धं विश्वभुजा चैव | ५७.६२ | सिद्धचारण सङ्कीर्णः (उ) | १५.११५ | सिन्धु सागर सम्भेदे (उ) | १५.५५ |
| सा तु देवी सती पूर्वं | ३०.७१ | सा भावयति भूतानि (उ) | ११.६१ | सालिमञ्जरिसरश्च | ६१.४७ | सिद्धक्षेत्रं तु वै जुष्टं (उ) | १५.८० | सिन्धोरुत्तरपर्यन्तं (उ) | १६.७० |
| सा तु भर्तुर्हिता (उ) | २९.१३१ | सामगानान्तु सर्वेषां | ६१.४८ | सावतीर्णा गयाक्षेत्रे (उ) | ५०.३५ | सिद्धक्षेत्र मृषि श्रेष्ठा (उ) | १५.१४ | सिसृक्षमाणा विश्वं हि | २.५ |
| सा तु भार्या भगवतो (उ) | २२.३३ | सा मण्डले समुद्रस्य | ४७.५३ | सावर्णस्य तु ते पुत्राः (उ) | ३८.८५ | सिद्धक्षेत्रे महापुण्ये | २३.१७२ | सिंहनाद प्रमुञ्चते | ३०.१४८ |
| सात्वती रूप सम्पन्ना (उ) | ३४.१ | सामभिः सामवेदस्य | ६०.२० | सावर्णस्य प्रवक्ष्यामि (उ) | ३८.९ | सिद्ध चारणगन्धर्व | ३४.११ | सिंहला रोमशाश्चैव | ८.२९८ |
| सा त्वपश्यद्विमानानि (उ) | ११.५१ | सामवेदस्य वृत्तादयः (उ) | ४.२६ | सावर्णाश्चावचकीर्त्यन्ते | १.११२ | देवर्षि गन्धर्वयक्ष | ४०.२६ | सिंहाः केनापराधेन (उ) | ३६.२६४ |
| सा त्वं वचनमासाद्य | १.१६३ | सा मातुरुदरस्था (उ) | ३४.१०६ | सावर्णाः पञ्च रौच्यश्च (उ) | १.४ | सिद्धात्मानस्तु यें पूर्वम् | ८.१३२ | सिंहि कायामथोत्पन्ना (उ) | ७.१९ |
| सात्त्विकश्चापि संसारो | १४.३७ | सामानि जगती | ९.४६ | सावर्णिके पुनस्तुभ्यं (उ) | ३६.५२ | सिद्धात्मानो मनुष्यास्ते | ६.५२ | सिंहो वा कुञ्जरो वापि | १०.७८ |
| सात्त्विकी पौरुषी या (उ) | ५.१०२ | सामान्यानि तु कर्माणि | ८.१६४ | सावर्णिना च सांमुद्री | १०.३६ | सिद्धानां प्रीतिजननैः (उ) | १५.१०४ | सीता चक्षुश्च सिन्धुश्च | ४७.३९ |
| सा दिवं पृथिवीञ्चैव | १०.९ | सामान्य विभवाः सर्वे | ४५.४८ | सावद्यं निरवद्यं च | १३.५ | सिद्धार्थकानां कल्केन (उ | १६.५४ | सीतानाम महापुण्या | ४२.१७ |
| साधाय शरभायैव (उ) | ३५.१८० | सामान्यविपरीतार्थैः | ५८.१६ | साश्वं हुतं प्रसेनं तं (उ) | ३४.३९ | सिद्धार्थं कैः कृष्णतिलैः (उ) | १६.४२ | सीदन्ति ते सागरे (उ) | २१.६१ |
| साध्यमानस्तपसोऽरण्ये | ५९.२४ | सामान्येषु च धर्मेषु | ५९.२१ | सा सा विद्या स्मृता (उ) | ३७.४१४ | सिद्धार्थं सूर्यं तेजश्च (उ) | ८.१४९ | सीरध्वजात्तु जातस्तु (उ) | २७.१९ |
| साधु साधु महाप्राज्ञ (उ) | ४१.१०५ | सामुद्रीषु समुद्रेषु | ६.२४ | सा सितोदाद्विनिष्क्रान्ता | ४२.४८ | सिद्धा हि विप्ररूपेण (उ) | १०.७४ | सुकाला नाम पितरो (उ) | ११.८९ |
| साध्या पुत्रांश्च धर्मस्य (उ) | ५.४ | साम्ना प्रसूयमानेन (उ) | ८.२०४ | सा सिद्धिकाम्यथैतानि | ५९.७५ | सिद्धा ह्यवसना नाम | ३९.५२ | सुकुमारं तृतीयन्तु | ३३.१८ |
| साध्या विद्याधरा | ५५.४१ | साम्ना संपूज्य ता कन्या | २५.४६ | साहाय्यं मम कार्यार्थं | २५.७८ | सिद्धैरूपरपृष्टजलं | ४१.७२ | सुकुमारस्य पुत्रस्तु (उ) | ३०.७३ |
| साध्याश्च वसवो (उ) | ५.८१ | सायं प्रातर्मध्याह्ने नमः | २०.३१ | सा हि सत्यवती पुण्या (उ) | २९.८५ | सिद्धैश्चर्षि समाकीर्णं | ३७.१४ | सुकेतु तनयश्चापि (उ) | ३०.७१ |
| साध्योनारायणश्चैव | २३.९५ | सारस्वतः सरस्वत्यां (उ) | ८.९१ | सिकतापर्वतमरून् | ४७.५८ | सिद्धैस्तु सेविता (उ) | १५.७९ | सुकेतोरपि धर्मात्मा (उ) | २७.८ |
| साध्वी विप्रियकर्त्री (उ) | १९.१५५ | सारस्वताभिधाने (उ) | ४१.६१ | सिकत्याय प्रसन्नाय (उ) | १५.१८६ | सिद्धो प्रत्यक्ष धर्माणो (उ) | ३७.७२ | सुखतुलाजास्तथा पूषाः (उ) | १९.४८ |

# श्रीवायुमहापुराणम् समाप्तम्